# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]




३४ वर्षे
१-२ अङ्कौ

ज्येष्ठ-भाद्रपदपूर्णिमे
मई, सितम्बर, १९७९ ई०

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]

सम्पादकः
डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
अनुसन्धानसंस्थाननिदेशकः

उपसम्पादकः
डॉ० हरिश्चन्द्रमणित्रिपाठी
प्रकाशनाधिकारी




३४ वर्षे
१-२ अङ्कौ

वार्षिकमूल्यम् १० रूप्यकाणि
संयुक्ताङ्कयोः ६ रूप्यकाणि

# सम्पादकीयम्

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्यानुसन्धानपत्रिकेयं 'सारस्वती सुषमा' नाम त्रयस्त्रिंशं हायनं समाप्य चतुस्त्रिंशे हायने चरणं विन्यस्यतीति सामोदं व्याहारः। संयुक्तेऽस्मिन्नङ्कद्वयात्मके पुटे विलसन्ति पञ्चदशामृतनिःस्यन्दस्पन्दाः। तत्र व्याकरणन्यायज्योतिर्विज्ञानयोगपुराणसाहित्यादिविषयका विविधा आस्वादा आस्वादनीयतां भजन्ते। तात्पर्यटीकासहितस्य तर्कामृतचषकस्य परिचयः पाठकमनांसि नूनं प्रह्लादयिष्यति।

स्फोटविवेचनम्, वाक्यार्थस्य प्रतिभारूपत्वम्, वैयाकरणानां शब्दसृष्टिप्रक्रियाविमर्शः, धात्वर्थवादविमर्शश्चेति व्याकरणशास्त्रनिबन्धाः कमप्यपूर्वं प्रकाशकिरणं वितन्वते। इह प्राचीने भारते विद्यमानेषु बहुषु विज्ञानेषु ज्योतिषमन्यतममनन्यसाधारणं भृशं लोकानुपकुरुते स्म। अधुनापि विज्ञानप्रधानेऽस्मिन् युगे भारतीय ज्योतिषं भारते मूर्धन्यायते। तदीयं क्षेत्रमिदं पाश्चात्त्येन नक्षत्रविज्ञानेन नाक्रान्तम्। पूर्वतोऽपि शास्त्रेणानेन देशान्तरेषु नवाविष्कृतविधयः सादरमङ्गीकृताः। तेन तदा साद्यस्कत्वमस्य प्रतिपन्नम्। साम्प्रतं सा परिपाटी शैथिल्यमुपगता। इह ज्योतिर्विज्ञानतलस्पर्शिधिषणस्य डॉ० श्रीकृष्णचन्द्रद्विवेदिनः 'आधुनिकं ज्योतिर्विज्ञानम्' इत्याख्यो निबन्धो नूनं संस्कृतवाङ्मयं समृध्यति। तत्रैव 'प्राचीनभारतीयवाङ्मये सापेक्षवादः' इति निबन्धे डॉ० नागेन्द्रपाण्डेयः प्राचीने भारतीयवाङ्मये सापेक्षवादसिद्धान्ताः पूर्वत एव विद्यन्ते स्मेति सोहापोहमुपपादनाय प्रयतते। एवं सत्यपि यदि आइन्स्टाइनमतं जगति प्रथमतः प्रथितम्, प्रथतां नाम तत्।

योगदर्शने ज्ञानस्वरूपप्रतिपादको निबन्धः खलु गवेषणाप्रधानः। पुराणलक्षणस्य श्रीमद्भागवते सङ्गतिनिरूपणविषयको निबन्धो दृष्टिमाकर्षयितुमलं विदुषाम्। गुमानिकवेः साहित्यसमीक्षणम् इति लेखस्तदीयसमग्रप्रकाशितकृतीनां तत्प्रतिभायाश्च परिचयमुपढौकते। आदिकवेर्महाकविभारवेश्च नायकसंघटनेति निबन्धनप्रयासो भव्योऽभिनवो नाम। 'भवभूतेः सामाजिकं चित्रणम्' इत्यत्र भवभूतिकृतीनामाधारेण तदानीन्तनः समाजश्चित्रितः। सांख्यदर्शनं योगदर्शनं च लोके प्रख्यातम्। योगतन्त्रं तथा न प्रसिध्यतीति डॉ० रामजीमालवीयस्य योगतन्त्रनिरूपणप्रयास इह साधीयान्। पर्यन्ते वीरशैवधर्मदर्शनसिद्धान्तप्रतिपादकस्य सिद्धान्तशिखामणिग्रन्थस्य समयनिर्धारणाय हिरेमठोपाह्वेन श्रीचन्द्रशेखरशर्मणा प्राच्यपाश्चात्त्योभयग्रन्थराशिं निर्मथ्यान्तरङ्गबहिरङ्गपरीक्षणपूर्वकं प्रायासि। इत्थमङ्कद्वयात्मकोऽयं सारस्वतसुधापुटो विद्वत्तल्लजानामामोदाय जिज्ञासूनां च ज्ञानवर्द्धनाय सम्पत्स्यत इति बाढं प्रत्येमि।

पूर्ववर्तिनीवाङ्क इहापि लघुग्रन्थप्रकाशनेन पत्रिकेयमुपसंह्रियते। विश्रुतकीर्तीनां गणकशिरोमणीनां स्वनामधन्यानां म० म० सुधाकरद्विवेदिमहाभागानां चिरादनुपलब्धं 'दीर्घवृत्तलक्षणम्' इह लघुग्रन्थतया प्रकाशमानीयते ज्योतिर्विद्यातल्लजेन डॉ० कृष्णचन्द्रद्विवेदिना सम्पादितम्। विदुषां परीक्षार्थिनां जिज्ञासुजनानां च भृशमुपकारकमिदं सेत्स्यतीति दृढं प्रतीमः।

## चतुर्थं विश्वसंस्कृतसम्मेलनम्

अन्ताराष्ट्रियसंस्कृतपरिशीलनपरिषदा (International Association of Sanskrit Studies) १९७७ तमे खीस्ताब्दे तृतीयं विश्वसंस्कृतसम्मेलनं समायोजितमासीदिति भवद्भिः 'सारस्वती सुषमा' पत्रिकाया द्वात्रिंशिवर्षस्य १-२ अङ्कयोः संमिलितयोः समधीतम्। १९७९ तमे वत्सरे भाविनश्चतुर्थविश्वसंस्कृतसंमेलनस्यायोजनं जर्मनगणराज्यस्य सांस्कृतिक्यां राजधान्यां 'वाइमार्' इत्याख्यायां भवितेति तत्र जर्मनगणराज्यीयसंस्कृतपरिशीलनपरिषदध्यक्षस्य डॉ० डब्लू-मार्गेनराथमहोदयस्य प्रस्तावे सभापतिना समुद्घोषितम्। संमेलनस्य तत्परता वस्तुतो वर्षद्वयावधि पूर्णप्रयासेन समभूदिति सम्मेलनावसरिकया भव्यया व्यवस्थया, नाटकीयमञ्चनप्रक्रियया, प्रकाशनद्वयाऽऽविष्क्रियया च सहजतोऽनुमातुं शक्यते स्म। साम्यवादिनि देशे संस्कृताध्ययनं प्रति भृशमभिरुचिः, निष्ठा, समादरश्च प्रकटीभविष्यन्तीति पेरिससमायोजनमभिलक्ष्य प्रतिनिधिभिर्मनागपि न विश्वसितम्।

जर्मनीदेशस्य संस्कृतप्रेम विश्वविदितं खलु। तस्यामेव भूमौ यद्यपि हाले-बर्लिनविश्वविद्यालययोः विल्हेल्म हंबोल्टेन, फ्रान्त्स्बापेन, श्लीगलेन, रोजेन स्टेन्त्जलरेण, कूनबार्थलिंकेन, बेवरेण, बुर्नूफेन, थियोदोरेण, क्रिश्चियन् ओल्डेनबर्गेण, हेनरिख त्सिमरेण, रिचार्ड पिशलेन, हेनरिख लूडर्सेन, क्रिश्चियन् बार्तोलोमेमहोदयेन, रिचार्डस्मिथेन, डेल्ब्रूकेण, गेल्डनरेण चेत्यादिभिः संस्कृतसेवकैः संस्कृतस्य चिरस्मरणीयं सेवाकार्यमनुष्ठितमासीत्, तथापि संस्कृतं धर्मभाषेति मन्यमानानां मनसि साम्यवादिप्रायं जर्मनगणराज्यं प्रति शङ्काङ्कुरः प्ररोहति स्म। संस्कृतं प्रति पूर्वमुक्ता समादरस्थितिरविभाजिते जर्मनदेशेऽविद्यत। किन्तु निराधार आसीत् तेषां संशयः।

मईमासस्य द्वाविंशे दिनाङ्के यदाऽहं बर्लिननगराद् महाकविगेटेजन्मभूमि 'वाइमार' इत्याख्यां प्राप्तुकामः शोनफील्ड (=शोभनक्षेत्रम्) इत्यभिधं लौहमार्गस्थलमुपेतः, तदा भारतीयां संस्कृतिं संस्कृतं च प्रति जर्मनदेशस्यानुरागो विशालं हृदयं च क्रमशः स्पष्टतामायाताम्। यद्यपि पूर्वोक्तस्य लौहमार्गस्थलस्याऽऽसन्द्यादीनां सम्यक् स्थितिर्नासीत्, तथापि जर्मनीदेशीयानां सहृदयता निकामं तत्प्रतीपतामावहत्। भारतमागतोऽस्मीति वाइमारप्राप्तिसमनन्तरमेव प्रत्यगाम्।

**संस्कृतप्रकाशनेष्वभिरुचिः**

मईमासस्य त्रयोविंशे दिनाङ्के प्रातः सार्धाष्टवादनवेलायां वाइमारशालायां (Weimar hall) संसारस्य विविधेभ्यो देशेभ्यः समागताः प्रतिनिधयः समवैतुं मिथश्च परिचेतुमुपक्रान्ताः। तत्र जर्मनीदेशीयानि कानिचन च भारतीयानि प्रकाशनानि समायोजितानि। सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य प्रकाशनानि प्रतिनिधीनां ध्यानमाकर्ष्टुं विशेषतः प्राभवन्। संस्कृतजर्मनकोशः, हिन्दीजर्मनकोशः, मुद्राराक्षसस्य च सचित्रा मञ्चनपुस्तिकाऽपि समाकर्षकप्रकाशनानि मतानि।

सम्मेलनोद्घाटनम्

प्रातर्नववादनवेलातो मध्याह्ने द्वादशवादनवेलां यावत् सम्मेलनस्योद्घाटन-कार्यक्रमः प्रचलितः। तत्रादौ परिषदध्यक्षेभ्यो डॉ० वे० राघवन्महोदयेभ्यः प्रतिनिधिभिः श्रद्धावाक्प्रसूनानि समर्पितानि। तन्निधनेन परिषदोऽपूरणीया क्षतिर्व्याहृता। उपसभापतिः डॉ० बेन्दर् ( फिलाडेल्फियादेशीयः ), डॉ० ओ बोटो ( तारिन् ), डॉ० जी० एम्० बोंगार्द ( लेविन्, मास्को ), डॉ० जे० फिलियोजा ( पैरिस ), महासचिवो डॉ० स्टर्नबाख् ( पैरिस ), कोषाध्यक्षा श्रीमती सी० कैला ( पैरिस ), डॉ० डब्लू० मार्गेनराथश्च मञ्चे समुपतिष्ठन्ते स्म। श्रीबेन्दरेण, फिलियोजामहोदयेन, श्रीबोंगार्देन, डॉ० स्टर्नबाखेन च क्रमशः स्वस्वनिबन्धाः पठिताः। मध्याह्ने द्वादशवादनवेलायां भारतीयसंस्कृतिप्रदर्शिन्या उद्घाटनमभूत्। अपराह्णेऽन्ताराष्ट्रियसंस्कृतपरिशीलन-परिषद उपवेशने डॉ० आर्० एन्० दाण्डेकरमहोदयो डॉ० वे० राघवन्महोदयस्य रिक्ते स्थाने सभापतिर्निर्वाचितः। संमेलनस्य समग्रः कार्यनिर्वाह आङ्गल-फ्रेञ्च-जर्मन-रसन् इत्याख्याभिश्चतसृभिर्भाषाभिः प्रावर्तत। चतसृणामेव भाषाणां मिथोऽनुवादव्यवस्था कृताऽऽसीत्। सर्वे प्रतिनिधयः स्वाभीष्टभाषानुवादं श्रोतुं शक्नुयुरिति धिया मूर्द्धध्वनि-यन्त्राणाम् (Head Phones) सम्यक् प्रबन्धो विहितः। पैरिसनगर्यां समायोजिते संमेलने नेयं व्यवस्था दृष्टा।

निबन्धपाठो विमर्शश्च

चतुर्विंशे दिनाङ्के निबन्धानां वाचनम्, तत्र टिप्पण्यो विचारविमर्शाश्च समारब्धाः। सम्पूर्णा निबन्धा नवसु विभागेष्वित्थं वर्गीकृता अभूवन्—

१. संस्कृतपरिशीलनं मानवताविज्ञानं च;

२. प्राचीनभारते राज्यं समाजश्च;

३. भारते संस्कृतस्य तत्संस्कृतेश्च भूमिका;

४. संस्कृतस्य तत्संस्कृतेश्च विश्वस्मिन् स्थितिः;

(क) संस्कृतस्य तत्संस्कृतेश्च मध्य एशिया-भूभागे प्रभावः;

(ख) संस्कृतस्य तत्संस्कृतेश्च दक्षिणपूर्वदिक्स्थित एशियाभूभागे प्रभावः;

(ग) संस्कृतस्य तत्संस्कृतेश्च यूरपदेशे प्रभावश्च।

५. भाषा

(क) संस्कृतस्यैतिहासिकं व्याकरणम्;

(ख) वेदानां संस्कृतस्य च वर्णनात्मकं व्याकरणम्;

(ग) वेदानां संस्कृतस्य च शब्दावली;

(घ) मध्यकालिक्य इण्डो-आर्यभाषाः;

(ङ) भारतीयं व्याकरणं च।

६. धर्मो दर्शनं च

(क) वेदाः;

(ख) बौद्धं जैनं च दर्शनम्;

(ग) हिन्दुत्वम्;

(घ) दर्शनम्;

७. आयुर्वेदः;

८. काव्यानि;

(क) महाभारतं रामायणं पुराणानि च;

(ख) काव्यानि नाटकानि च;

(ग) कथासाहित्यम्;

(घ) साहित्यशास्त्रं च।

९. पुरातत्त्वं कलेतिहासश्चेति।

मुद्राराक्षसनाटकाभिनयः

चतुर्विंशे दिनाङ्के सायं सार्द्धसप्तवादनवेलातो नववादनं यावत् केरलीयनम्बूदरीवैदिकजनसमनुष्ठितम् 'अग्निचयनहोत्रम्' आश्रित्य विनिर्मितश्चलच्चित्रपटः एफ् स्टालमहोदयेन प्रदर्शितः। वेदमन्त्रा अपि ध्वनिपट्टिकाङ्किताः श्राविताः। मन्ये, बहवो भारतीयाः प्रतिनिधयोऽपि प्रथमतोऽग्निचयनहोत्रमिदं पश्यन्ति स्म। पञ्चविंशे दिनाङ्के वाइमारनाट्यशालायां सायं सार्द्धसप्तवादनवेलातो नक्तमेकादशवादनवेलां यावद् विशाखदत्तकृतमुद्राराक्षसनाटकं जर्मनीदेशीयैरभिनेतृभिः सफलमभिनीतम्। कृत्स्ना सज्जा प्रस्तुतिश्च भारतीये आस्ताम्। पैरिसलेपनिर्मितं भारतीयं मन्दिरत्रयं रङ्गमञ्चे प्रदर्शितमासीत्। तेष्वन्यतमे देवालये भगवतो वराहस्य मूर्तिर्दृश्यते स्म। अभिनेतॄणामागमनं प्रतिगमनं च मृदङ्गदुन्दुभिझर्झरादिध्वनिना संकेत्यते स्म। भारते वर्षे संस्कृतनाटकानामेतादृशोऽभिनयः खलु दुर्दर्शः। दर्शका नाटकस्य हृदयावर्जकाभिनयेन भृशमाह्लादिताः सन्तो नाटकाभिनयपर्यवसाने पञ्चक्षणान् त्रिस्तालीवादनमकुर्वन्। परतो दर्शका अभिनेतृभिः नाट्यशालायां प्रश्नोत्तराण्यपि व्यधुः।

पाणिनीयधातूनां विचारः

षड्विंशे दिनाङ्के 'केवलं यूरोपीयासु पारसीकभाषासु च प्रयुक्तानां पाणिनीयानां धातूनां विचारः' इत्याख्यस्य निबन्धस्य सारं संस्कृतेन प्रस्तुत्य प्रश्नोत्तरार्थं वाचनमाङ्गलभाषया व्यधाम्। पाणिनीये धातुपाठे पाठभेदैः सह प्रायो धातूनां सहस्रद्वयी राजते। विलियम् ड्वाइट् ह्विट्नीमहोदयेन अमेरिकीयदर्शनपत्रिकायाम् ( चतुर्दशे खण्डे १७१-१९७ पृ० ) केवलं नवशतसंख्याकानामेव धातूनां प्रयोगा वैदिके लौकिकसंस्कृते च वाङ्मये लभ्यन्त इति तावन्त एव धातवः प्रामाणिकाः, नेतरे इति प्रत्यपादि,

तेषामेकादशशतसंख्याकानां प्रयोगानुपलम्भात्। प्रसङ्गेऽस्मिन् गेअर्ग-बूलरमहोदयेन डब्लू० जेड्० के० एम्० इत्याख्यायाः पत्रिकाया अष्टमे खण्डे (१७-४२; १२२-१३६ पृष्ठेषु) समसाधि यत् संस्कृतवाङ्मयेऽनुपलब्धप्रयोगाणां बहूनां धातूनां प्रयोगाः प्राकृतापभ्रंशप्रादेशिकभाषासु दृश्यन्ते। आर्० ओतो फ्रैंकमहोदयेन तत्रैव पत्रिकायां पालिभाषायां केषाञ्चित् तेषां संस्कृतधातूनां प्रयोगा दर्शिता ये संस्कृतवाङ्मयेऽनुपलब्धप्रयोगाः सन्ति। संस्कृतं भारतस्यैव भाषा बभूवेति तस्य भूयानंशः परवर्तिनीषु पालिप्राकृतापभ्रंशादिषु साम्प्रतिकीषु च प्रादेशिकीषु भाषासु विलीनः स्यादिति धिया तत्र संस्कृतधातुप्रयोगान्वेषणप्रयासः कृतः। किन्तु तत्राप्यप्राप्तप्रयोगा धातवस्त्रिषु लोकेषु सप्तद्वीपमत्यां वसुन्धरायां चान्वेष्टव्या इति पतञ्जलिनिर्दिष्टः पन्थाः केनापि विद्वत्तल्लजेन नानुसृतः।

उक्तनिबन्धस्य रचयित्रा मया यूरोपीयासु पारसीकासु च भाषासु प्रयुक्ताः पाणिनीयानां धातूनामेतादृशाः प्रयोगा विनिर्दिष्टाः, ये खल्वेतावच्चिरं कस्यामपि भारतीयभाषायां नासाद्यन्ते। पाणिनिना न कदापि ग्रीक्-लैटिन्-अवेस्ता-लिथुआनिया-जर्मन-प्रभृतयो भाषाः समधीता आसन्; कथं पुनस्तासां प्रयोगाणां धातुत्वेन पाणिनीयधातुपाठे संग्रहो व्यधायि? इत्ययं प्रश्नोऽपि निबन्द्धा विश्वसंस्कृतसम्मेलने समुपस्थापितः। वस्तुतः प्रागैतिहासिके काले संस्कृतभाषाव्यवहारो विश्वमभिव्याप्नोति स्म। तस्याः केचन दुर्लभप्रयोगव्यवहारा भूभागस्य कासुचन भाषासु साम्प्रतमपि प्रचलन्ति।

सप्तविंशे दिनाङ्के रविवासरे प्रतिनिधिभिर्यात्रिकमृत्तरयानेन पर्वतस्थितं 'डोनबुर्ग' इत्याख्यं रमणीयं स्थानं प्रति यात्रा व्यधायि। न तदीयं रामणीयकं कश्मीरेभ्यो न्यूनतरम्। अधित्यकायां निर्मितेषु सप्तदशशताब्दीकेषु भवनेषु दर्शनीयान्यैतिहासिकानि वस्तूनि, चित्राणि च संगृहीतान्यासन्। इह गेटेकविना कञ्चित् कालं न्युषितम्। वाइमारनगरे गेटे-शिलरभवनानि निरीक्षितानि। अभिज्ञानशकुन्तलस्य महाकविगेटेकृतः संस्कृतानुवादो मूलपाण्डुलिपिरूपतया तत्र संगृहीतो विलोकितः। तदीयं सम्पूर्णं साहित्यम्, संग्रहालयः, पुस्तकालयश्च दर्शनार्हाः। पञ्चाशत्संख्याकेषु प्रकोष्ठेषु, गेटेमहाकविसंगृहीतानि विविधविषयकाणि वस्तूनि निरीक्ष्य चकितचकितोऽहमभूवम्। 'कवयः किं न पश्यन्ति' इत्यस्य स्थाने 'कवयः किं न गृह्णन्ति' इतीह चरितार्थ्यते स्म।

अष्टाविंशे दिनाङ्के सोमवासरे 'बूखेन् वाल्थ्' नामकं स्मारकं प्रतिनिधिभिर्विलोकितम्। नक्तं सार्धाष्टवादनवेलायां गेअर्ग फ्रीड्रिख् हेण्डेलद्वारा प्रवर्तितं सामूहिकं (कंसर्ट) संगीतम् आयोजितम्। एकोनत्रिंशे दिनाङ्के मङ्गलवासरेऽपराह्णे गीतगोविन्दस्य पदानि कानिचन च नूतनान्यपि गीतान्यभूवन्। सायं सार्धषड्वादनवेलायां जर्मनगणराज्यस्योच्चशिक्षामन्त्रिणाऽऽचार्येण हंसजोशिमबूम-महोदयेन 'एलीफेण्ट' इत्याख्ये निवासभवने संस्कृतप्रतिनिधीनां स्वागताय भव्यभोजनोत्सवः समायोजितः।

भारतस्य दिल्ली-जयपुर-पूना-इन्दौर-पटना-कलकत्ता-गौहाटी-हैदराबाद-दरभंगा-मेरठ-मद्रास-तिरुपति-वर्दवान-वाराणसी-होशियारपुरप्रभृतिभ्यः स्थानेभ्यः समागतैः

प्रायो विंशतिसंख्याकैः प्रतिनिधिभिः सम्मेलनमलङ्कृतम्। यूरोपीयदेशेषु कर्मनिरताः षड् भारतीया अपि तत्रोपस्थिता अभूवन्। आस्ट्रिया-अमेरिका-आस्ट्रेलिया-इटली-इण्डोनेशिया-रूस-फ्रांस-हंगरी-उभयजर्मनी-पोलैण्ड-श्रीलङ्का-ब्राजील-स्वीडन-कनाडा-जापान--डेन्मार्क-हालैण्ड( नीदरलैण्ड )–मंगोलिया–रूमानिया–मैक्सिको-वेल्जियम-थाईलैण्ड-फिनलैण्ड-ग्रेटब्रिटेन-यूगोस्लाविया-चेकोस्लाविया-स्विट्जरलैण्ड-प्रभृतिभ्यो देशेभ्यः समागतैः प्रायः शतत्रयसंख्याकैः प्रतिनिधिभिरुपेत्य विविधविषयानधिकृत्य निबन्धा वाचिताः प्रश्नोत्तराणि च कृतानि। अन्तिमे त्रिंशे दिनाङ्के सभापतेर्भाषणस्य प्रतिनिधीनां च धन्यवादभाषणस्यानन्तरं सम्मेलनं समाप्तमुद्घोषितम्। तत्र पारितेषु प्रस्तावेषु मुख्याविमौ—(१) भारतस्थितानां हस्तलेखानां सर्वेक्षणम्, (२) एकाशीत्युत्तरैकोनविंशतिशततमे ख्रीस्ताब्दे पञ्चमविश्वसंस्कृतसम्मेलनस्य वाराणस्यामायोजनं चेति।

एतस्य चतुर्थविश्वसंस्कृतसम्मेलनस्यावसरे जर्मनगणराज्येन (१) दुर्गा; (२) महावीर, (३) टोडी रागिणी, (४) आसावरीरागिणी चेति चतस्रो डाकचिटिकाः प्रकाश्य भारतीयसंस्कृतिं प्रति स्वकीया निष्ठा प्रदर्शिता। वर्लिनस्थित-हम्बोल्टविश्वविद्यालयस्य एशियाकविज्ञानसंस्थानेन सम्मेलनस्यावसरे (१) संस्कृत स्टडीज् आउट साइड इण्डिया (भागद्वये), (२) संस्कृत स्टडीज् इन् दी जी० डी० आर् (भागद्वये) चेति गौरवास्पदं ग्रन्थद्वयं प्रकाश्य संस्कृतप्रेमा परिचायितः। यूरोपीयदेशानां सुधियः संस्कृतसागरं मथ्नन्त आसते, तत्रत्यानि च शासनानि तत्राभिरुचिं प्रकाशयन्ति। तौल्येन परीक्षणे कृते सति संस्कृतं स्वगृह एव समुपेक्षितं सीदति। भारतीयाः संस्कृतकोविदाः जर्मनीदेशे संपाद्यमानानुसन्धानकार्यप्रणालीपरिचयाय विविधशाखाकान् स्वनिर्देश्याननुसन्धातॄन् इह नानयन्तीति तत्रत्येन पत्रकारेण वार्त्ताप्रसङ्गेऽहं निवेदितः। मन्ये, मिथः सम्पर्केण संस्कृतानुसन्धानकार्याणि लप्स्यन्ते काञ्चिन्नूतनां दिशम्।

वाराणस्याम्
गणेशचतुर्थ्याम् २०३७ वै०
(२३-१-१९८१ ख्रै० शुक्र०)

भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
निदेशकः
अनुसन्धानसंस्थानस्य

# विषयानुक्रमणी



सम्पादकः—विद्यावारिधिः श्रीकृष्णचन्द्रद्विवेदी

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

| ३४ वर्षः | ज्येष्ठ-भाद्रपदपूर्णिमे, वि० सं० २०३६ | १-२ अङ्कौ |
| --- | --- | --- |



# स्फोटविवेचनम्


श्रीरामवदनशुक्लः

प्राचार्यचरः—श्रीरामदेशिकसंस्कृतमहाविद्यालयः, प्रयागः


श्रोत्रेन्द्रियग्राह्यत्वसमानाधिकरणगुणत्वविशिष्टश्शब्दः। स च द्विविधः—वर्णात्मको ध्वन्यात्मकश्च। वर्णात्मकः संस्कृतभाषादिरूपः, ध्वन्यात्मको भेरीमृदङ्गादिशब्दश्च। शब्दः कारणवत्त्वात् संयोगविभागजन्यत्वादिन्द्रियजन्यप्रत्यक्षविषयत्वेन चानित्यः, अनुमानप्रयोगश्च शब्दोऽनित्यः, बहिरिन्द्रियग्राह्यप्रत्यक्षविषयत्वाद् रूपादिवत्। यच्चुच्यते—येनेन्द्रियेण यद् गृह्यते तद्गता जातिस्तद्भावश्च तेनैवेन्द्रियेण गृह्यत इति नियमात् कत्वादीनामपि श्रवणेन्द्रियजन्यप्रत्यक्षविषयत्वेनानित्यत्वाभाववत्यां कत्वादिजातौ श्रवणेन्द्रियजन्यप्रत्यक्षविषयत्वहेतोस्सत्त्वादस्य हेतोर्व्यभिचारित्वेन न तेन शब्दानित्यत्वसिद्धिः।

अत्रेदं बोध्यम्—कण्ठताल्वादिसंयोगो हि व्यञ्जकश्शब्दस्य वोत्पादकः? अभिव्यञ्जकस्याभिव्यङ्ग्यदेशीयत्वनियमः। यथाभिव्यञ्जको दीपो घटदेशीयस्सन् घटमभिव्यनक्ति। अयं खलु कण्ठताल्वादिषु वायुसंयोगः कण्ठताल्वादिदेशे वर्तते। अभिव्यङ्ग्यश्च शब्दः शब्दशब्दजन्यायेन श्रोतुः कर्णविवरे वर्तत इत्यभिव्यञ्जकस्य कण्ठताल्वादिसंयोगस्याभिव्यङ्ग्यत्वेनाभिमतस्य शब्दस्य च विभिन्नदेशीयत्वाच्छब्दाभिव्यञ्जकत्वं कण्ठताल्वादिवायुसंयोगस्य न घटते, अपि तु तस्योत्पादकत्वमेव। अपि च तीव्रं सुखम्, मन्दं सुखम्; तीव्रोऽश्वः, मन्दोऽश्व इत्यादिवत्तीव्रं पदं मन्दं पदमिति कृतकवदुपचारादपि शब्दस्यानित्यत्वं बोध्यम्। भेरीशब्दस्तन्त्रीशब्दं तिरस्करोति। शब्दश्रवणेन, अयं शब्दो भेरीसम्बन्ध्ययं शब्दस्तन्त्रीसम्बन्धीत्यनुमीयते। तेन शब्दस्य भेदोऽवश्यं वाच्यः। नित्यत्वे शब्दस्यायं भेदो न सम्भवेदित्यतोऽपि शब्दस्यानित्यत्वमस्ति। अपि च क्रियासाधर्म्यादपि शब्दस्यानित्यत्वम्। क्रिया यथा क्षणस्थायिनी, तथा शब्दोऽपि। शब्दस्य ध्वंसे जाते केनापि लिङ्गेन वा शब्दस्यानुभवाभावाद् नहि शब्दसत्तायां तस्याज्ञानं वक्तुं शक्यते।

न च शब्दस्यानित्यत्वे गुरुशिष्ययोरध्ययनाध्यापनव्यवस्था न सम्भवेत्। तथा हि अध्यापनं नाम स्वशब्दस्य शिष्ये गुरुणा प्रापणम्। एतच्च शब्दस्य स्थिरत्वे एव सम्भवति। न हि क्षणिकः पदार्थोऽन्यत्र नेतुं शक्यते तन्न, शब्दस्यानेकत्वेऽपि नृत्यमधीते यन्नृत्यमनेन कृतं तदनेनैकचरणेन कृतमिति नृत्यक्रियाभेदेऽप्यभेदावगाहि यत्तदोः प्रयोगादनित्येऽप्यध्ययनमुपपद्यते। यद्यप्यध्यापनं नाम गुरुकर्तृकशिष्योद्देश्यकशब्दप्रदानमिति गोदानवच्छब्दस्य स्थैर्यमुचितम्। तथा पञ्चकृत्वोरूपं पश्यतीत्यत्र स्थिरस्य रूपस्याभ्यासवच्छब्दाभ्यासेषु तस्य स्थैर्यमपेक्षितम्। तावत्कालं स्थिरश्चैनं कः पश्चान्नाशयिष्यतीति न्यायेन शब्दस्य नित्यत्वं सिद्धयति, तदपि तुच्छम्; अनित्याया नृत्यक्रियायाः, अध्ययनाभ्यासवच्छब्दस्यानित्यत्वेऽप्यध्ययनाभ्यासोपपत्तेः।

इत्थं शब्दस्यानित्यत्वेऽपि घटपदे उच्चरिते घकारश्रावणप्रत्यक्षजन्यसंस्कारेणाव्यवहितोत्तरत्वसम्बन्धेनाकारे तत्प्रत्यक्षकाले भानात्। इत्थं घकारविशिष्टाकारविषयकप्रत्यक्षजन्यसंस्कारजन्यस्मरणाख्यज्ञानलक्षणसन्निकर्षेण टकारे तत्प्रत्यक्षकाले घकारविशिष्टाकारस्य भानात् तथा घटविषयकप्रत्यक्षजन्यसंस्कारजन्यस्मरणात्मकज्ञानलक्षणया श्रावणप्रत्यक्षकालेऽकारे घट इत्यस्य भानाद् घटपदविषयकप्रत्यक्षाद् घटत्वावच्छिन्नविषयकोपस्थितेर्घटत्वावच्छिन्ननिरूपितघटपदनिष्ठवृत्तिज्ञानाधीनाया घटत्वावच्छिन्नविषयकशाब्दबोधोपपत्तिः, तथा घटमानयेति वाक्यस्यापि प्रत्यक्षोपपत्त्या घटनिष्ठकर्मतानिरूपकानयनविषयकशाब्दबोधोऽपि समुपपद्यते। अथवा घट इत्युच्चरितेऽकारोच्चारणजनिततत्प्रत्यक्षकालेऽव्यवहितोत्तरत्वसम्बन्धेन घकारविषयकप्रत्यक्षजन्यसंस्कारेण, तथाऽकारप्रत्यक्षजन्यसंस्कारेण टकारप्रत्यक्षजन्यसंस्कारेण चाकारप्रत्यक्षेण च घकाराकारटकाराकारविषयकसमूहालम्बनात्मकस्मरणेन वृत्तिज्ञानद्वारा घटत्वावच्छिन्नविषयकोपस्थितेस्तद्विषयकशाब्दबोधोपपत्तिः।

एवं घटमानयेति वाक्यस्थलेऽपि घकाराद्यानयनघटकनकाराकारान्तविषयकप्रत्यक्षजन्यसंस्कारप्रत्यक्षैर्घकारादिनकाराकारान्तविषयकसमूहालम्बनात्मकस्मरणेन तत्तत्पदनिष्ठवृत्तिज्ञानाधीनासत्तिसम्पन्नघटत्वाद्यवच्छिन्नविषयकसमूहालम्बनात्मकोपस्थितेश्च घटनिष्ठकर्मतानिरूपकानयनविषयकशाब्दबोधः। इत्थं सर्वेभ्यः पदेभ्यस्सर्वेभ्यो वाक्येभ्यश्च खले कपोतन्यायेन राजपुरप्रवेशन्यायेन च शाब्दबोधा उपपादनीयाः।

अत्राव्यवहितोत्तरत्वसम्बन्धश्च स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणवृत्तित्वे सति स्वाधिकरणक्षणध्वंसाधिकरणवृत्तित्वम्। घघटकाकारे घकाराधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणवृत्तित्वं घकाराधिकरणक्षणध्वंसाधिकरणवृत्तित्वञ्चास्तीति घकाराव्यवहितोत्तरत्वं तत्र बोध्यम्। टकारे घकारक्षणध्वंसाधिकरणक्षणध्वंसाधिकरणवृत्तित्वस्य सत्त्वाद् घकारक्षणध्वंसाधिकरणवृत्तित्वेऽपि न घकाराव्यवहितोत्तरत्वम्। नीलघट इत्यत्र लघटकाकारे घकाराधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणवृत्तित्वस्य सत्त्वेऽपि घकारक्षणध्वंसाधिकरणवृत्तित्वाभावान्न घकाराव्यवहितोत्तरत्वं लघटकाकारे।

अत्रोच्यते—अकारादयो वर्णा नित्याः, पूर्वदिवसोच्चरिताकारेणाद्योच्चरिताकारस्याभेदप्रत्यभिज्ञानात्। सोऽयमकार इत्याकारात्। तावत्कालस्थिरश्चैनं कः पश्चान्नाशयिष्यतीति न्यायेन नाशानुपपत्तौ नित्यत्वमभ्युपेयम्। इत्थमकार एक एवेकारोऽप्येक एवेति सर्वे वर्णा भिन्न-

जातीया एकैकत्वविशिष्टा एव। प्रत्येकमकारादयो वर्णा विभवः। तथा नित्यवर्णसमूहः पदम्। पदसमूहो वाक्यम्। पदवाक्यानां वर्णातिरिक्तत्वाभावात्। 'एक इन्द्रशब्दः क्रतुशते प्रादुर्भूतः सर्वयागेष्वङ्गं भवति' इति भाष्यकारोक्तेः[1]। घट इत्यत्र घकाराव्यवहितोत्तरत्वमकारे घज्ञानाधिकरणक्षणोत्पत्तिकज्ञानविषयत्वम्।

कामुकसमवेतकामिनीजिज्ञासास्थले कामिनीविषयकज्ञानस्य प्रत्यक्षात्मकस्य स्मरणात्मकस्य वा विजातीयविषयकत्वाभावेन ज्ञानस्य क्षणिकत्वेऽनियतदीर्घकालवृत्तित्वस्य कामिनीविषयकैकज्ञाने बाधितत्वात् तार्किकैस्तत्र कामिनीविषयककामुकसमवेतप्रत्यक्षधारास्मृतिधारा वाऽङ्गीक्रियते। तत्रानेकप्रत्यक्षस्मरणकल्पनायां गौरवाद्यावत्कामुकसमवेतकामिनीविषयकज्ञानकालमेकमेव ज्ञानमङ्गीकर्तव्यम्। तथा घटपदविषयकश्रावणप्रत्यक्षेऽपि घकारादिविषयकप्रत्यक्षाणि अकारप्रत्यक्षपर्यन्तं स्थिराण्यङ्गीकर्तव्यानि। इत्थं घटपदप्रत्यक्षं वाक्यप्रत्यक्षञ्च सर्वं सुलभमित्यवसेयम्। ज्ञानस्य क्षणिकत्वं शब्दस्य क्षणिकत्वञ्च नाभ्युपेयम्, इदानीमुच्चारिता वर्णा इदानीं जानामीति प्रतीतेः।

न चाकारादीनां नित्यत्वे ककार उत्पन्नः, ककारो नष्ट इति प्रतीतिः। अथ चायमकार उदात्तः, अयमनुदात्तः, अयं स्वरित इति प्रतीतिश्च; अयमकारो मन्दः, अयमकारस्तार इति प्रतीतिश्च कथमुपपद्येरन् ?

अत्रेदमवधेयम्—अकाराद्यभिव्यञ्जकः कण्ठताल्वादिषु वायुसंयोगस्तत्र ध्वनिश्च कण्ठताल्वादिषु वायुसंयोगानामनित्यत्वादुत्पन्नविनष्टत्वात्तद्गतोत्पत्तिः स्वाश्रयाभिव्यङ्ग्यत्वसम्बन्धेन वर्णेषु भासते, तथा तत्प्रतियोगिकध्वंसश्च स्वप्रतियोग्यभिव्यङ्ग्यत्वसम्बन्धेनाकारादिषु भासते। तथोदात्तत्वानुदात्तत्वस्वरितत्वतारत्वमन्दत्वादीनि स्वाश्रयाभिव्यङ्ग्यत्वसम्बन्धेनाकारादिषु वर्णेषु प्रतीयते। परम्परासम्बन्धेनोत्पत्त्यादीनामकारादिषु सत्ताऽङ्गीकारेऽकार उत्पन्न इत्यादिविशिष्टप्रतीतयो न स्युरिति न च वाच्यम्, स्वाश्रयाभिव्यङ्ग्यत्वसम्बन्धमूलकस्वरूपसम्बन्धेन वायुनिष्ठोत्पत्त्यादेः स्वरूपसम्बन्धेनाकारादिष्वारोपात्। अतो न विशिष्टप्रतीतौ शङ्काऽवकाशः। सोऽयं ककार इति प्रतीतिः कत्वावच्छिन्नजात्यैकविषयकत्वेन न साध्या। तयोर्घटव्यक्त्योर्जात्यैक्येन सोऽयं घट इति प्रतीतेरस्वीकारात्। एकव्यक्तिविषयकत्वे एव सोऽयं घट इति प्रतीतेरुदयात्।

सेयं दीपकलिकेत्यत्र व्यक्तिभिन्नत्वेऽपि जात्यैक्येन यथाप्रतीतिरुपजायते, तथा सोऽयमकार इत्यत्र व्यक्तिभिन्नत्वेऽप्याकारसाम्येन जातिविषयिणी प्रतीतिरत्राप्यभ्युपगम्यतामिति न च वाच्यम्, दीपकलिकायां सेयमिति प्रतीतिसत्त्वेऽपि कलिकाजातीयेयमिति प्रतीतेरपि सम्भवात्। अकारविषयकप्रतीतौ तु द्वयोरकारयोर्विभिन्नकालिकयोः सोऽयमकार इत्येव प्रतीतिः, न तु तज्जातीयोऽयमिति प्रतीतिरपि तत्रानुभूयते। यदि सोऽयमकारध्वनिरित्यभेदप्रत्यभिज्ञया ध्वनिनिष्ठोत्पत्त्यादीनां नाकारादिषु भानमित्यभ्युपगम्यते, तदा कण्ठताल्वादिसंयोगनिष्ठोत्पत्त्यादीनामेव भानं स्वीकार्यम्, स्वाश्रयाभिव्यङ्ग्याभिव्यङ्ग्यत्वसम्बन्धेन।

---

१. महाभाष्यम्—पस्पशाह्निकम्।

अत्र वदन्ति स्फोटवादिनः—स्फुटत्यर्थो यस्मात्, अर्थात् प्रतीतिविषयो भवत्यर्थो यस्मात्, स स्फोटः। अकर्तरि कारकेऽसंज्ञायामिति घञन्तः। अथवा स्फुट्यते प्राकृतध्वनिभिरभिव्यज्यते यः स इति स्फोटः। कर्मघञन्तोऽयं स्फोटशब्दः। वर्णानां क्षणिकत्वेन वर्णसमूहस्याभावात् प्रत्यक्षं प्रति तादात्म्येन विषयस्य कारणत्वान्न घटपदप्रत्यक्षं सम्भवति। यदि पूर्वपूर्ववर्णानुभवजन्य-संस्कारैरन्तिमवर्णप्रत्यक्षसमये वर्णानां भानमिति समूहालम्बनात्मकं पदस्मरणं स्वीक्रियते, तन्न साधु। तत्तद्वर्णप्रत्यक्षे जाते संस्कारैः प्रत्यक्षक्रमेण संस्कारक्रमेण च पूर्वपूर्ववर्णानामन्तिमवर्ण-प्रत्यक्षसमये स्मरणासम्भवेन नदीशब्दप्रयोगे दीनरूपेण पदभानाद् रसशब्दप्रयोगे सररूपेण पद-भानाद् दीनत्वावच्छिन्नविषयकप्रतीतेरुत्पत्तेः। सरशब्देन रसत्वावच्छिन्नप्रतीत्यापत्तेश्च। तदर्थं यदि स्वाव्यवहितोत्तरत्वसम्बन्धेन संस्कारैः पूर्ववर्णानां भानमङ्गीक्रियते, तदपि तुच्छम्, स्मरणक्रमस्य संस्कारक्रमानुयायित्वाभावात्। यस्य संस्कारस्योद्बोधस्तस्य पश्चात्तनत्वेऽपि पूर्वं स्मरणोत्पत्तेः।

अपि च तथा स्मरणात्मकज्ञानोपपादनेऽपि शब्दानां सत्ताया अभावेन शक्त्याश्रयत्व-स्यानुपपत्तिर्न ह्याधाराभावे आधेयवत्ता प्रतीयते, तथा सति नष्टो घटो जलवानिति प्रतीत्यापत्तेः। अविद्यमानस्यापि स्मृतिविषयस्य शब्दस्य शक्तेस्तार्किकमते तत्तदर्थविषयकबोधजनकत्वप्रकारके-श्वरेच्छीयविशेष्यतायाश्शक्तिरूपत्वेन तस्या अविद्यमानेऽपि पदे सत्तायां बाधकाभावः। नष्टो घटो ज्ञात इति प्रतीतौ ज्ञानविषयताया नष्टे घटेऽप्यङ्गीकारात्। यथा पूर्वं जानामीति प्रतीतौ नष्टेऽपि घटे पुरातनज्ञानतौल्यस्य साम्प्रतिकज्ञाने प्रतीतौ साम्प्रतिकज्ञानविषयताया अतीते घटे स्वीकारादिति यदुच्यते, तदाप्येकं पदमिति प्रतीतिर्न स्यात्। तार्किकमते पदस्य वर्णसमुदाय-रूपत्वेन तस्य वर्णानतिरिक्तत्वेनैकत्वस्य बाधात्। एकप्रतीतिजनकत्वेन प्रतीतिनिष्ठस्यैकत्वस्य वर्णेष्वारोपादेकं पदमिति प्रतीतिस्स्यादिति न च वाच्यम्, पदस्यैकत्वे एकप्रतीतिरेकप्रतीतौ सत्यां पदे आरोपेणैकत्वमित्यन्योन्याश्रयदोषग्रासात्।

समूहालम्बनात्मकबुद्धिनिष्ठैकत्वस्य पदे समारोप इत्यपि न वाच्यम्; समूहालम्बनात्मक-स्मृतेर्वर्णव्युत्क्रमविषयकत्वेन नदी-सरपदयोरापत्तिसत्त्वेन समूहालम्बनात्मकज्ञानस्य निरर्थकत्वात्।

अपि च शक्तिमत्त्वेन पदप्रत्यक्षस्यैव शाब्दबोधजनकत्वम्, न तु स्मृतस्य। ऋगित्युक्तौ ऋग्वेदमन्त्राः पठितव्या इति ऋक्पदस्य वेदमन्त्रे सङ्केते सत्युपाध्यायेन ऋगित्युक्ते ऋग्वेदमन्त्र-प्रतीतिवद् ऋग्वेदमन्त्रार्थप्रतीतेरप्यापत्तेः। अपि च रूपरसगन्धादिप्रत्यक्षाणामेव सुखजनकत्व-मनुभूयते, न तु तेषां स्मरणस्य। अतः पदस्मरणस्य न शाब्दबोधजनकत्वम्, अपि तु पदप्रत्यक्षस्यैव। वर्णक्षणिकवादे पदस्य कथञ्चिदपि प्रत्यक्षासम्भवेन शाब्दबोधो दुरुद्धरः। अतोऽकारादिवर्णाति-रिक्तः क्रमशून्यो नित्यो विभुः प्रकाशस्वरूपः स्फोटो ब्रह्मात्मकोऽभ्युपगन्तव्यः, स एवार्थप्रत्याय-कत्वाच्छाब्दबोधजनकः। न च स्फोटस्य वाचकत्वे तस्य नित्यत्वात् सर्वदाऽर्थभानप्रसङ्गः स्यादिति वाच्यम्, प्राकृतध्वनिरूपेणाभिव्यक्तस्य स्फोटस्य शाब्दबोधजनकत्वस्वीकारात्।

ध्वनिश्च द्विविधः—प्राकृतो ध्वनिर्वैकृतध्वनिश्च। प्राकृतध्वनिरकारादिवर्णरूपः, वैकृत-ध्वनिश्च वर्णचिराचिरोपलब्धिप्रयोजकः शङ्खभेर्यादिध्वनिः। न च वर्णानां ध्वनिपदव्यपदेशो

विरुद्धः, शङ्खभेर्यादिशब्दानामेव ध्वनित्वेन व्यवहारादिति वाच्यम्, 'लोके प्रतीतपदार्थको ध्वनिश्शब्दः'[1] इति महाभाष्यकारोक्त्या वर्णेष्वपि ध्वनिव्यवहारस्य प्रामाणिकत्वात् ।

अपि च काव्यप्रकाशकारेण मम्मटेनापि वर्णानां ध्वनित्वमनूदितम् । तथाहि—'बुधैर्वैयाकरणैः प्रधानीभूतस्फोटरूपव्यङ्ग्यव्यञ्जकस्य ध्वनिरिति व्यवहारः कृतः'[2] इति । तत्र स्वकीयध्वनिनिरूपणप्रसङ्गेऽयं ध्वनिर्बुधानां वैयाकरणानामपि सम्मतः, न त्वबुधानामित्यर्थोऽपि व्यञ्जितः । न च घट इत्यत्र घकारादिवर्णानां क्षणिकत्वात् तेषां समूहस्य ज्ञानाभावेन पदरूपेण स्फोटस्याभिव्यक्तेरभावात्, घटरूपेणाभिव्यक्तस्य स्फोटस्य घटत्वावच्छिन्ने शक्तिस्तादृशशक्तिज्ञानात् तदुपस्थितिशाब्दबोधौ कथमुपपद्येते ? यदि घकारादिवर्णानां स्मरणात्मकज्ञानेन तेन रूपेण स्फोटस्याभिव्यक्तिरङ्गीक्रियते, तदा वर्णानां व्युत्क्रमस्मरणप्रयुक्ता या दुःखस्था, सैव स्फोटाभिव्यक्तावप्यापतेदिति वाच्यम्, घटपदे उच्चरिते घकारादिवर्णपदजन्यप्रत्यक्षानुभवजन्यसंस्काराश्चित्तभित्तौ श्रोतुः क्रमेण चित्रीभवन्ति । अन्तिमवर्णप्रत्यक्षे सति प्राकृतध्वन्यात्मकनादरूपेण स्फोटो हृदिस्थोऽभिव्यक्तोऽर्थं बोधयति ।

न च स्फोटस्याखण्डरूपत्वेन घटपदोच्चारणे सति यदि घकारसंस्कारेणाभिव्यक्तः, तदाऽन्यवर्णोच्चारणानां वैयर्थ्यम् । अखण्डस्य पदार्थस्य यदि केनचिद् वर्णेनाभिव्यक्तिस्तदापरवर्णानां वैयर्थ्यं सिद्धमेव, न हि घटपदघटकतत्तद्वर्णैः स्वस्वसंस्कारेण स्फोटस्य क्रमेण कस्मिंश्चित् कस्मिंश्चिदंशेऽन्तिमवर्णप्रत्यक्षेणान्तिमांशस्याभिव्यक्तौ तदा घटपदरूपेण स्फोटस्य ज्ञानमिति वक्तुं शक्यम् । अखण्डे स्फोटेंऽशाभावेनांशिकाभिव्यक्तेर्दूरापास्तत्वात् । अतः कथं घटपटादिरूपेण स्फोटस्याभिव्यक्तिरिति वाच्यम्, रत्नपरीक्षणप्रस्तावे रत्नपरीक्षको रत्नोपरि बहुकृत्वो निकषसंघर्षे सति कदाचिदन्तिमसंघर्षे रत्नमिदं साधीय इति व्युत्पद्यते । प्रथमसंघर्षस्य द्वितीयादिसंघर्षाणाञ्च नैष्फल्येऽन्तिमसंघर्षस्य रत्नप्रतीतिजनकत्वं यद्यपि, तथापि पूर्वसंघर्षाणामभावे केवलेनान्तिमेन संघर्षेण रत्नप्रतीतिर्न सम्भाव्येदित्यन्तिमसंघर्षे पूर्वसंघर्षाणां साहाय्यमभ्युपेयमेव । प्रतीतिस्त्वन्तिमसंघर्षेणैव ।

तथा चापेक्षाबुद्ध्या दशत्वसंख्योत्पत्तौ प्राक्तनापेक्षाबुद्धिभिर्द्वित्व-त्रित्व-चतुस्त्व-पञ्चत्वादिसंख्योत्पत्तौ सत्यामेवान्तिमापेक्षाबुद्ध्या दशत्वसंख्योत्पद्यते, तत्र पूर्वासां द्वित्वाद्यपेक्षाबुद्धीनामन्तिमापेक्षाबुद्धेः । साहाय्यं तदाऽन्तिमापेक्षाबुद्ध्या दशत्वसंख्योत्पद्यते । अनुवाकस्य कण्ठस्थीकरणप्रस्तावेऽनेकैरभ्यासैस्सहकृतेनान्तिमाभ्यासेनानुवाकं कण्ठस्थीभवतीति अन्तिमावृत्तेः पूर्वावृत्तीनां साहाय्यमत्राप्यैवानुवाकः कण्ठस्थीभावाय कल्पते । तथा स्फोटाभिव्यञ्जकस्थलेऽपि पूर्वपूर्ववर्णानुभवजन्यसंस्काराणां साहाय्येनान्तिमवर्णप्रत्यक्षे सति तेनाभिव्यक्तः स्फोटश्शाब्दबोधजननसमर्थो भवति रत्नपरीक्षणन्यायेन ।

अयं स्फोटो वर्णाभिव्यक्तपदाभिव्यक्तवाक्याभिव्यक्तवर्णपदवाक्यजात्यभिव्यक्तरूपेणाखण्डवाक्याभिव्यक्ताखण्डपदाभिव्यक्तभेदेनाष्टविधः । आनन्दवल्लीस्थपञ्चकोशव्युत्पादनेन यथा शुद्धब्रह्मावगम्यते, पूर्वपञ्चकोशाणां क्रमप्रदर्शनं श्रुतिगतप्रयोजकम्, तथा स्फोटरूपशुद्धब्रह्मबोधनाय

---

१. महाभाष्यम् – शास्त्रप्रयोजनाधिकरणम्–पृ० १९ ।        २. काव्यप्रकाशः, का० २ ।

वर्णस्फोटादिस्फोटानामष्टानां व्युत्पादनं शुद्धस्फोटरूपब्रह्मज्ञानप्रयोजकम्। वस्तुतोऽखण्डजातिस्फोटः पदरूपेण वाक्यरूपेणाभिव्यक्तः सन् बोधं जनयति, जातिश्च नित्या ब्रह्मस्वरूपा विभुस्वरूपा पूर्ववत् क्रमबद्धवर्णावलीस्मरणेनाभिव्यक्ता सत्यभिव्यञ्जकभेदेन भिन्नार्थं प्रत्याययति, सैव जातिः पदाभिव्यक्ता सती पदरूपा एकाऽप्यभिव्यञ्जकपदवर्णादिभेदैर्भिन्नरूपवती लोके प्रतीयते। यथा विभिन्नशब्दरूपेणाभिव्यक्ता विभिन्नपदादिरूपा, तथा घटादिभिरर्थैर्व्यक्तिरूपैरभिव्यक्ता सती घटाद्यर्थरूपा चेत्येव भर्तृहरिणा प्रोक्तम्—

सत्यासत्यौ च द्वौ भागौ प्रतिभावं व्यवस्थितौ।
सत्यरूपा तु सा जातिरसत्या व्यक्तयो मताः॥[1]

एतदेवादाय 'तमेव भान्तमनुभाति सर्वम्'[2] इति श्रुतावधिष्ठानरूपेण जातेर्भाने सति सर्वासां पदपदार्थरूपाणां व्यक्तीनां लोके भानम्।

वस्तुतस्तु प्रकृतिपरिणामवाय्वाकाशशरीरकपरमात्मनः सर्वे शब्दा उत्पद्यन्ते। स्वतन्त्रस्य विभोर्द्रव्यरूपस्य गुणरूपस्य च नित्यस्य प्रभाकरभट्टाभिमतस्य शब्दस्य सत्तायां न किञ्चित् प्रमाणम्।

केचन—अनादिनिधनं ब्रह्मस्फोटात्मकं तदुपादानका सर्वे वर्णाः स्फोटे विवर्तभूताः। केचन कण्ठताल्वादिजन्यत्वेन वर्णानां कण्ठताल्वाद्युपादानकत्वं वदन्ति, तदपि प्रमाणदवीयः। शब्दः पृथिव्यादिपञ्चकवृत्तिः, शङ्खो नदति, भेरो नदति, समुद्रो गर्जतीत्यादिव्यवहारात्। स शब्दो देवमनुष्यादिताल्वादिव्यङ्ग्यो वायुव्यङ्ग्यश्च। स श्रोत्रस्याहङ्कारिकत्वेन मनोवच्चलत्वाद् भेरीमृदङ्गाद्यवच्छेदेनाकाशसमवेतस्तत्र गतेन श्रवणेन्द्रियेण गृह्यते, अत एव भेर्यादिस्थाने शब्दो जात इति व्यवह्रियते। दूरस्थशब्दस्तु मन्दत्वेन दूरस्थतया केवलं गृह्यते, न तु प्राच्यामुदीच्यां प्रतीच्यां वा स शब्द इति दिग्वृत्तितया गृह्यते। स च शब्द आकाशेन सहोत्पद्यते तथा तत्कार्यत्वेन वायुना सहापि। आकाशादिना सहैव विनाशोऽपि।

आकल्पस्थायिनाऽऽकाशेन सहोत्पत्तिश्रवणादाकल्पमकारादीनामेकत्वम्। तेषु तारत्वमन्दत्वादिर्वायुधर्मः, स्वाश्रयाभिव्यङ्ग्यत्वसम्बन्धेनाकारादिषु भासते। एवमुदात्तत्वादयोऽपि बोध्याः।

शं नो मित्रः शं वरुणः शं नो भवत्वर्यमा, शं न इन्द्रो बृहस्पतिः। नमस्ते वायो! त्वं प्रत्यक्षं ब्रह्मासि त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि, ऋतं वदिष्यामि, सत्यं वदिष्यामि[3]—इत्यादिश्रुतौ वायोर्भेदात्मकशब्दोपचारेण शब्दाभिव्यञ्जकत्वमेव वायोः प्रतिपाद्यते। पक्षान्तरे नाभिप्रदेशनिर्गतो वायुः कण्ठताल्वादिसङ्घट्टनेन शब्दरूपेण परिणमति हेतोर्भगवती श्रुतिर्वदति वेदात्मकशब्दरूपतां वायोः। अस्यां श्रुतौ शब्दानामुक्तव्याख्यानेन वायुपरिणामत्वश्रवणान्न स्फोटोपादानकत्वं वर्णानां भर्तृहरिसम्मतम्। भर्तृहरिसम्मते स्फोटे निरवयवे नित्ये ज्ञानस्वरूपे विभौ योग्यानुपलब्धेर्नास्मदादिप्रत्यक्षविषयता। योगिनां तद्विषयकं प्रत्यक्षं तु सन्दिग्धम्। गौरित्येकं पदमिति वर्णसमुदायविषयकत्वेन सिद्धमिति न तेन स्फोटसिद्धिः। इत्थमेकं वाक्यमपि साध्यम्, स्फोटस्त्वं वर्णजुष्ट इति भारतवचनं तु न स्फोटे प्रमाणम्। स्फुटत्यर्थोऽस्मादिति व्युत्पत्त्या तस्यार्थप्रकाशनशक्तिपरत्वात्।

१. वाक्यपदीयम्–३।१।३२। २. कठोप० २।५।१६। ३. शु० य०–३६।९।

वर्णानां प्रत्येकं वाचकत्वं समुदायस्य वेति विकल्पग्रासो न केवलवर्णवादे, स्फोटवादेऽपि प्रत्येकं वर्णानां व्यञ्जकत्वं समुदायस्य वेति दोषसमत्वेन **'यश्चोभयोः समो दोषः परिहारस्तयोः समः'** इति न्यायेन तत्परिहारात् । रत्नपरीक्षणानुवाकाभ्यासादिन्यायेन वर्णानां स्फोटाभिव्यञ्जकत्वसमर्थनेऽपि वर्णानामपि प्रत्येकानुभवजन्यस्मरणसचिवान्त्यवर्णप्रत्यक्षेण स्मरणेन वा शाब्दबोधोत्पत्तिसमर्थनं बोध्यम् । शब्दादर्थं प्रतीम इति चैकत्वानुभवेनैकस्फोटसिद्धिस्तु न वाच्या, तद्वाक्यघटकशब्दे सांशत्वस्य प्रतीतेः ।

**यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः ।**
**तस्य प्रकृतिलीनस्य यः परः स महेश्वरः ।। इति ।**

आगमेन वेदेषु वेदान्तेषु च प्रतिष्ठितस्य प्रणवरूपस्य स्वरस्य प्रकृतिरकारः, तद्वाच्यो महेश्वर इति वेदात्मकप्रणवकारणाकारवाच्यत्वं महेश्वरस्य परदेवतानारायणस्य सिद्ध्यति ।

क्वचित् प्रतप्तेभ्यो व्याहृतिपदवाच्येभ्यो वेदादिशब्दजालस्योत्पत्तिः श्रूयते । **'ओंकार एव हि सर्वा वाक्'** इति श्रुत्या प्रणवस्य वेदकारणत्वं सिद्ध्यति । इत्थं वेदप्रकृतिप्रणवकारणाकारशब्दवाच्यत्वं यदि ब्रह्मणः स्वीक्रियते, तथा स्फोटवाच्यत्वमपि ब्रह्मणः स्वीक्रियते, तद्ब्रह्मरूपत्वमव्यक्तपरिणामवाय्वाकाशशरीरकपरमात्मन इति, तदा नेत्थं स्फोटवादिना सह कश्चिद् विवादः । यत्तु निर्विशेषं निरवयं स्फोटशब्दरूपं ब्रह्माविद्यातिरोहितं विदितवर्णपदवाक्यरूपेण पृथिव्याद्यर्थरूपेण च विवर्तमानमस्ति, तदप्रमाणिकम् । स्वयंप्रकाशे स्फोटरूपे ब्रह्मणि स्वरूपाज्ञानरूपाया अविद्याया विरोधादभावेऽविद्याश्रयत्वानुपपत्त्या अविद्यया ब्रह्मस्वरूपस्य स्फोटस्य च तिरोधानानुपपत्त्या न भर्तृहरिसम्मतं स्फोटात्मकं ब्रह्मनामरूपात्मकजगत्कारणं भवितुमर्हतीति निर्मत्सराः सुधियो विभावयन्त्विति ।



# वाक्यार्थस्य प्रतिभारूपत्वम्

डॉ० रामप्रसादत्रिपाठी
वेद-वेदाङ्गसंकायाध्यक्षः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

**वर्णनीया विषयाः**

(१) न्यायदर्शनसम्मतं वाक्यलक्षणम्
(२) व्याकरणदर्शनाभिमतं वाक्यलक्षणम्
(३) वाक्यस्य भेदाः
(४) वाक्यार्थं इत्यत्रार्थपदार्थः
(५) वाक्यवाक्यार्थयोर्भेदत्रयम्
(६) श्रीहरिसम्मतं वाक्यार्थस्य षड्विधत्वम्
(७) अखण्डं वाक्यं वाक्यार्थश्च
(८) वाक्यार्थे वाक्यस्य शक्तिसम्बन्धः
(९) वाक्यार्थस्य शाब्दत्वशङ्कानिरासः
(१०) प्रतिभोत्पत्तिप्रकारः
(११) प्रतिभायाः कार्यविशेषे हेतुता
(१२) प्रतिभाया भेदाः
(१३) प्रतिभोद्बोधने शब्दस्य हेतुता
(१४) प्रतिभाया हेतुरभ्यासः
(१५) कार्यताज्ञानस्य प्रतिभारूपता
(१६) अत्र निबन्धे निष्कर्षः

अथ प्रतिभारूपो वाक्यार्थो विमष्टुं प्रयत्यते, यतो हि सर्वोऽपि लोकव्यवहारः प्रवृत्ति-निवृत्त्यन्यतरादिलक्षणः शब्दाधीन एव। शब्दाख्यं ज्योतिरेव तिमिराक्रान्तं संसारं प्रकाशमानयति। उक्तं च —

वाचामेव प्रसादेन लोकयात्रा प्रवर्तते।
इदमन्धंतमः कृत्स्नं जायेत् भुवनत्रयम्॥
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते।[1]

स च शब्दो वाक्यरूप एवोक्तसामर्थ्यमादधाति, तस्यैव निराकाङ्क्षा प्रतिपत्तिजनकत्वात्।

**१. न्यायदर्शनसम्मतं वाक्यलक्षणम्**

तदुक्तं न्यायभाष्यकृता श्रीवात्स्यायनेन 'पदसमूहो वाक्यमर्थसमाप्तौ'[2] इति।

---

१. काव्यादर्शः १।३।४; २. न्या० द० २।१।५६।

अत्र 'पद'शब्देन सुबन्तं तिङन्तं च, तेन तत्समूह इत्यर्थः। समाहाविरयस्य समर्थमिति शेषः।

एवञ्च निराकाङ्क्षप्रतिपत्तिजनको यः सुबन्ततिङन्तपदसमुदायस्तद्रूपः शब्दो वाक्यमित्युच्यते।

२. व्याकरणदर्शनाभिमतं वाक्यलक्षणम्

व्याकरणदर्शनरीत्या वाक्यविषये तदर्थविषये च किञ्चिद् विचार्यते। तत्र एकतिङ्वाक्यमिति भगवान् वार्त्तिककारः[1]।

आख्यातं सविशेषणं वाक्यमिति भगवान् भाष्यकारः[2]।

अत्र द्वितीये लक्षण आख्यातपदेन तिङन्तमुच्यते, कारकादि च विशेषणत्वेन बोध्यम्। तिङ्प्रकृतिभूतधातुपदार्थस्य क्रियात्मकस्य विशेष्यत्वं बोद्धव्यम्। क्रियायाः प्राधान्यम् 'भावप्रधानमाख्यातम्' इति निरुक्तात्, क्रियाप्रधानमाख्यातमिति भाष्याच्चायाति। एवं च कारकादिविशेषणसहितक्रियामुख्यविशेष्यकबोधजनकत्वमिति वाक्यलक्षणं सम्पद्यते।

इत्थं चासाधारणधर्मरूपं लक्षणमुक्त्वा स्वरूपभूतमपि लक्षणमुच्यते, तथा हि—तत्तदर्थनिरूपिता वृत्तिर्न प्रत्येकं वर्णेषु स्थातुमर्हति, अर्थबोधस्यावृत्तिप्रसङ्गात्। नापि वर्णसमुदाये, वर्णानामुच्चरितप्रध्वंसितया[3] समुदायसत्ताया असम्भवात्।

अतश्च तावद्भिर्वर्णरूपध्वनिभिर्व्यज्यमानोऽन्तःकरणावच्छिन्न आत्मैव स्फोटपदाभिधेयो वृत्त्याश्रयो भवितुमर्हति।

इत्थं चापरिच्छिन्नमपि तत्तदुपाधिभूतध्वनिरूपरूषिततया परिच्छिन्नमिव वाक्यपदादिरूपेण नानात्वमाप्नोतीदं स्फोटतत्त्वम्।[4]

३. वाक्यस्य भेदाः

तत्रायं वाक्यस्फोटोऽखण्डसखण्डभेदाभ्यां द्विविधः। अखण्डपक्षेऽपि वाक्यजातिस्फोटः, अनवयववाह्यवाक्यव्यक्तिस्फोटः, अनवयवान्तरवाक्यव्यक्तिस्फोटश्चेति त्रिविधः।

सखण्डपक्षेऽपि—आख्यातशब्दः, क्रमवच्छब्दः, सङ्घातशब्दः, आद्यं पदम्, पृथक्सर्वं पदं साकाङ्क्षमिति पञ्चविधः। उक्तं च वाक्यपदीये —

आख्यातशब्दः सङ्घातो जातिः सङ्घातवर्त्तिनी।
एकोऽनवयवः शब्दः क्रमो बुद्ध्यनुसंहृतिः।
पदमाद्यं पृथक्सर्वं पदं साकाङ्क्षमित्यपि।
वाक्यं प्रति मतिर्भिन्ना बहुधा न्यायदर्शिनाम्॥[5] इति।

४. वाक्यार्थं इत्यत्रार्थपदार्थः

वाक्यार्थं इत्यत्रार्थपदस्य प्रयोजनवाचकता, अथवाऽभिधेयपरता इति विचार्यते।

---

१. म० भा० २।१।१; २. म० भा० २।१।१; ३. म० भा० १।४।
४. म० म० नवा०—उद्द्योतः; ५. वा० प० २–१, २ टी० पु०।

तत्र प्रयोजनपरत्वे यद्यपि प्रवृत्तिर्निवृत्तिर्वा वाक्यस्य फलं भवति, तथापि प्रतिभां द्वारीकृत्यैव तयोः फलत्वमनुभूयते, न साक्षादिति ।[१] एवञ्च फलरूपेण प्रतिभैव ग्रहीतुमर्हा । अभिधेयपरत्वरूपे मुख्यपक्षे त्वभिधेयशब्दस्याभिधामात्रविषये लक्षणा कर्तव्या । एवं चाभिधामात्रविषयो वाक्यार्थो वाक्याभिधेय इति पर्यवस्यति । अस्मिन् व्याख्याने मात्रपदेन चक्षुरादीनां व्यावृत्तिर्बोध्या । वाक्येन प्रतिपाद्यमानोऽर्थः क्रियाकारकरूपः, विशेष्यत्वादिरूपः सर्वोऽपि प्रतिभयैव प्रकाशितो भवति, न चक्षुरादिभिरिति तात्पर्यम् ।

**५. वाक्यवाक्यार्थयोर्भेदत्रयम्**

इदानीं वाक्यवाक्यार्थयोर्भेदविषये ईषद्विमर्शः क्रियते येन निबन्धस्योद्देश्यदलं पूर्णतया ज्ञातं भवेत् ।

(१) तत्र बाह्यं ध्वनिरूपं वाक्यम् (बाह्य एव घटादिरर्थ इति प्रथमः कल्पः) ।

(२) आन्तरं स्फोटात्मकं वाक्यम् (आन्तरो घटादिर्बाह्यघटादितादात्म्यापन्नोऽर्थ इति द्वितीयः कल्पः) ।

(३) आन्तरं स्फोटात्मकं वाक्यम् (आन्तर एव वाक्यार्थः प्रतिभामात्रविषय इति तृतीयः कल्पः) ।

एषु प्रथमे कल्पे—'प्रतीतपदार्थको लोके ध्वनिः शब्दः' इत्युच्यते इत्यादि भाष्यं प्रमाणम् । इमे बाह्या अर्थाः प्रत्यक्षसिद्धा एव । तत्र जातिव्यक्तिलिङ्गसंख्याकारकाणि क्रियाक्रियात्वे, शब्दस्य स्वरूपं चेत्यादयः पदार्थाः, विशेष्यत्वरूपः संसर्गो वाक्यार्थः ।[२] विषयतायाः शब्दशक्यत्वं समर्थः पदविधिरिति सूत्रस्थभाष्यादायाति ।[३]

आन्तरं स्फोटरूपं वाक्यं ध्वनिव्यङ्ग्यमान्तर एवार्थस्तद्वाच्यः । शब्दस्य स्फोटरूपं पूर्वमुक्तमेव । अन्तरे बुद्धौ भव आन्तरः । अत्र पक्षे शब्दस्य विभुत्वेऽपि ध्वनिरूपरूषितत्वेन परिच्छिन्नतया हृदयरूपदेशावच्छिन्नाकाशसम्बद्धतया स्फोटस्यान्तरत्वम् । सूक्ष्मसंस्कारविषयतया चार्थस्यान्तरत्वम् । वाक्यपदीये द्वितीयकाण्डे श्रीहरिणा अयं कल्पः सुष्ठु समर्थितः[४] ।

तृतीये कल्पे आन्तरस्यैव वाक्यार्थत्वमिति प्रतिभामात्रविषयत्वं तस्य साधु आयाति । चित्तमिन्द्रियप्रणाल्या निर्गत्य विषयेण संयुज्य सूक्ष्मावस्थारूपविषयवासनावशात् तत्तद्विषयाकारेण परिणमति, न तु तत्र बाह्यविषयस्य प्रतिबिम्बः । स्वप्नादौ बाह्यविषयाभावेन तत्प्रतिबिम्बासम्भवात् । उक्तं च—

विप्र पृथिव्यादिचित्तस्थं न बहिष्ठं कदाचन ।
स्वप्नभ्रममदाद्येषु सर्वैरेवानुभूयते[५] ।।

किं चात्र पक्षे इदं रजतमित्यादिभ्रमस्थले सन्निकृष्टस्य प्रतिभासमात्रशरीरस्यैव रजतादेरारोपः, न तु दूरस्थस्य हट्टस्थस्येत्यपि महल्लाघवमस्ति ।[६]

---

१. न्या० क० विधिविवेकः; २. वै० सि० ल० म०—स्फोटनिरू० ।
३. म० भा०--२।१।१; ४. वा० प० २।१३४।३।५ ।
५. वै० सि० ल० म०—बौ० प्र०; ६. वै० सि० ल०म०—बौ० प्र० ।

६. हरिसम्मतं वाक्यार्थस्य षड्विधत्वम्—

वाक्यपदीये श्रीहरिणा तु षड्विधो वाक्यार्थो निरूपितः। तथा हि—१. प्रतिभा, २. पदार्थानां संसर्गः, ३. पदार्थान्तरसंसर्गात् पूर्वं सामान्यरूपः पदार्थान्तरसाकाङ्क्षः, पश्चात्तु पदार्थान्तरसंसर्गोपलक्षितः पदार्थ एव वाक्यार्थः, ४. पदार्थान्तरसंसर्गविशिष्टरूपपदार्थं एव वाक्यार्थः, ५. क्रिया वाक्यार्थः, ६. वाक्यस्य प्रयोजनं वाक्यार्थ इति।

तत्र वाक्यस्याखण्डत्वपक्षे जातिः सङ्घातवर्त्तिनी, एकोऽनवयवः शब्दो बुद्ध्यनुसंहृतिरिति त्रिष्वपि वाक्यस्वरूपेषु प्रतिभा वाक्यार्थः।[1] आख्यातशब्दो वाक्यमित्यस्मिन् पक्षे क्रिया वाक्यार्थः[2]। पदानां सङ्घातो वाक्यमिति, पदानां पौर्वापर्यरूपः क्रमो वाक्यमिति च पक्षद्वये पदार्थानां संसर्गो वाक्यार्थः[3]।

एवमेव तत्तत्पक्षेष्वपरे वाक्यार्था निरूपिताः सन्तीति सर्वे पक्षास्तत्र द्रष्टव्याः[4]।

७. अखण्डं वाक्यं वाक्यार्थश्च

वस्तुतो वाक्यमखण्डमेव वाचकम्, वाक्यार्थश्चाप्यखण्ड एव तद्वाच्यः। तथा हि—'त्वं ग्राममश्वः' इति वाक्येन त्वत्कर्तृकं ग्रामकर्मकं भूतकालिकं गमनमिति बोधो भवति। 'अश्वो गच्छति' इत्यनेन अश्वकर्तृकं गमनमिति बोधो जायते। उभयत्रापि 'अश्वः' इति शब्दस्य सत्त्वेऽपि बोधे वैलक्षण्यमखण्डवाक्यार्थकृतमेव। प्रथमवाक्ये 'अश्वः' इति श्विधातोर्लुङि सिपि 'जृस्तम्भु....'[5] इत्यङि 'श्वयतेरः'[6] इत्यकारादेशे तिङन्तं रूपम्। द्वितीये वाक्येऽश्वशब्दस्य प्रथमैकवचने सौ रूपम्। उभयत्र सुबन्ततिङन्तयोः सादृश्येन क्रियाकारकान्यतरार्थकत्वेनानिश्चयात्। वाक्यार्थबोधोत्तरमेव पदपदार्थनिर्णयः, न तु ततः पूर्वम्। एवं च स्फोटरूपमखण्डमेव वाक्यं निराकाङ्क्षवाचकत्वेनाभ्युपेयम्। "अ जापयः शत्रून्", "अजापयः पिब" इत्यादिष्वपीयमेव गतिः। उक्तं च हरिणा—

> यथैवानर्थकैर्वर्णैर्विशिष्टार्थोऽभिधीयते ।
> पदैरनर्थकैरेवं विशिष्टार्थोऽभिधीयते ॥[7]
> नहि किञ्चित् पदं नाम रूपेण नियतं क्वचित् ।
> पदानामर्थरूपञ्च वाक्यार्थादेव जायते ॥[8]

अयमाशयः—यथाऽनर्थकैर्वर्णैर्विशिष्टोऽर्थो यस्य स पदरूपः स्फोटात्मा वाचकोऽभिधीयते (अभिव्यज्यते)। एवं पदैरनर्थकैरभिव्यक्तो विशिष्टोऽर्थो यस्य सः स्फोटात्मा (वाक्यरूपः) वाचकोऽभिधीयते इति पुण्यराजः।

वाक्येऽखण्डत्वं चापृथगुपस्थितिजनकत्वम्। वाक्यार्थेऽखण्डत्वञ्चापृथगुपस्थितिविषयत्वम्।

---

१. वा० प० २।१४४।  २. वा० प० २।४१७।  ३. वा० प० २।४२।
४. वा० प० २।४४, २।४६, २।११४, २।१८, २।४१८।  ५. पा० सू० ३।१।५८।
६. पा० सू० ७।४।१८।  ७. वा० प०—२।४१६।  ८. वा० प०—३।७६।

यत्तु—केवलानां पदानां पृथगुपस्थापकत्वम्, वृत्तिघटकानामपृथगुपस्थापकत्वमिति, तत्तु शास्त्रकृतां कल्पनामात्रमेव। यदपि केवलं पदं सदित्यादि प्रयुज्यते, तदप्यन्ततोऽस्तिक्रियाघटितार्थबोधकमिति वाक्यमेव। साधनस्य साध्यक्रियाकाङ्क्षत्वात् साध्यक्रियायाश्च साधनाकाङ्क्षत्वात्।

**अखण्डवाक्यार्थस्वरूपम्**

ननु पदपदार्थयोः काल्पनिकत्वेऽपि 'देवदत्त गामभ्याज शुक्लां दण्डेन' इत्यादौ क्रियाकारकभावसम्बन्धस्य मानं त्वप्रामाणिकमनवस्थाग्रस्तं चेति चेदुच्यते—पदार्थानां परस्परं विशेषणविशेष्यभावरूपस्य संसर्गस्यैव वाक्यार्थतया स्वीकृतत्वात्। यद्यपि विभक्तिप्रकृत्यर्थनिष्ठविशेषणत्वमपि विभक्तिवाच्यमेव, तथाऽपि विशेष्यनिष्ठमितरपदार्थनिष्ठविशेषणतानिरूपितविशेष्यत्वं वाक्यार्थ इति पर्यवस्यति।

**८. वाक्यार्थे वाक्यस्य शक्तिसम्बन्धः**

नन्वितरपदार्थनिष्ठविशेषणतानिरूपितविशेष्यतारूपवाक्यार्थस्य वाक्यघटकपदानुपस्थितत्वेनापूर्वत्वात्तत्र शक्तिग्रहो न सम्भवति। यदि तत्रापि तद्घटकपदस्य शक्तिः स्वीक्रियते, तदाऽपूर्वत्वं तस्य हीयय इति चेदुच्यते—वृद्धव्यवहारदर्शनसहकृतेन मनसोपस्थितिविषये तस्मिन् शक्तिग्रहः सम्भवति, क्वचिदुपदेशेनापि तद्ग्रहस्य सम्भवः। क्वचिच्चाकाङ्क्षावशात्तदैव शक्तिग्रहो बोधश्च। पश्चाच्छास्त्रकृत्कल्पिताभ्यामन्वयव्यतिरेकाभ्यां तत्तत्पदार्थे तत्तत्पदस्य शक्तिर्व्यवतिष्ठते इति वाक्ये उक्तान्वयविषयाशक्तिः पर्यवस्यति।

एवञ्च सर्वथाऽज्ञातः सम्बन्धो वाक्यार्थतया भासते इति त्वनुभवपक्षं नारोहति। अर्थवत्सूत्रे भाष्ये चैतत्स्पष्टमस्ति। तत्र हि—'वीरः पुरुषः' इत्यादौ विशेषणविशेष्यरूपं पदाधिक्यं स वाक्यार्थ इत्युक्तम्। आधिक्यमिति स्वार्थे ष्यञ्। ननु यथा घटपदस्य घटरूपेऽर्थे शक्तिस्तत्र घटत्वं प्रवृत्तिनिमित्तमस्ति, तथैवात्राऽपि किं प्रवृत्तिनिमित्तमस्तीति जिज्ञासायामुच्यते—अत्र किमपि नास्ति प्रवृत्तिनिमित्तम्। तदुक्तम्—**'वाक्यरूपस्य वाक्यार्थे वृत्तिरन्यानपेक्षया'**[1]।

यदि त्वाकाङ्क्षादिसहकारेण वाक्यघटकपदैरेवोक्तसंसर्गस्यापि भानसम्भवे, तत्र वाक्यस्य शक्तिकल्पने गौरवं प्रमाणाभावश्चेति शङ्क्यते, तत्रोच्यते तत्तत्समभिव्याहारेऽर्थासम्बद्धे बोधजनकत्वानुपपत्त्या समभिव्याहाररूपवाक्यस्यार्थेन सह सम्बन्ध आवश्यकः। यथा पदेषु तत्तदर्थसम्बन्धोऽस्ति, तद्वत्। एवं च पदशक्तिः केवलपदार्थबोधिका, वाक्यशक्तिस्तु विशिष्टार्थोपस्थापिकेति तत्त्वम्।

**९. वाक्यार्थस्याशाब्दत्वशङ्कानिरासः**

ननु पदार्थमात्राभिधानायावसितव्यापारेषु पदेषु पश्चात्पदार्थेभ्यः सह सम्बन्धो गम्यत इति स्थितो वाक्यार्थोऽशाब्दः कथं न स्यादिति चेत्, अत्रोच्यते—

**अशाब्दे चापि वाक्यार्थे न पदार्थेष्वशाब्दता।**
**वाक्यार्थस्येव नैतेषां निमित्तान्तरसम्भवः॥**[2]

---

१. वा० प० २।२६४; २. श्लो० वा०, वाक्याधि०–७।२३०।

पदार्थानां शाब्दत्वेन वाक्यार्थस्यापि शब्दप्रतिपाद्यत्वम्। तथा च शब्दानां तत्परत्वाच्च शाब्दत्वं सिद्ध्यति। शब्दानां वाक्यार्थे हि तात्पर्यम्, न तु पदार्थेषु, तेषां प्रमाणान्तरसिद्धत्वात्। अतो यद्यप्यभिधाव्यापारः पदार्थेष्वेव पर्यवसितः, तथापि तात्पर्याख्यव्यापारस्यापर्यवसितस्य वाक्यार्थपर्यन्तत्वात् तात्पर्ये शब्दस्य प्रामाण्यात् सिद्ध्यति शब्दे प्रमेयतया वाक्यार्थस्य शाब्दत्वमिति हृदयम्।

विधिनियोग-भावनानामन्यतमस्य वाक्यार्थत्वं निरूपितमस्ति मीमांसादर्शने; परन्त्वेषां पक्षाणां मध्ये प्रतिभारूपस्य वाक्यार्थत्वपक्ष एवात्र निबन्धे वर्णनीयत्वेनाभ्युपगम्यतोऽस्ति। अतः प्रतिभारूपोऽर्थो विमृश्यते। यतश्च व्याकरणदर्शने प्रतिभाया वाक्यार्थत्वं सिद्धान्तितमस्ति।

**१०. प्रतिभोत्पत्तिप्रकारः**

> विच्छेदग्रहणेऽन्येषां प्रतिभाऽन्यैव जायते।
> वाक्यार्थ इति तामाहुः पदार्थैरुपपादिताम्॥[1]

**अयमाशयः**—विच्छिन्नेभ्यः पृथग्भूतेभ्यो देवदत्तादिपदेभ्यस्तदर्थानां पार्थक्येनैव ग्रहणं भवति। तदनु शाब्दबोधावसरे पदार्थविषयकबुद्धिभिन्ना एका प्रतिभा उत्पद्यते, वैयाकरणास्तां प्रतिभां वाक्यार्थं वदन्ति। असत्यैः पदार्थैरेवेयमभिव्यक्ता भवति।

**प्रतिभायाः स्वरूपम्**—सा चैषा प्रतिभोपजायमाना इदं तदिति रूपेणान्यं प्रति निरूपयितुं न शक्यते, केवलस्वसंवेदनसिद्धैवासौ भवति। उक्तं च हरिणा—

> इदं तदिति साऽन्येषामनाख्येया कथञ्चन।
> प्रत्यात्मवृत्तिसिद्धा सा कर्त्राऽपि न निरूप्यते॥[2]

पुनश्च असंसृष्टानामर्थानां सा उपश्लेषं मेलनं सम्पादयति। उक्तं च-'**उपश्लेषमिवार्थानां सा करोत्यविचारिता**[3]।' सा च संस्कारविशेषरूपभावनासहकृतेन शब्देनोत्पन्ना भवति। इति—कर्तव्यताविषये एनां कोऽपि नातिक्रामति सर्वाऽपि इतिकर्तव्यता प्रतिभाजन्यैव भवति।

**११. प्रतिभायाः कार्यविशेषे हेतुता**

सर्वो लोकः स्वां स्वां प्रतिभां प्रमाणतयाऽभ्युपगच्छति। उक्तं च कविकुलतिलकेन कालिदासेन-'**सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः**'[4] इति। पशुपक्षिणामपि जन्मकालादेव स्वस्वजात्युचिताः सर्वे समारम्भाः स्वस्वप्रतिभावशादेव जायन्ते। एषा च प्रतिभा जन्मान्तरीयसंस्कारजन्याऽपि—यथा मधुमासे पुंस्कोकिलस्य पञ्चमस्वरविरावः, शिक्षारूपप्रयत्ननिरपेक्ष एव भवति। लूताजन्तूनां लालातन्तुभिः कुलायरचना जन्मान्तरीयसंस्कारहेतुकप्रतिभाबलादेव सम्पद्यते। मूषकभक्षणे मार्जारस्य, स्वामिसेवायां शुनाम्, परस्परद्वेषक्रियायां गोव्याघ्रयोरहिनकुलयोरश्वमहिषयोः काकोलूकयोः, जले प्लवनक्रियायां गोमहिषादीनां प्रतिभामन्तरा कः प्रयोक्ता। तदेवं प्रतिप्राण्याहारादिक्रिया प्रतिभामाहात्म्येनैव लोके प्रसिद्धाऽस्ति।

---

१. वा० प० २।१४४।  २. वा० प० २।१४६।  ३. वा० प० २।१४७।
४. अभिज्ञानशाकुन्तलम्— १।१९।

**१२. प्रतिभाया भेदाः**

प्रतिभा कारणभेदेन षड्विधत्वं भजते। तथाहि—प्रथमा स्वभावजन्या प्रतिभा, यथा वानराणां शाखाप्लवनादिषु। यथा वापरस्याः प्रकृतेरव्यक्तस्वरूपायाः प्रथमं सत्तामात्रस्वरूपं महान्तमात्मानं प्रत्यानुगुण्यम्। स्वभावेनैव हि परस्याः प्रकृतेर्महदाकारेण परिणामानुगुण्यम्, सुषुप्तावस्थस्येव पुरुषस्य प्रबोधानुण्यम्, निद्राया अपि तमः परिणामरूपायाः परमानन्दफलसत्तामात्रं प्रत्यानुगुण्यम्, एतत्सर्वं प्रतिभैव बोध्यम्। तथा चात्र स्वभावः प्रतिभा इति ज्ञातव्यम्।

द्वितीया प्रतिभा सदाचारहेतुका ज्ञेया। सदाचारश्च द्विविधः—शास्त्रविहिततपश्चरणम्, स्वाध्यायादिकं वा यथा सदाचारेणैव भूतभविष्यद्वर्तमानविषयकप्रकाशविशेषाणां वसिष्ठादिमहर्षीणां प्रतिभा।

अभ्यासहेतुका प्रतिभा तृतीया। यथा कूपादिखानकानां कूपतडागादिखननाभ्यासनिमित्तिका प्रतिभा। ते ह्यभ्यासेनैव भूमौ जलनाडीः परिज्ञाय कूपं खनन्ति।

योगहेतुका प्रतिभा चतुर्थी। यथा— योगिनां परकीयाभिप्रायज्ञानादिषु।

अदृष्टहेतुका प्रतिभा पञ्चमी। यथा रक्षसां पिशाचानां पितॄणां च परशरीरप्रवेशान्तर्धानादिक्रियासु।

तपोयोगादिसिद्धिसम्पत्तिशालिनां तत्कालमेवोपस्थापिता प्रतिभा षष्ठी। यथा—महाभारतयुद्धसमये बहुदेशव्यापियुद्धवृत्तस्य सम्यग्ज्ञानाय वेदव्यासादिभिरुपहिता सञ्जयादीनां प्रतिभा।

इत्थं बहुविधाऽपि प्रतिभा आगमिकवाक्याभिव्यङ्ग्या, तन्मूलकलौकिकवाक्यप्रतिपाद्या च। प्रतिभाया एते भेदाः श्रीमद्भर्तृहरिणा प्रदर्शिताः।[1]

**१३. प्रतिभाया उद्बोधने शब्दस्य हेतुता**

पदरूपो वाक्यरूपो ध्वन्यात्मको वर्णात्मको वा सर्वोऽपि शब्दो बालानां तिरश्चामपि चाविदितसंकेतानां किमुत गृहीतसंकेतानां बुद्धिमतामपि यथार्थप्रतिपादनपुरस्सरं व्यवहारे प्रयुज्यमानानां तत्तच्छब्दानां तदर्थानां च ग्रहाभ्यासवशाज्जनितसंस्कारेण इष्टप्रतिभां जनयति। यथा करतालिकाशब्देन काकानां पलायनम्। घण्टाशब्देन छात्राणामध्यापकानां चाध्ययनेऽध्यापने प्रवृत्तिः। तत्र ध्वन्यात्मकशब्दस्यैव हेतुत्वं वर्तते। जडानामपि प्राणिनां साण्डमहिषादीनामभिमुखीकरणार्थं नियतः शब्द उच्चार्यते। तेन स्वस्वजात्यनुसारिणी नियता काचन प्रतिभा उद्बोध्यत इति प्रतिभाहेतुक एव सर्वोऽपि प्रवृत्तिनिवृत्त्यन्यतरो व्यवहारः। उक्तं च हरिणा —

अभ्यासात् प्रतिभा हेतुः शब्दः सर्वोऽपरैः स्मृतः।
बालानां च तिरश्चां च यथार्थप्रतिपादने[2] ॥ इति।

तत्त्वसङ्ग्रहनामके ग्रन्थ आचार्यश्रीकमलशीलेनायं श्लोक इत्थं व्याख्यातोऽस्ति—'शब्दस्य क्वचिद्विषये पुनः पुनः प्रवृत्तिदर्शनमभ्यासः। नियतसाधनावच्छिन्नक्रियाप्रतिपत्त्यनुकूला प्रज्ञा प्रतिभा। सा प्रयोगदर्शनावृत्तिसहितेन शब्देन जन्यते। प्रतिवाक्यं प्रतिपुरुषं च सा

१. वा० प० २।१४४।१५४; २. वा० प० २।११९।

भिद्यते। स तु तस्या अपरिमाणो भेदः शब्दव्यवहारस्यानन्त्यान्न शक्यतेऽभिधातुमित्यत आह-बालानां च तिरश्चां च' इत्यादि। यथैव ह्यङ्कुशाभिघातादयो हस्त्यादीनामर्थप्रतिपत्तौ क्रियमाणायां प्रतिभाहेतवो भवन्ति, तथा सर्वेऽर्थवत्सम्मता वृक्षादयः शब्दा यथाभ्यासं प्रतिभामात्रोपसंहारहेतवो भवन्ति, न त्वर्थं साक्षात् प्रतिपादयन्ति। अन्यथा हि कथं परस्परपराहताः प्रवचनभेदा उत्पाद्य कथाप्रबन्धाश्च स्वविकल्पोपरचितपदार्थभेदद्योतकाः स्युरिति।

न्यायकणिकायां विधिविवेके श्रीवाचस्पतिमिश्रैरिदं पद्यमेवं व्याख्यातमस्ति—'अभ्यासजनितां भावनामभ्यासशब्देनाह–कार्ये कारणोपचारात्। नाभिधानाधीनोऽर्थबोधः शब्दात्, अपि त्वभ्यासाधीनः। यथा हि खलु कशाङ्कुशाभिघातादयोऽनभिधायका अपि वाजिगजादीनामभ्यासात् स्वतः प्रवृत्तिनिवृत्तिहेतुमर्थप्रतिभासां प्रतिभां भावयन्तः प्रवर्त्तका निवर्तकाश्च। तथा संक्षेपतः सर्वः शब्दो व्युत्पन्नानामव्युत्पन्नानां चेह जन्मनीत्यर्थः। अयं च प्राग्भवीयोऽभ्यासोऽवश्यमभ्युपेय इत्यत्र दृष्टान्तमाह बालानां तिरश्चां च यथाऽर्थप्रतिपादने इति। अर्थाभासप्रतिभोत्पादनेन चार्थप्रतिपादनमुक्तम्' इति।

एवञ्चाभ्यासजनितया भावनया सह कृतः शब्दः प्रतिभोद्बोधने हेतुरित्यायातम्।

## १४. प्रतिभाया हेतुरभ्यासः

बालानां तिरश्चां च प्रतिभाहेतुरभ्यासः प्राग्जन्मभवः, शास्त्राभ्यासशिक्षादिजन्यस्तु यूनां स्थविराणां च। अयं चाभ्यासः संकेतस्वरूपः समय इष्यते कैश्चिदाचार्यैः। स चाभ्यासः अस्मादनन्तरमिदं कार्यमित्युपदर्शनरूपा या प्रतिभा तद्धेतुस्वभावः। यथा कशाभिघातमात्रसमनन्तरमेवाश्वा अति धावन्ति, अङ्कुशताडनेन च गजा द्रुतगामिनो भवन्ति। एवमन्येऽपि प्राणिनो यथास्वभावमनादिवासनाभ्यासवशात् स्वीयप्रतिभया स्वजात्युचितं व्यवहारं कुर्वाणा अनुभूयन्ते। तदेतदुक्तं हरिणा—'अनागमश्च सोऽभ्यासः समयः कैश्चिदिष्यते'[1] इति।

अयमाशयः—आगम्यते प्राप्यते कार्यमस्मादित्यागमः कारणम्। अविद्यमान आगमो यस्मिन्नसावनागमोऽनादिरित्यर्थः। समयः संकेतः कैश्चिदिष्यते, यथा नैयायिकादय शब्दार्थसम्बन्धः समय ईश्वरकृत इत्याचक्षते। स चाभ्यासस्य भावनाया विषय इति कृत्वाऽभ्यास उच्यते।[2]

## १५. कार्यताज्ञानस्य प्रतिभारूपता

तत्रास्मादनन्तरमिति निमित्तस्य निर्देशः। इदं कार्यमिति तु स्वरूपनिर्देशः। तत्र स्वभावादिभिर्हेतुभिर्विभागेन पदार्थानामुपस्थितौ सत्यामनन्तरं विशिष्टार्थविषयकं कार्यताज्ञानं यज्जायते, तदेव प्रतिभारूपमित्युच्यते। उक्तं च हरिणा—'अनन्तरमिदं कार्यमस्मादित्युपदर्शनम्'[3], 'उपश्लेषमिवार्थानां सा करोत्यविचारिता'[4] इति।

एषा च कार्यताज्ञानात्मिका प्रतिभा सर्वेषां प्राणिनां प्रवृत्तिनिवृत्तिरूपाणां व्यवहाराणां जननी। उक्तं च हरिणा—

---

१. वा० प० २।१२०।१/२।    २. न्या० क०—विधिविवेकः।
३. वा० प० २।१२०।१/२।    ४. वा० प०—२।१४५।

प्रमाणत्वेन तां लोकः सर्वः समनुपश्यति ।
समारम्भाः प्रतीयन्ते तिरश्चामपि तद्वशात् ॥[1]

एषा प्रतिभा यथा कार्यपरकवाक्यस्य प्रयोगे जायते, तथा सिद्धार्थपरवाक्यस्य प्रयोगेऽपि ।

एतावानेव भेदः—प्रथमस्थले प्रतिभा वाक्यार्थं इत्यवधानेन प्रतीयते, तत्र कार्यबोधकलिङादिप्रत्ययानां प्रयोगात् । द्वितीये स्थले तु कार्यताबोधकपदस्याध्याहारेण प्रतिभाया वाक्यार्थत्वम् । यथा चोपनिषत्सु सच्चिदानन्दाद्वयं ब्रह्मेति बोधे जाते कर्मणां तत्फलानां तत् साधनानां चासत्त्वम्, कर्मसु प्रवृत्ते वैफल्यम्, तादृशब्रह्मबोधे तस्याः प्रतिबन्धकत्वञ्च प्रतीयत इति सर्वोपरमविषयकः सङ्कल्पः कर्त्तव्य इति प्रतिभा तत्तत्पदानामध्याहारेण जायते ।

वाक्यार्थज्ञानमूलकतया तत्र वाक्यार्थ इति व्यवहारो भवति, अत एव 'यत्परः शब्दः स वाक्यार्थः' इति शिष्टानामुक्तिः सङ्गच्छते । अयमेव सङ्कल्पो विविदिषा सन्न्यासशब्देन व्यवह्रियते, सर्वकर्मसन्न्यासकारणत्वात् । वेदान्तशास्त्रस्य तु न कार्यपरत्वमिति श्रीशङ्करभगवत्पादानां कथनं तादृशसङ्कल्पातिरिक्तकर्मपरत्वनिषेधपरमिति बोध्यम्, यागादिकर्मपरकमीमांसकमतप्रत्याख्यानपरत्वात् ।

लोकेऽपि 'चैत्रः पुत्रस्ते जातः' इति सिद्धार्थपरे वाक्ये तादृशकार्यताज्ञानरूपा प्रतिभाऽस्त्येव । तत्रापि अस्मादनन्तरमिदं कार्यमिति ज्ञानस्यानुभवसिद्धत्वात् । कथमन्यथा पुत्रदर्शनादौ पुत्रसंस्कारादिकर्मणि तद्रक्षणादिकर्मणि च प्रवृत्तिः ? तस्मात् सर्वत्र प्रतिभैव वाक्यार्थः, प्रवृत्तिनिवृत्तिरूपव्यवहारसिद्धयर्थमेव वाक्यानां प्रयोग इति सिद्धान्तात् । कार्यताज्ञानं च विना प्रवृत्तिनिवृत्त्योरसिद्धेः । निषेधस्थलेऽपि सर्वत्र प्रवृत्त्यौदासीन्यरूपनिवृत्तिविषयकसङ्कल्पस्यैव कार्यत्वम्, 'नोच्चरेदसंस्कृतां गिरम्' इत्यादौ तथा स्वीकारादिति ।

अत्र निष्कर्षः

एवं चायमेवोक्तविशेष्यत्वरूपो वाक्यार्थः प्रतिभामात्रविषयत्वात् प्रतिभापदेन व्यपदिश्यते । अतः सुष्ठूच्यते—प्रतिभारूपो वाक्यार्थं इति । घटपटादयोऽर्थास्तु चक्षुरादिविषयाः सन्तो बुद्धिविषया भवन्ति; परन्तूक्तान्वयरूपो वाक्यार्थः प्रतिभामात्रविषयो भवतीति विशेषः ।

यद्यप्यत्राप्यन्वयरूपो वाक्यार्थो मनसा वृद्धोपदेशादिना वा गृह्यत इत्युक्तं प्राक्, तथाऽपि न तेन विरोधः, वाक्यार्थबोधात् प्राक्काले मनसोपदेशादिना वा ग्रहणस्य सा चर्चा, न तु शाब्दबोधवेलायाम् । अस्यामवस्थायां त्वन्तःकरणवृत्तिविशेषरूपा शब्दजन्या या प्रतिभा, सैव तमन्वयं विषयीकरोति, न तु वृत्तिसामान्यम्, मतान्तरीयं बोधसामान्यं वा ।

अतश्चायं निष्कर्ष आयातः—घटादयोऽर्थाश्चक्षुरादिविषयाः सन्तः सामान्यबुद्धिविषया भवन्ति । परन्तूक्तान्वयरूपो वाक्यार्थः प्रतिभाख्यबुद्धिविशेषस्यैव विषयः, नान्यस्येति महान् विशेष इति शम् ।

• • •

१. वा प०—२।१४७ ।

# वैयाकरणानां शब्दसृष्टिप्रक्रियाविमर्शः

श्रीरामानन्द ओझाः
प्राचार्यचरः
रीवांस्थशासकीयव्यंकटसंस्कृतोपाधिमहाविद्यालयस्य

नमो वाङ्मनसातीतशब्दरूपाय ब्रह्मणे ।
यत्प्रपञ्चमिदं सर्वं नामरूपात्मकं जगत् ॥

इह परमेश्वरस्य लीलाविलासात्मकसृष्टावविरलप्रवाहितत्रिविधतापाभिभूतानामत एवाशान्तचेतसां सकलप्राणिनां मनोऽभिलषिताक्षयानन्दावाप्तिकामनया तत्त्रिविधदुःखाभिघातार्थं मनोवृत्तिराविर्भवतीति नाविदितचरं सर्वेषाम् । तदभिघातश्च तत्कारणनाशादेव । तत्कारणञ्च मायाजनितमावरणात्मकमज्ञानम् । तदेवाज्ञानमविद्या । सृष्टिश्चाविद्यासंवलितब्रह्मणो विवर्तरूपा । 'इन्द्रो मायाभिः पुरुरूप ईयते', 'रूपं रूपं प्रतिरूपो बभूव' इत्यादिश्रुतेः । तथा चाविद्यारूपावरणभङ्गादेव निरतिशयानन्दप्राप्तिः । आवरणभङ्गश्च ब्रह्मज्ञानात् । तदुक्तम्—'आनन्दं ब्रह्मेति व्यजानात्' इत्यादिश्रुत्याऽऽनन्दब्रह्मणोर्न पार्थक्यम् । तच्च ब्रह्मज्ञानं दर्शनशास्त्रानुशीलनपूर्वकं श्रवणमनननिदिध्यासनसाध्यम् ।

अत्र च भिन्नभिन्नदर्शनशास्त्राणि न्याय-वेदान्तादिभिन्नभिन्नमतानुसारं निर्मितानि सन्ति । तत्र व्याकरणदर्शनञ्च न तिरोहितं प्रेक्षावताम् । दार्शनिकदृष्टिकोणमाश्रित्यैव पाणिनिसूत्राणि, कात्यायनवार्त्तिकानि, पातञ्जलमहाभाष्यञ्चेत्यादयोऽनेके ग्रन्था निर्मिताः सन्ति । अत एव—

आसन्नं ब्रह्मणस्तस्य तपसामुत्तमं तपः ।
प्रथमं छन्दसामङ्गं प्राहुर्व्याकरणं बुधाः ॥[1]

इति वाक्यपदीयकारेणोक्तम् । तत्रानेकदर्शनसम्बन्धिविषयाणां यद्यपि विवेचनं विद्यते, तथापि वैयाकरणमते सृष्टिक्रमविचारसारपरोऽयमायासितो निबन्धः ।

तत्रान्यदार्शनिकानामपि संक्षेपतो मतविचारस्यावश्यकत्वं मत्वा सृष्टिविचारात्पूर्वं सृष्टिकर्तृविचार आवश्यकः । अतोऽत्र नैयायिकादिप्रसिद्धदार्शनिकसिद्धान्तितं प्रस्तूयते । नामरूपात्मकं जगत् कस्यचित्कार्यरूपं कार्यत्वाद् घटवदित्यनुमानेन प्रत्यक्षतो दृश्यमानं जगदपि यत्किञ्चित्कर्तृजन्यं भवेदेव । तच्च कर्तृत्वं नास्मदादीनां सम्भवति । अतो यो ह्यस्य कर्ता स एव ईश्वरः, ब्रह्म जगत्कारणमिति । कारणं त्रिविधम्—समवाय्यसमवायिनिमित्तभेदात् । 'द्यावाभूमिं जनयन् देव एको विश्वस्य कर्ता भुवनस्य गोप्ता'[2] इति श्रुत्या जगतो निमित्तकारणमेव ब्रह्म । अत एव हि—

---

१. वाक्यपदीयम्—१।११ ।     २. तै० सं० ४।६।२।४ ।

नूतनजलधररुचये गोपवधूटीदुकूलचौराय ।
तस्मै कृष्णाय नमः संसारमहीरुहस्य बीजाय ॥[१]

इत्यत्रेश्वरस्य बीजत्वकथनं सङ्गच्छते । 'अहं सर्वस्य प्रभवः, मत्तः सर्वं प्रवर्तते'[२] इत्यागमाः ।

यतः सर्वाणि भूतानि भवन्त्यादियुगागमे ।
यस्मिँश्च प्रलयं यान्ति पुनरेव युगक्षये ॥

इत्यादिस्मृतयश्चानुकूलाः । एतत्सर्वं पर्य्यालोच्य ब्रह्मणो निमित्तकारणत्वमेवायातीति निश्चीयते । तेषां नये त्वाकाशादिपरमाणूनां नित्यत्वस्वीकारेण परमाणुद्वयात् परस्परं सम्मील्य द्वयणुकमुत्पद्यते, द्वयणुकत्रयाच्च त्र्यणुकमुत्पद्यते इत्येवं क्रमेणाकाशादीनामुत्पत्तिः । तथा च परमाणव एव जगत्समवायिकारणमीश्वरस्त्वनुमानगम्यत्वान्निमित्तकारणमेव । ईश्वरेच्छाशक्त्या परमाणुभ्यो जगतः सृष्टिरिति नैयायिकप्रवराः ।

वेदान्तिनां तु मते—'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति······ संविशन्ति'[३] इत्यादिश्रुत्या मायोपाधिकस्यैव ब्रह्मणो जगदुपादानकारणत्वम् । अनयैव श्रुत्या स्थितिलयकारणत्वमपि ब्रह्मण एव । माया चाज्ञानरूपाऽविद्या । तथा च तमःप्रधानाद् विक्षेपशक्तिमदज्ञानोपहितचैतन्यादाकाशः, आकाशाद् वायुः, वायोस्तेजः, तेजस आपः, अद्भ्यः पृथिवी इत्युत्पत्तिक्रमः । अत्र च 'तस्माद् वा एतस्मादात्मन आकाशः सम्भूतः'[४] इत्यादिश्रुतिर्मानम् । अतो नामरूपात्मकस्यानेककर्तृभोक्तृसंयुक्तस्य व्यवस्थितदेशकालनिमित्तक्रियाफलकस्य जगतो जन्मस्थितिनाशादि यस्मात् सर्वज्ञात् सर्वशक्तिमतश्च भवति तदेव ब्रह्म । जगच्च प्रतिभासमात्रमनित्यम् । यथा रज्जौ सर्पस्य शुक्तौ रजतस्य वा रज्जुशुक्तिसत्तातिरिक्तसत्ता नास्ति, तथैवास्य जगत्प्रपञ्चस्य ब्रह्मसत्तातिरिक्तसत्ता नास्ति । यावद् रज्जुशुक्ती न प्रतीयेते, तावदेव सर्परजतयोर्भानम् । एवमेव यावद् ब्रह्मज्ञानं नास्ति, तावदेव जगतः प्रतीतिरिति सिद्धान्तः । 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते, आकाशं प्रत्यस्तं यान्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम्'[५] इति श्रुत्यापि परस्माद् ब्रह्मणो भूतानां सम्भवः । अत्राकाशशब्दो ब्रह्मपरो न भूतपरः ।

साङ्ख्यास्तु द्वैतप्रतिपादकास्ते च प्रधानम् (प्रकृतिः) पुरुषश्च तत्त्वद्वयम् । अत प्रकृतिर्जडा त्रिगुणात्मिका, पुरुषस्तु चेतनः । एतयोरेव परस्परसम्बन्धेन जगत आविर्भावः । तन्मते कारणगतमेव कार्यमव्यक्तरूपेण विद्यते । सत्त्वरजस्तमसां वैषम्य एव जगदुत्पद्यत इति मन्वते ।

अथेदानीं ब्रह्मप्रतिमूर्तिभूतस्य वेदस्य प्रधानाङ्गस्य व्याकरणशास्त्रस्यापि दर्शनपरकत्वमिति सिद्धान्तं विचारयितुं प्रथमं पाणिनिमतमुपस्थाप्यते । तत्र शाब्दिकानां नये शब्द एव ब्रह्मेति सिद्धान्तितत्वात् तन्मते कीदृशं ब्रह्मेति विवक्षायां महर्षिपाणिनेः प्रातिपदिकसंज्ञासूत्र-

---

१. न्यायसिद्धान्तमुक्तावली, श्लोकः १ । २. गीता—१०।८।
३. तै० सं० २।४; ४. छा० उ० ३।९।१; ५. तदेव—३।९।१ ।

मुपस्थापयामि—'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्'[1] इति। प्रातिपदिकपदस्य, पदं पदमिति प्रतिपदम्, प्रतिपदमर्हतीति प्रातिपदिकमिति व्युत्पत्त्या शब्दस्य सर्वस्थानस्थितत्वाद् व्यापकत्वम्। अधातुरित्यस्य धातुः सर्वशब्दप्रकृतिः, सोऽविद्यमानो यत्रेति व्युत्पत्त्या, अप्रत्यय इत्यस्य चाविद्यमानः प्रत्ययो यत्रेति व्युत्पत्त्या चाधात्वप्रत्ययपदाभ्यां प्रकृतिप्रत्ययविभागराहित्यं संहृतक्रमरूपत्वमपरिच्छिन्नत्वञ्च शब्दब्रह्मण इति सूचितम्। अर्थवदित्यनेन च घटपटाद्यर्थयुक्तत्वं सूच्यते। तथा च महर्षिपाणिनिनार्थवदिति सूत्रं विरचय्यापरिच्छिन्नः पूर्वापरीभावशून्यः, अत एवोत्पादविनाशरहितो व्यापकोऽर्थवानेव शब्दो ब्रह्मेत्यत्राभिप्रायः प्रदर्शितः। अत्रार्थशब्देन च शक्तिरवगम्यते। तथा च ब्रह्मणि शक्तिमत्त्वमायाति। एवञ्च शक्तिमद् ब्रह्मैव सृष्टिं करोतीति निष्कर्षः। अत एव केषाञ्चिद् वैयाकरणानां मते शक्तिमत्त्वमर्थवत्त्वमिति स्वीक्रियते।

एतदनन्तरञ्च 'कृत्तद्धितसमासाश्च'[2] इति सूत्रं वदता महर्षिणा शब्दब्रह्मणि कर्तृत्वं पालकत्वं संहारकत्वमपि प्रदर्शितम्। तद् यथा करोतीति कृदित्यनेन जगत्स्रष्टृत्वम्, तस्मादुत्पन्नाय जगते हितस्तद्धित इत्यनेन रक्षकत्वम्, समसनं संक्षेपकरणमिति समास इत्यनेन संहारशक्तिमत्त्वमिति। तथा चैवं भूतस्य नित्यस्य शब्दब्रह्मणः प्रतिमारूप एव वेदो यस्याङ्गभूतमिदं व्याकरणं कल्पितप्रकृतिप्रत्ययविभागाभ्यां तत्तदर्थविभागं जनयति। अत एवात्र नामरूपात्मकस्य जगतोऽपारमार्थिकव्यवहारा अपि लोकवद्दर्शिताः। अर्थाल्लोके यथा कलहस्तदनन्तरञ्च सन्धिस्तथैव व्याकरणेऽपि पूर्वं विगृह्य पश्चाच्च सन्धिर्विधीयते। समासव्यासादिश्चापि व्यवहाराः समुपलभ्यन्ते। 'पृषोदरादीनि यथोपदिष्टम्'[3] इति सूत्रेऽपि यथोपदिष्टशब्दस्य साधुत्वाभिज्ञानेन 'लुपि युक्तवद् व्यक्तिवचने'[4], 'तदशिष्यं संज्ञाप्रमाणत्वात्'[5] सूत्रेण सूत्रकृतोक्ताभिप्राये समादरो दर्शितः।

महर्षिकात्यायनो महर्षिपतञ्जलिश्चापि शब्दार्थसम्बन्धस्य नित्यत्वं मन्वाते। शब्दानां नित्यत्वानित्यत्वपक्षावपि स्तः। तत्रासत्योपाध्यवच्छिन्न एव शब्दोऽनित्यः। असत्योपाध्यनवच्छिन्नः शब्दो नित्यः। स एव ब्रह्मापरनामधेयः।

चत्वारि शृङ्गास्त्रयो अस्य पादा द्वे शीर्षे सप्तहस्तासो अस्य।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश॥[6]

इति प्रयोजनव्याख्यानावसरे महता देवेन नः साम्यं यथा स्यादिति कथनेन स्वतः प्रकाशेन शब्दब्रह्मणा नः साम्यमित्यभिप्रायो लभ्यते। ब्रह्मविद् ब्रह्मैव भवतीति रीत्या शब्दविदामपि शब्दब्रह्मसाम्यं यथा स्यादित्यभिप्रायः। वार्तिककृतापि 'सिद्धे शब्दार्थसम्बन्धे,[7] 'सिद्धन्तु नित्यशब्दत्वात्' इति वार्तिकाभ्यां 'संग्रहे तावत्प्राधान्येन परीक्षितं नित्येषु शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यम्' इति।

सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः।
एकदेशविकारे हि नित्यत्वन्नोपचर्यते॥[8]

---

१. अष्टाध्यायी—१।२।४५। २. तदेव—१।२।४६। ३. अष्टाध्यायी—६।३।१०९।
४. तदेव—१।२।५१। ५. तदेव—१।२।५३। ६. महाभाष्यम्—पृ० ४०।
७. महाभाष्यम्—पृ० ५९। ८. तदेव—१।१।२०।

इत्यादिभिर्भाष्यकृतापि कण्ठत एव शब्दस्य नित्यत्वमखण्डत्वमुक्तम्, स एव शब्दोऽसत्योपाध्यवच्छिन्नो जगद्रूपेण विवर्तत इति मतस्थितिः। वैयाकरणमूर्धन्यो भर्तृहरिरप्यस्मिन्नेवार्थे सहमतिं जनयितुं वाक्यपदीयस्य प्रथमं श्लोकं पपाठ। तद्यथा—

अनादि निधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥[1]

उत्पादविनाशरहितः पूर्वापरीभावशून्य उपसंहृतक्रमश्च शब्द एव जगत उपादानकारणम्। तच्च शब्दतत्त्वमपरिच्छिन्ना सर्वतः संहृतक्रमा ग्राह्यग्राहकत्वशक्तिरहिता पश्यन्ती वागेव ब्रह्म। तदेवाविद्यालक्षणान्तःपश्यदवस्थया संश्लिष्टं ज्ञेयशून्यं चिन्मात्रं जीवः। विवर्तस्तु 'अतात्त्विकोऽन्यथाभावः' यथा शुक्ताविदं रजतमिति। 'सतात्त्विकोऽन्यथाभावः' इति परिणामः। यथा—पयो दधि भवति। यत्र तत्र विवर्तपरिणामशब्दयोः पर्यायत्वं दृश्यते। यथा—

एको रसः करुण एव निमित्तभेदाद्
भिन्नं पृथक् पृथगिवाश्रयते विवर्तान्।
आवर्तबुद्बुदतरङ्गमयान् विकारानम्भो
यथा सलिलमेव हि तत्समस्तम्॥[2]

इत्युत्तररामचरिते भवभूतिः।

नाशोत्पादासमालीढं ब्रह्मशब्दमयञ्च यत्।
यत्तस्य परिणामोऽयं भावग्रामः प्रतीयते॥[3]

इति शान्तिरक्षितस्य च प्रयोगः। अत्रापि परिणामपदेन विवर्त एवाभिप्रेतः। मुख्यतो विवर्तवादी हरिरपि—

शब्दस्य परिणामोऽयमित्याम्नाय विदो विदुः।
छन्दोभ्य एव प्रथममेतद्विश्वं व्यवर्तत॥[4]

इत्यादौ पर्यायत्वं स्वीकरोति।

तस्यैव शब्दब्रह्मण आरोपितभेदान् कालशक्तिमुपाश्रित्य जगतो जन्मादिषड्विकाराः जायन्ते। तस्य च भोक्तृभोक्तव्यरूपेण नानात्वमपि। तस्य प्रतिमारूप एव वेदः। स च एकोऽपि भिन्न-भिन्नमहर्षिभिराम्नातत्वाद् ऋग्यजुःसामाथर्वभेदेन चतुर्विध इव भवति। अभेदं समाहितं यत् —'अस्य महतो भूतस्य निःश्वसितमेतद् ऋग्वेदो यजुर्वेदो सामवेदोऽथर्वाङ्गिरसः'[5] इति चतुर्विध एव वेदो ब्रह्मणः सकाशादाविर्भूत इति केचित्।

तदेवं ब्रह्मस्वरूपं शब्दतत्त्वं प्रथमं वेदरूपेण व्यवर्तत। वेदस्यैवानन्तकलात्मकशक्तिभिर्जगद्विवर्तरूपम्। अन्ते च तस्मिन्नेव जगतो लयः। सर्वविद्याभेदा अपि वेदादेव। 'ओङ्कार एव सर्वावाक् सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति'[6] इति श्रुत्या वाक्यपदादिरूपा

---

१. वाक्यपदीयम्—१।१। २. उत्तररामचरितम्—३।४७। ३. तत्त्वसंग्रहः—का० १२८।
४. वा० प० १।१२०; ५. बृ० उ० २।४।१०। ६. जै० उ० १।२।२।२।

घटपटाद्यर्थरूपा च सृष्टिर्वेदादेव। स्फोटरूपात्मकं शब्दब्रह्मबुद्धिस्थं ध्वनिव्यङ्ग्यम्, यथाऽरणिस्थो वह्निर्मथनान्तरं दाहकत्वकारणं भवति, तथैव बुद्धिस्थोऽपि स्फोटोऽर्थज्ञानेच्छया श्रुतीनां पृथक् पृथक् कारणं भवति। शब्दश्च जलगतचन्द्रप्रतिबिम्बवद् नादस्य ह्रस्वदीर्घादिकत्वखत्वादिधर्मांश्चानुगच्छति। संक्षेपतः शब्दब्रह्मण एव नामरूपात्मकस्य जगतो विवर्तनमिति निष्कर्षः।

अत्र 'सूत्राणामनुतन्त्राणां भाष्याणाञ्च प्रणेतृभिः' इत्युक्त्या वाक्यपदीयकारमतं पाणिन्यादिसमर्थितमेव।

इत्थं निष्कृष्यमाणं यच्छब्दतत्त्वं निरञ्जनम्।
ब्रह्मैवेत्यक्षरं प्राहुस्तस्मै पूर्णात्मने नमः॥

इत्यन्तिममङ्गलकारिकायामेष एव सिद्धान्त आदृतः। 'नामरूपे व्याकरवाणि' इति श्रुत्या सृष्टिद्वयम्। सृष्टौ यथा रूपस्य कारणं ब्रह्म, तथैव शब्दस्यापि ब्रह्मैवोपादानम्। तद्विवर्तरूपाणां शब्दानां प्रकृतिप्रत्ययादीनां मनोमयादीनामाकाशादीनाञ्च प्रतिपादनन्त्वविद्याविलासरूपमेव, 'अत्रायं पुरुषः स्वयं ज्योतिः'[1], 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति'[2] इत्यादिश्रुतिवचनैः स्वपरप्रकाशात्मकस्फोट एव जगदुपादानमिति वैयाकरणभूषणसारकृत् श्रीकौण्डभट्टः; किन्तु स एव—

श्रीलक्ष्मीरमणं नौमि गौरीरमणरूपिणम्।
स्फोटरूपं यतः सर्वं जगदेतद्विवर्तते[3]॥

इति मङ्गलश्लोके स्फोटरूपं जगदिति स्वीकरोति। तत्रैवं भ्रमः स्याद् यदि स्फोटरूपमेव जगत्तर्हि स्फोटस्य नित्यता विहन्येत, जगत उत्पादविनाशशालित्वात् स्फोटस्य च ब्रह्मरूपत्वादतः स्फोटरूपशब्दस्य लक्ष्मीरमणशब्दस्यैव विशेषणस्वीकारेणाभ्रमः।

अथापि जगच्छब्दस्य विशेषणे बोधविषयीभूतस्य स्फोटशब्दस्य, अर्थविषयीभूतस्य रूपशब्दस्य च समाहारद्वन्द्वः। स्फोटश्च रूपश्चेत्यनयोः समाहारः स्फोटरूपमिति। अतो नास्ति भ्रमलेशप्रसङ्गावसरः।

नागेशमतेऽपि स्फुटत्यर्थोऽस्मादिति व्युत्पत्त्या शब्दतत्त्वमेव ब्रह्म। तस्मादेव नामार्थरूपस्य जगतः सृष्टिः। तत्क्रमश्चेत्थम्—महाप्रलयकाले सर्वेषां प्राणिनां सर्वकर्मणामुपभोगेन क्षयः। ततश्च भुक्तभोग्यानां प्राणिनां मायायां लयः, मायायाश्चेश्वरे लयः। लयश्च नात्यन्तिको नाशः, उत्तरसर्गोपपत्त्यवरोधात्। तथा चापृथग्भूतानामात्मन्यव्यस्तानामाकाशादीनां यो हि शुद्धे ब्रह्मणि लयः स च न मृदि घटवदनुपलब्धिरूपः; किन्तु रज्जौ सर्पस्येव प्रतिभाति। तस्यामवस्थायां माया सुप्तेव तिष्ठति, कार्याजनकत्वात्। कार्यस्यानुपपत्तेर्लयस्य स्वापसादृश्यम्। ततोऽपरिपक्वप्राणिकर्मभिः कालवशाल्लब्धपरिपाकैः फलप्रदानायेश्वरस्याविद्यापूर्विका सृष्टिर्मायापुरुषरूपेण जायते। ततश्च मायासंवलितस्य परमेश्वरस्य—'तदैक्षत बहु स्याम प्रजायेय'[4], 'एकोऽहं बहु स्याम्'[5], 'इदानीं स्रष्टव्यम्' इति सिसृक्षात्मिका बुद्धिर्जायते। ततस्त्रिगुणात्मकमव्यक्तं बिन्दुरूपं

---

१. बृ० उ० ३।९।१७। २. क० उ० २।५।१६। ३. वै० भू० १।
४. तै० उ० २।६।१। ५. बृ० उ० १।४।१७।

शक्तितत्त्वमाविर्भवति । ततस्त्रिगुणात्मकस्य बिन्दोरचिदंशो बीजम् । चिदंशो बिन्दुः । चिदचिन्मिश्रोंऽशो नादः । तत्राचिदंशः शब्दार्थोभयसंस्काररूपाऽविद्या । अस्मादेव गुणत्रयात्मकाद् बिन्दोर्वर्णविशेषरहितं ज्ञानप्रधानं सृष्ट्युपयोग्यवस्थाविशेषरूपं चेतनमिश्रं नादमात्रमुत्पद्यते । एतदेव जगदुपादानं रवपरा इत्युच्यते । ज्ञातस्यार्थस्य प्रकाशेच्छया प्रवृत्तस्य, इच्छया जातप्रयत्नेन योगः ।

एवं मूलाधारस्थपवनसंस्कारः । तदभिव्यक्तं शब्दब्रह्म स्वप्रतिष्ठतया निष्पन्दं परा वागित्युच्यते । तदेव नाभिपर्यन्तमागच्छता वायुनाऽभिव्यक्तं मनोविषयः 'पश्यन्ती' वागित्युच्यते । तद्द्वयं सूक्ष्मतमं सूक्ष्मतरमीश्वराधिदैवतं योगिनां समाधौ निर्विकल्पकसविकल्पकज्ञानविषय इत्युच्यते । तदनन्तरं हृदयदेशं स्पर्शवता वायुना तत्रैवाभिव्यक्तं तत्तदर्थविशेषबोधिन्या बुद्ध्या विषयीकृता हिरण्यगर्भदैवत्या परश्रोत्रेणाग्रहणयोग्या सूक्ष्मा कर्णपिधाने सूक्ष्मतरवाय्वभिघातेनोपांशुशब्दप्रयोगे च श्रूयमाणा 'मध्यमा' वागित्युच्यते । तथैवास्यपर्यन्तमागच्छता वायुना कण्ठदेशमागत्य मूर्धानमभिहत्य परावृत्य च कण्ठाधिस्थानाभिव्यक्ता स्वपरश्रोत्रग्रहणयोग्या विराडधिदैवत्या 'वैखरी' वागित्युच्यते । पर्य्यालोचनया परा वागेव जगदुपादानम्—इति सिध्यति ।

अत एव—

बिन्दोस्तस्माद् भिद्यमानाद्रवोऽव्यक्तात्मकोऽभवत् ।
स एव श्रुतिसम्पन्नैः शब्दब्रह्मेति गीयते[1] ॥

इति प्रपञ्चसारे प्रोक्तम् । तन्मते वाचां परा-पश्यन्ती-मध्यमा-वैखरीरूपेण चत्वारो भेदाः । सर्वार्थवाचकतासम्पन्नो मध्यमानादाभिव्यङ्ग्यः स्फोट एव नित्यः । किन्त्वेतत्सर्वम्—

वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम् ।
अनेकतीर्थभेदायास्त्रय्या वाचः परं पदम्[2] ॥

इति वाक्यपदीयकारमतविरुद्धम् । तत्र त्रिविधस्यैव वाक्तत्त्वस्य स्वीकारात् । तथा च यत्र वाचश्चतुर्विधत्वं तत्र परा वागेव ब्रह्म, यत्र च त्रैविध्यम्, तत्र पश्यन्ती वाग् ब्रह्म, यस्येदं विश्वं विवर्तरूपम् ।

इत्थं च विभिन्नमतविचारपूर्वकं वैयाकरणानां दार्शनिकविचारस्य संक्षेपतो विवेचनात्मकः सृष्टिप्रक्रियाविषयकोऽयं निबन्धो मया प्रस्तुतः । तत्र विषयस्यातिगहनत्वान्मादृशां संसारिणां चावश्यं भावितया भ्रान्त्या यो हि कश्चन दोषस्तन्निराकरणपूर्वकमेवानुगृह्णन्तु विपश्चिदपश्चिमा इति निवेद्य विरमत्ययमिति शम् ।

● ● ●

---

१. प्रपञ्चसारः—५।११ । २. वाक्यपदीयम्—१।१४३ ।

# द्वितीयाविचारे स्तोकं पचति

श्रीरुद्रप्रसादोऽवस्थी

सम्मानितप्राध्यापकः—सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

इदं विचार्यते यत् स्तोकं पचति, मृदु पचतीत्यादौ स्तोकादिपदोत्तरं द्वितीयाविभक्तिः केन सूत्रेण जायते ? अत्र क्रियाविशेषणस्थले च न द्वितीयातिरिक्तविभक्तिरुत्पद्यते, 'क्रियाविशेषणानां कर्मत्वमित्यनुशासनेन तत्र कर्मत्वातिदेशादिति व्युत्पत्तिवादे[1] भट्टाचार्योक्तेः । क्रियाविशेषणानां स्तोकादीनां धात्वर्थतावच्छेदकफलशालित्वरूपकर्मत्वबाधितत्वेनानेनानुशासनेन कर्मत्वातिदेशात् 'कर्मणि द्वितीया'[2] इत्यनेनैव द्वितीया विभक्तिर्भवति ।

न चैवं स्तोकः पाक इत्यादावपि द्वितीया प्रसंगः, तत्रापि स्तोकादेः क्रियायामेव विशेषणत्वाद् भावक्तां प्रयोगसाधुत्वमात्रार्थकतया धातुनैव तत्र पाकादिप्रतिपादनादिति वाच्यम् ? क्रियापदस्य तस्मिन्ननुशासने सार्थकप्रत्ययप्रकृतिभूतधातूपस्थाप्यार्थपरत्वात् । श्रीगोकुलनाथोपाध्यायेन पदवाक्यरत्नाकरे—

> उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु ।
> द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ॥

इति कारिकायास्ततोऽन्यत्रापि दृश्यते इत्यंशं व्याकुर्वताऽन्यत्र स्तोकं पचतीत्यादौ क्रियाविशेषणे इत्युक्तम्; तेन क्रियाविशेषणवाचकात् पदाद् द्वितीया उपपदविभक्तिरेव ।

द्वितीयाया उपपदविभक्तित्वञ्च शब्दशक्तिप्रकाशिकाटीकायां श्रीकृष्णकान्तभट्टाचार्येणाप्युक्तम् । तस्यायं भावः—स्तोकं पचतीत्यादौ क्रियाविशेषणं स्तोकादि न कारकम् । कारकत्वाभावे कारकत्वव्याप्यकर्मसंज्ञापि न भवितुमर्हति, कर्मसंज्ञाविरहे 'कर्मणि द्वितीया' इत्यनेन द्वितीयापि न भविष्यतीति कथं क्रियाविशेषणवाचकात् प्रातिपदिकाद् द्वितीयेति विचकित्सायां ततः 'अन्यत्रापि दृश्यते' इत्यंशेन द्वितीया उपपदविभक्तिर्भविष्यति । तथोक्तं शब्दशक्तिप्रकाशिकायाम्-यादृशेन नामार्थेनावच्छिन्नस्य सुबर्थस्य यादृशधात्वर्थेऽन्वयः स एव तादृशधात्वर्थे कारकतया व्यपदिश्यते, स्तोकं पचतीत्यादौ क्रियायां प्रकारीभूतेऽपि स्तोकादिर्न कारकम्, द्वितीया तु तत्र क्लीबलिङ्गत्ववदानुशासनिकी एव । अनुशासनञ्च न किमपि निर्दिष्टं श्रीकृष्णकान्तभट्टाचार्येणात्र द्वितीयाया उपपदविभक्तित्वमुद्घोषितम् । गोकुलनाथोपाध्यायेन च ततोऽन्यत्रापि दृश्यते इत्यंशेन द्वितीया बोधितेति ।

क्रियाविशेषणानां कर्मत्वमिति प्रसिद्धेर्व्याहतत्वं पर्यालोच्य व्युत्पत्तिवादस्य गूढार्थतत्त्वालोके —

---

१. व्युत्पत्तिवादः—द्वि० का० पृ० २३७ । २. अष्टाध्यायी—२।३।२ ।

उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु ।
द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ॥

इत्थंशीभूतेन ततोऽन्यत्रापि दृश्यते इत्यनेन क्रियाविशेषणं कर्मवद्भवतीत्यनुशासनं कल्प्यते इत्युक्तम्, तेन तत्रातिदिष्टं कर्मत्वं वर्तते, कर्मत्वातिदेशाच्च 'कर्मणि द्वितीया' इति सूत्रेण द्वितीयाविभक्तिर्भवति । अतिदेशस्थले च न सर्वं मुख्यकार्यं भवतीति न प्रकृते क्रियाविशेषणे कर्मणि लकारादीनां शङ्का कर्त्तव्येति मतान्तरम् ।

सम्प्रति वैयाकरणमतमुच्यते—प्रौढमनोरमायां फलस्यापि कर्मत्वादिना व्यापारविशेषणत्वादर्थाध्याहारवादे कर्मत्वस्य व्यापारे विशेषणत्वात् कर्मत्वे च फलस्य विशेषणत्वाद् व्यवस्था । अत एव तत्समानाधिकरणे 'शोभनं पचति' इत्यादौ द्वितीयैकवचनोत्पत्तिरिति । शब्देन्दुशेखरे नागेशभट्टैस्तु-फलस्यापि व्यपदेशिवद्भावेन फलाश्रयत्वात् 'कर्तुरीप्सिततमं कर्म'[1] इति सूत्रेणैव कर्मसंज्ञायां तत्समानाधिकरणस्तोकादिवाचकात् 'कर्मणि द्वितीया' इत्यनेनैव द्वितीयेत्युक्तम् । कर्मणि द्वितीयेत्यस्य कर्मवाचकात् कर्मसमानाधिकरणवाचकाच्च द्वितीयेति तदाशयः । अत एव 'नीलं घटमानय' इत्यादौ कर्मवाचकाद् घटशब्दाद् घटरूपकर्मसमानाधिकरणवाचकान्नीलपदाच्च द्वितीया विभक्तिर्भवति ।

नव्यैस्तु तादात्म्यफलतावच्छेदकसम्बन्धान्यतरसम्बन्धेन फलाश्रयत्वेनेच्छाविषयस्य कर्मसंज्ञा । तेन तादात्म्येन फलस्यापि फलाश्रयत्वात् 'स्तोकं पचति' इत्यादौ विक्लित्यादेः तादात्म्येन विक्लित्याश्रयत्वेन कर्मत्वात् तत्राभेदेन विशेषणवाचकस्तोकादिपदादपि 'कर्मणि द्वितीया' इति वैयाकरणमतं स्फुटमिति ।

न च 'स्तोकं तिष्ठति' इत्यादौ स्तोकपदाद् द्वितीया न स्यात्, स्थाधातोरकर्मकत्वेन फलस्य धात्वर्थत्वाभावात् कर्मसंज्ञाया अप्राप्तेरिति वाच्यम्; 'फलव्यापारयोर्धातुः'[2] इति भूषणोक्तदिशा सर्वेषां धातूनां फलमन्तर्भाव्य धात्वर्थत्वनिर्वचनात् ।

न चैवं सकर्मकत्वाकर्मकत्वयोर्व्यवस्था न स्यादिति वाच्यम्; स्वार्थफलव्यधिकरणव्यापारवाचकत्वं सकर्मकत्वम् । स्वार्थफलसमानाधिकरणव्यापारवाचकत्वमकर्मकत्वमित्येवं रीत्या सकर्मकत्वाकर्मकत्वयोर्विभागस्य भूषणादौ कृतत्वात् । न चैवं गौरवमिति वाच्यम्; क्रियाविशेषणानां कर्मत्वम्' इति वचनस्यापूर्वत्वकल्पनापेक्षयोक्तविषये लाघवस्यातिस्फुटत्वात् । किञ्च क्रियाविशेषणानां कर्मत्वमित्यस्य क्रियते यत् तत् क्रिया इति व्युत्पत्त्या यौगिकक्रियापदेन फलस्यापि गृहीतुं शक्यत्वात् ।

न च 'भूवादि'[3] सूत्रे भाष्ये क्रियापदस्य व्यापारे रूढिशक्तिस्वीकारात्, पूर्वमीमांसायां नवमाध्याये रथन्तराधिकरणे रथकाराधिकरणे च सिद्धान्तितेन 'योगाद् रूढिर्बलीयसी' इति न्यायेनोक्तानुशासने क्रियापदेन व्यापारस्यैव गृहीतुमुचितत्वेन क्रियाविशेषणानां कर्मत्वमित्यनुशासनस्यापूर्वत्वकल्पनाया गलेपतितत्वादिति वाच्यम्; असति तात्पर्ये योगाद् रूढेर्बलीयस्त्वेन सति तात्पर्ये यौगिकार्थस्यापि ग्राह्यत्वात् ।

---

१. अष्टाध्यायी—१।४।४९ । २. वै० भू० पृ० ४९ । ३. अष्टाध्यायी—१।३।१ ।

अत एव—

सत्पक्षा मधुरगिरः प्रसाधिताशा मदोद्धतारम्भाः ।
निपतन्ति धार्तराष्ट्राः कालवशाद् मेदिनीपृष्ठे[1] ॥

इति वेणीसंहारपद्ये हंसविशेषे रूढेनापि धार्तराष्ट्रपदेन यौगिकार्थस्य दुर्योधनादेर्ग्रहणदर्शनात् ।

एवमसत्यपूर्ववचनस्य कल्पितुमशक्यत्वेन वैयाकरणमतमेव ज्यायः । अत एव स्तोकादेः फलेऽन्वये स्तोकं पाकः । व्यापारेऽन्वये च 'स्तोकः पाकः' इत्याद्यञ्जस्येनोपपद्यते ।

तदुक्तं भूषणे—

साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना ।
सिद्धभावस्तु यस्तस्याः स घञादिनिबन्धनः[2] ॥

अपि चाकर्मकाणां धातूनां फलमप्यर्थ इति न केवलं वैयाकरणैरेवाङ्गीक्रियते, किन्तु व्युत्पत्तिवादे व्यापारमात्रं धत्वर्थ इति प्राचीनमतं प्रदर्श्य नव्यमतेन फलव्यापारयोर्धात्वर्थत्वं प्रतिपादितं भट्टाचार्येणापि[3] ।

किञ्च भूसत्तायाम्, एध् वृद्धौ इत्याद्यनुशासनादकर्मकाणां फलवाचकत्वं निर्विवादमेव, व्यापारवाचकत्वं तु धातुत्वान्यथानुपपत्त्या अर्थापत्तिप्रमाणसिद्धमेवेति मन्तव्यम् । फलरूपायां क्रियायां तादात्म्येनान्वितस्य कर्मत्वं 'जगाव मधुरां वाचम्' इत्यत्र वाचमिति क्रियाविशेषणमुपादेयं मधुरत्वादिविशेषणावच्छिन्नवाचस्तादात्म्येन गद्धात्वर्थफलेऽन्वयेऽपि नीलघटो घट इतिवत् साकांक्षत्वात् ।

परन्तु इदं नोचितं भाति द्वितीयाकारके गूढार्थतत्त्वालोके 'नरकं पतितः' इत्यत्रापि ततोऽन्यत्रापि दृश्यते इत्यंशेन द्वितीयोपपत्तौ तस्यानुपपत्तिवर्णनस्यासङ्गत्यापत्तेः । किञ्चोपपदविभक्तीनां षष्ठीबाधकत्वेन षष्ठीप्राप्तिस्थल एव तासां प्रवृत्तिस्वीकारात् । इतोऽपि नोचितम्, यतो वार्त्तिकघटकानामुभयत इत्यादीनां योगे द्वितीयां कृत्वोदाहरणं प्रदत्तं भट्टोजिदीक्षितेन 'ततोऽन्यत्रापि दृश्यते' इत्यंशस्योदाहरणं न दत्तम् । अपि तु 'अभितः परितः समया निकषा हा प्रतियोगेऽपि'[4] इति वार्त्तिकं पठितम् । वार्तिकोक्तानां पदानां योगे द्वितीयाघटितान्युदाहरणान्यपि दत्तानि, तेनेदमनुमीयते यदभितः परित इत्यादिवार्तिकं 'ततोऽन्यत्रापि दृश्यते' इत्यंशस्य प्रपञ्चभूतं स्पष्टमिदं तत्त्वबोधिन्याम् । तेन 'स्तोकं पचति' इत्यादौ न तेनांशेन द्वितीया, अपि च वार्त्तिकोक्तानां साहचर्यात् ततोऽन्यत्रापि दृश्यते, इत्यनेनाप्यव्यययोगे एव द्वितीया भवति । तस्मात् स्तोकमित्यादौ 'कर्मणि द्वितीया'[5] इत्यनेनैव द्वितीयेति । धात्वर्थफले विशेषणवाचकाद् द्वितीयोत्पत्तौ स्तोकादेः फल एवान्वयः, न तु व्यापारे सुप्प्रकृतिभूतधातूपस्थाप्येन विशेष्येण व्यापारेणान्वयाभावेन न क्रियाविशेषणानां समास इति वैयाकरणानामुद्घोषो भवतीति ।

यत्तु शब्दशक्तिप्रकाशिकायां 'स्तोकं पक्त्वा' इत्यादौ क्रियाविशेषणैः कर्मधारय एव, महाकविः, महाविज्ञ इत्यादौ कवित्वादाविव प्रकृतेऽप्येकनामार्थैकदेशे पचनादावपरनामार्थस्याभेदान्वयबोधकतया तथात्वसम्भवात् । क्रियाविशेषणैः समास एवाव्युत्पन्न इति तु न देश्यम् ।

---

१. वेणीसंहारनाटकम्—१।६; २. वै० भू० का० १९; ३. व्युत्पत्तिवादः, पृ० २३९ ।
४. अष्टाध्यायी—वा० ७९७; ५. तदेव—२।३।२ ।

'स्तोकनम्रास्तनाभ्याम्'[1] इत्यादेः कालिदासाद्यैः प्रयुक्तत्वादिति 'तत्त्वन्धस्यैवान्धलग्नस्य विनिपातः पदे पदे' इति न्यायेन ग्रसितमपि च कवयो बहुलमपाणिनीयान् शब्दान् प्रयुञ्जन्ते, तत्तु नाविदितं विदुषाम् ।

किञ्च, क्रियाविशेषणानां समासो महाभाष्यविरुद्धोऽप्यत एव 'पूजनात् पूजितम्' इति सूत्रे भाष्य एव दारुणं यथा स्यात् तथा अध्यापको दारुणाध्यापक इत्यस्य साधुत्वार्थं मलोपवचनमारब्धम् । क्रियाविशेषणानां समासे तु समासत्वात् प्रातिपदिकसंज्ञायां 'सुपो धातुप्रातिपदिकयोः'[2] इति सुपो लुकि व्यर्थमेव मलोपवचनं स्यादिति सुधियो विभावयन्तु ।

न च भिन्नपदत्वेऽपि, अर्थाद् वाक्येऽपि, तथा प्रयोगसाधुत्वार्थं मलोपवचनमिति वाच्यम्; तथा सति वाक्ये 'मलोपश्च वक्तव्यः' इत्यस्यैव वक्तव्यत्वात् । यत्तु स्तोकादिपदार्थस्य धात्वर्थफलसमानाधिकरणस्य कारकत्वाभावात् तत औत्सर्गिकमेकवचनं प्रथमाया अस्तु, नपुंसकत्वं चास्तु । न च 'जगाद मधुरां वाचम्' इत्यत्रानुपपत्तिर्जहल्लिङ्गस्थले नपुंसकत्वाङ्गीकारादिति वाच्यम्, 'निपुणस्त्वं पचसि', 'मृदु वा राजा द्रविणेन भोजयति' इत्यनेनेत्यत्र 'स्वामौ द्वितीयायाः'[3] इत्यस्यैव प्रवृत्तिर्भवति । प्रथमान्तत्वे तु 'सुपूर्वायाः प्रथमाया विभाषा' इत्यस्य प्रवृत्तिः स्यात् । तस्मात् स्तोकादिपदाद् द्वितीयैव स्वीकार्येत्याशयात् ।

एवं स्थिते फलसमानाधिकरणवाचकाद् द्वितीया, सा चाकर्मकधातुयोगेऽपि क्रियाविशेषणं भवतीति । केचित्तु क्रियाविशेषणानां कारकत्वं कर्मत्वञ्च एवं च सति 'कर्मणि द्वितीया' इत्येनैव क्रियाविशेषणवाचकपदाद् द्वितीयाविभक्तिर्भवतीति वदन्ति । 'ओजः सहोऽम्भसा वर्तते' इत्यतो वर्तते इत्यनुवृत्य 'तत्प्रत्यनुपूर्वमीपलोमकूलम्'[4] इत्यनेन द्वितीयान्तात् प्रतीपादिशब्दाद् वर्तत इत्यर्थेठक्, तत्र वर्तते इत्यस्याकर्मकत्वात् कथं द्वितीयेति द्वितीयान्तात् ठक् विधानवैयर्थ्येन क्रियाविशेषणाद् द्वितीया इति कल्पनापि निरस्ता । अकर्मकधातुयोगेऽपि तादात्म्यसम्बन्धेन फलस्यापि फलाश्रयत्वात् कर्मत्वे सिद्धे द्वितीयोपपत्तेरुक्तरीतिरप्यकर्मकधातूनां फलवाचकत्वे मानम् । तस्माद् वैयाकरणमतमेव लघुसारल्येनोपपन्नं भवतीति ।

अत्रेदं बोध्यम्—वैयाकरणमते 'कर्तुरीप्सिततमं कर्म'[5] इत्यनेन स्तोकादेः कर्मत्वे तादृशे कर्मणि लकारापत्त्या 'स्तोकः पच्यते' इत्यपि प्रयोग आपद्येदिति वाच्यम्; कर्तृसाहचर्यात् कर्मणो भेदेन धात्वर्थान्वितस्यैव लकारादिप्रत्ययविधायकशास्त्रे ग्रहणेनादोषात् । अत एव 'स्तोकं पाकः' इत्यादौ षष्ठ्यपि न ।

न च 'मन्दं वहति पवनः', 'द्रुतं गच्छति', 'मन्दं गच्छति' इत्यादौ व्यापारेऽभेदान्वयिमन्दादेः कर्मत्वानापत्त्या क्रियाविशेषणानां कर्मत्वमित्यपूर्वं वचनं कर्तव्यम् । क्रियापदञ्च धात्वर्थमात्रपरमित्यपि वक्तव्यमिति वाच्यम्, व्यापारे मन्दतादिसत्त्वे तज्जन्यफलस्यापि मन्दत्वादिसत्त्वात् तत्रापि फले एव मन्दान्वयात् । द्वितीयाविभक्तेः शक्यतावच्छेदकत्वे गौरवं तु नापादनीयम्, कर्मपदशक्यत्वस्य कर्मत्वशक्तिमत्वेनैव स्वीकारादिति दिक् ।

● ● ●

---

१. मेघदूतम्—श्लो० ८१; २. अष्टाध्यायी—२।४।७१ ।
३. तदेव—८।१ । ४. अष्टाध्यायी—४।४।२८ । ५. अष्टाध्यायी—१।४।४९ ।

# धात्वर्थवादविमर्शः

श्रीरामनारायणाचार्यः

प्रधानाचार्यः

श्रीवैकुण्ठनाथपवहारिसंस्कृतमहाविद्यालयः, वैकुण्ठपुरम्, देवरिया ।

सर्वशब्दानामुपजीव्यत्वान्मूलभूतत्वाच्च धात्वर्थं निरूपयितुं निःशेषेणोपक्रमते । धात्वर्थ-निरूपणप्रसङ्गे पूर्वं प्रतिज्ञातसर्वशब्दमूलभूतत्वाच्छाब्दिकनयेन विमर्शः प्रस्तूयते; तत्रापि प्राङ्नव्य-मतमुररीकृत्य क्रमशो विचारसरणिरुपादीयते । तदुक्तम्—

फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः ।
फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम् ।।[1] इति ।

फलनिरूपितवाचकतावान् धातुः । तत्र फलव्यापारयोरिति द्विवचनेन फलनिरूपिता व्यापारनिरूपिता च धातोः पृथक्शक्तिरित्येकवृन्तगतफलद्वयन्यायेन पृथगुपस्थितिप्रयोजिका खण्डश एकैव शक्तिरिति सूचितम् । अत एव फले स्तोकादिरूपकर्मणोऽभेदेन ग्रामादिकर्मणश्च भेदेनान्वयः । फलविशिष्टव्यापारे शक्तौ तु 'नित्यो घटः' इत्याद्यापत्तिवारणाय स्वीकृतेन 'पदार्थः पदार्थेनान्वेति, न तु पदार्थैकदेशेन' इति न्यायेन स्तोकादिकर्मणोऽन्वयाभावेन स्तोकं पचतीत्यादि-प्रयोगाणां गतिश्चिन्तनीया स्यात्, तस्मात् फलविशिष्टव्यापारे शक्तिर्मनसोऽपि न कल्प-नीयेति प्राचीनाः ।

नागोजिभट्टास्तु फलविशिष्टव्यापारे व्यापारविशिष्टफले च धातूनां शक्तिः, फलव्यापारे च पृथक् शक्तिस्वीकारे व्यापारोद्देश्यकफलविधेयकस्य फलोद्देश्यकव्यापारविधेयकस्य च बोध-स्यापत्तिः, उद्देश्यविधेयभावेनान्वयप्रयोजिकायाः पृथगुपस्थितेः सत्त्वात् । विशिष्टवाचकत्वमते तु न दोषः, पृथगुपस्थितेरसत्त्वात् । किञ्चैकपदे व्युत्पत्तिद्वयकल्पनेऽतिगौरवम् । तथाहि फल-विशेषणकव्यापारबोधे कर्तृप्रत्ययसमभिव्याहृतधातुजन्योपस्थितिः कारणम्, व्यापारविशेषणक-फलबोधे कर्मप्रत्ययसमभिव्याहृतधातुजन्योपस्थितिः कारणमिति कार्यकारणभावद्वयकल्पनम् । धातोरर्थद्वये शक्तिद्वयकल्पनं धातोर्बोधजनकत्वसम्बन्धद्वयकल्पनञ्चातिगौरवमावहति । तस्मात् फलावच्छिन्ने व्यापारे व्यापारावच्छिन्ने फले धातूनां शक्तिः, कर्तृकर्मार्थकतत्तत्प्रत्ययसमभि-व्याहारश्च तत्तद्बोधे नियामक इति नागेशीयः पन्थाः ।

यद्यपि फलावच्छिन्नव्यापारत्वस्य व्यापारावच्छिन्नफलत्वस्य च शक्यतावच्छेदकत्वकल्पन-प्रयुक्तं गौरमेतेषां मते स्फुटं प्रतिभाति, तथापि भिन्नशक्तिवादिनां फलविशेषणकव्यापारविशेषण-कावान्तरवाक्यार्थबोधे कर्तृप्रत्ययसमभिव्याहृतधातुजन्यसमूहालम्बनात्मकोपस्थितिः कारणम्, व्यापारविशेषणफलबोधे कर्मप्रत्ययसमभिव्याहृतधातुजन्यसमूहालम्बनात्मकोपस्थितिः कारणमिति

---

१. वै० भू०, का० ७१ ।

कार्यकारणभावद्वयकल्पनेऽतिगौरवम् । विशिष्टशक्तिवादिनां तु तत्तत्समभिव्याहारवशाद- वान्तरवाक्यार्थबोधस्थानीया विशिष्टोपस्थितिरेवेति न तेषामुक्तकार्यकारणभावद्वयम् ।

वस्तुतस्तु प्राचीनमतमेव रमणीयं कुतो ह्युद्देश्यविधेयभावेनान्वयनियामकव्युत्पत्तौ धातु- भिन्नत्वस्य विशेषणदानेनादोषात् । फलव्यापारयोरिति कारिकायां फलत्वेन यदुद्दिश्य धात्वर्थ- क्रियायाः प्रवृत्तिः, तत्फलं यथा स्वर्गमुद्दिश्य यागो विधीयते, तत्र स्वर्गरूपं फलं यदि कर्ता अभिप्रेति, तदा आत्मनेपदम्, यथा भोजनमुद्दिश्य पाको विधीयत इति पाकफलस्य भोजनस्य कर्तृ- गामित्वे आत्मनेपदम् । यदि महता फूत्कारत्वाधःसन्तापनत्वचुल्युपरि धारणत्वादिप्रयासेन वराकेन वैतनिकेन सूपकारेण भोजनं निर्मितम्, तच्च केनापि लम्बोदरेण श्रेष्ठिना भुज्यते, तत्र कथमप्यात्मनेपदं न भवतीति सिद्धान्तः । उक्तश्चापि भगवता भाष्यकारेण 'स्वरितञितः कर्त्र- भिप्राये क्रियाफले'[1] इति सूत्रे भाष्ये—'साधीयो यत्र क्रियाफलं कर्तारमभिप्रैति न चान्तरेण यंजं यजिफलं वपिं वा वपिफलं लभन्ते । याज्ञिकाः पुनरन्तरेणापि यजिं लभन्ते भृतकाश्च पाकादिकम्' इति हरिणाप्युक्तम् ।

यस्यार्थस्य प्रसिद्ध्यर्थमारभन्ते पचादयः ।
तत्प्रधानं फलं तेषां न लाभादिप्रयोजनम् ॥[2] इति ।

फलव्यापारयोरत्र व्यापारपदेन साध्यत्वेनाभिधीयमाना क्रिया गृह्यते । क्रियात्वञ्च गुणानाश्रयत्वे सति विभागासमवायिकारणत्वम् । उक्तञ्च वाक्यपदीये—

यावत् सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते ।
आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते ॥[3] इति ।

अर्थादाश्रितम् = अधिश्रयणाद्यवयवानां क्रमरूपं पौर्वापर्यं यया सा आश्रित- क्रमरूपा । क्रियतेऽवयवानां क्रमेणोत्पत्त्या या सा क्रिया इत्यन्वर्थसंज्ञा । तत्रापि 'पचति पाकः करोति कृतिः' इत्यादौ धात्वर्थावगमाविशेषेऽपि क्रियान्तराकाङ्क्षाऽनाकाङ्क्षयोर्दर्शनात् क्रियायामपि द्वैविध्यं दृग्गोचरतां याति । तत्र क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपं साध्यत्वं तदरूपत्वमसत्त्वभूतत्वम् । एतदेवादाय 'असत्त्वभूतो भावश्च तिङ्पदैरभिधीयते'[4] इति वाक्यपदीये निरूपितम् ।

अयञ्च व्यापारः फूत्कारत्वाधःसन्तापनत्वयत्नत्वादि तत्तद्रूपेण वाच्यः । कुतो हि, पचतीत्यादौ तथैव बोधस्यानुभवसिद्धत्वात् । नानार्थतापत्तिरूपा विभीषिकाऽपि तदादिन्यायेन बुद्धिविशेषादेः शक्यतावच्छेदकानामनुगमकत्वेनास्तं जगाम । तथा हि वाक्यपदीये—

गुणभूतैरवयवैः समूहः क्रमजन्मनाम् ।
बुद्ध्या प्रकल्पिताऽभेदः क्रियेति व्यपदिश्यते ॥[5] इति ।

'आश्रयेतु तिङः स्मृतः' अत्राश्रयमात्रं तिङर्थः । कुतो हि फलव्यापारयोर्धातुलभ्यत्वात् । तथाहि तिङर्थाः कर्तृकर्मसंख्याकालाः, तत्र कर्ता व्यापारे कर्मफले विशेषणम् । संख्या तु

---

१. अष्टाध्यायी—१।३।७२ । २. वा० प० ३।१३।१८ ।
३. वा० प०–३।८।१ । ४. तदेव–३।१४।५२ । ५. तदेव–३।८।४ ।

कर्तृप्रत्यये कर्तरि कर्मप्रत्यये कर्मणि, कुतः समानप्रत्ययोपात्तत्वात् । कालस्तु व्यापारे विशेषणम् । एवञ्च तिङर्थो विशेषणमेव भावनैव प्रधानम् ।

तत्रभवन्तो प्राभाकराः—फलमेव धात्वर्थः—पचि-गमि-त्यजि-प्रभृतीनां विक्लिति-संयोगविभागादिरूपफलमेवार्थ इति स्वीकुर्वन्ति, पुरुषप्रवृत्तिरूपा आर्थीभावना आख्यातार्थः, आख्यातार्थवर्तमानत्वादिकन्तु भावनायामन्वेति, समानपदोपस्थितत्वात् । तेन भावनाविरामे न पचतीत्यादिप्रयोगः ।

प्राचीननैयायिका अपि मीमांसकमतवत् 'फलं धात्वर्थः', 'कृतिराख्यातार्थः' इति स्वीकुर्वन्ति, तन्न समीचीनम्, कुतो हि पचतीति कथनेन लोके पाकमुत्पादयतीत्यर्थो लभ्यते । तत्र साक्षाद् भावनायाः प्रतीतिर्जायते । अतो भावनाया विवरणविषयत्वदर्शनेन विक्रियमाणस्य धातोरेव भावनार्थ इति निर्गलितः । धातोर्व्यापारार्थाङ्गीकारे शक्यतावच्छेदके गौरवात्, लाघवात् कृतित्वमेव शक्यतावच्छेदकम् । रथो गच्छतीत्यादौ व्यापारत्वादिप्रकारकबोधो लक्षणयेति नैयायिकानां कथनं न समीचीनम्, कथं हि वैयाकरणानां मते यदि शक्यतावच्छेदके गौरवं तदा नैयायिकानां प्रकारे लक्ष्यतावच्छेदकगौरवमापतति । पचतीत्यस्य पाकं करोति यत्नार्थक-करोतिना विवरणाद् यत्न एवाख्यातार्थः; इत्यपि न शङ्कनीयम्, 'रथो गमनं करोति' बीजादिनाऽङ्कुरः कृत इति दर्शनाद् यत्नार्थकताया असिद्धेः ।

किञ्च भावनाया अवाच्यत्वे फलव्यधिकरणव्यापारवाचकत्वं समर्थकत्वम्, फलसमानाधिकरणव्यापारवाचकत्वमकर्मकत्वमिति सकर्मकाऽकर्मकयोर्लक्षणाभावेन घटं भावयतीत्येव घटो भवतीत्यत्रापि द्वितीया स्यात् । घटस्य कर्तृत्वेन कर्तृसंज्ञया कर्मसंज्ञाया बाधाद् न द्वितीयेति समाधानमप्यनुगतकर्तृत्वस्याभावेन घटस्याकर्तृत्वात्, कृत्याश्रयत्वस्य कारकचक्रप्रयोक्तृत्वस्य वा घटादावभावात् । धात्वर्थानुकूल व्यापाराश्रयत्वस्य च कारकमात्रातिव्यापकत्वात्तु हास्यास्पदमेवेति सुधियो विभावयन्तु । तस्माद् धातोरेव व्यापारोऽर्थं इति सिद्धेः ।

सम्प्रति धातोः फलमर्थः । अस्मिन् विषये तत्रभवतां पुरस्तात् काश्चित् शास्त्रीया युक्तय उपस्थाप्यन्ते । फलांशस्यावाच्यत्वे व्यापार एव धात्वर्थः स्यात्, तथा फलव्यधिकरणव्यापार-वाचकत्वरूपस्य सकर्मकलक्षणस्योच्छेदापत्तिः । कृत्रादौ सकर्मकत्वव्यवहारो भाक्त इति नैयायिकोक्तं तु न युक्तियुक्तं प्रतिभाति, कुतो व्यवहारस्य भाक्तत्वेऽपि कर्मणि लकारासम्भवात्, कुतः गङ्गापदस्य तीरे भाक्तत्वेऽपि न हि तेन स्नानादिकार्यं कर्तुं शक्यम् । अत एवाह—

किन्तूत्पादनमेवातः कर्मवत्स्याद् यगाद्यपि ।
कर्मकर्तर्यन्यथा तु न भवेत् तद् दृशोरिव ॥ इति ।

अस्याः कारिकाया अयमाशयः—उत्पत्तिरूपं फलं व्यापारश्च धात्वर्थः । कृञः फलमात्रमर्थो नेष्यते । यतोऽस्य 'उत्पादनार्थकता'[1]; अतः पच्यते ओदनः स्वयमेवेतिवत् क्रियते घटः स्वयमेवेति यगादयोऽपि समुपपद्यन्ते, अन्यथा यत्नस्य कर्मनिष्ठत्वाभावात् कर्मवत् स्यात् । यथा दृश्यते घटः स्वयमेवात्र न भवति । सकर्मकतानापत्तिदोषवारणाय कृञादेरिव जानातीत्यादेरपि विषयावच्छिन्नावरणभङ्गादिफलवाचित्वमावश्यकम् । तेन ज्ञायते घटः स्वयमेवेति किन्न स्यात् ?

---

१. वाक्यपदीयम्—३।७।७९ ।

एवं ग्रामो गम्यते इत्यपि स्यादित्याकारकचिन्तासन्तानवितानैकतानो भट्टोजिदीक्षित इमां कारिकामाह—

निर्वर्त्ये च विकार्ये च कर्मवद्भाव इष्यते।
न तु प्राप्ये कर्मणीति सिद्धान्तोऽत्र व्यवस्थितः॥

अस्याः कारिकाया एततात्पर्यम्—निर्वर्त्ये विकार्ये च कर्मवद् भावो भवति। **'घटं करोति'**, **'सोमं सुनोति'** इत्यादौ, न तु प्राप्ये तेन दृश्यते घटः स्वयमेवेति रूपमसाधु, किञ्च धातूनां फलावाचकत्वे त्यजिगम्योः पर्यायतापत्तिर्वज्रलेपायिता, क्रियावाचकत्वाविशेषात्। फलस्योपलक्षणत्वेऽप्येकक्रियाया एव पूर्वदेशविभागोत्तरदेशसंयोगजनकत्वादुक्तदोषस्तादवस्थ्यमित्यपि वदन्ति। तस्मादावश्यकं सकर्मकाणां फलवाचकत्वम्। अकर्मकाणान्तु तन्निर्विवादमेव, भूसत्तायामित्याद्यनुशासनात्। अत एव द्व्यर्थः पचिरिति भाष्यं संगच्छते।

मण्डनमिश्रास्तु—'प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यमिति न्यायात् तदागमे हि दृश्यते इति न्यायात् आख्यातप्रयोगे व्यापारस्य स्फुटदर्शनाद् धातोः फलव्यापारयोर्वाच्यत्वेऽपि व्यापार आख्यातार्थ इति प्रणिगदन्ति। किन्तु सिद्धान्तोऽयं निर्मूल एव, कुतो धातोर्यदि फलमात्रमर्थः स्वीक्रियेत, तदा **'ग्रामो गमनवान्'** इति प्रयोगापत्तिः स्यात्। फलव्यापारयोः पृथग्धात्वर्थमतेऽपि केवलं फलार्थत्वमादाय तदापत्तिस्तु न शंक्या, अन्तरङ्गत्वात् फलस्य व्यापारे एव प्रागन्वयात्। किञ्च सर्वं हि वस्तुजातं प्रतीत्या व्यवस्थाप्यतेऽत्र प्रतीतिविरुद्धतापि स्पष्टैव।

कथं हि फलमात्रार्थस्वीकारे फलानुत्पाददशायां सत्यपि व्यापारे पाको भवतीति प्रयोगो न स्यात्, व्यापारविगमे सति फले पाको विद्यत इति प्रयोगः स्यात्। **'नखैर्भिन्नो नखभिन्नः'**, **'हरिणा त्रातो हरित्रातः'** इत्यत्र, **'कर्तृकरणे कृताबहुलमिति समासो न स्यात्**। कारकाणां क्रियायामेवान्वयाद् धातोर्व्यापारार्थाभावेन क्रियान्वयस्य दुर्लभत्वात्। उभयार्थत्वे तु त्रातभिन्नपदान्तर्गतधात्वर्थक्रिययोः कर्तृकरणकारकान्वयेन सामर्थ्यं तत्र सुखेन प्रतिपादयितुं शक्यम्। धातोर्व्यापारार्थाभावे **'भूवादयो धातवः'**[1] इति सूत्रे महती दुर्व्यवस्था आपतेत्। कथं हि सूत्रमिदं क्रियावाचकत्वे सति भ्वादिगणे पठितो यो भवति स एव धातुसंज्ञक इति बोधयति। फलमात्रार्थे क्रियाया असत्त्वात् सूत्रासङ्गतिः स्पष्टैव। भ्वादिगणपठितत्वे धातुत्वमित्यर्थे याः पश्यतीत्यादौ **'आतो धातोः'** इत्याकारलोपापत्तिः। **'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्'**[3] इति परिभाषया तत्र दोषवारणेऽपि अव्यय 'वा' इत्यादावतिप्रसङ्गः, असत्त्वभूतक्रियाया धात्वर्थे पाक इत्यत्राप्यसत्त्वभूतायाः क्रियायाः प्रतीतिः स्यात्। तथा च **'कृदभिहितो भावो द्रव्यवत् प्रकाशते'** इति भाष्यविरोधः कथं वारणीय इति शंका न कार्या, कुतो हि घञादिस्थले उभयविधक्रियायाः स्वीकारः।

प्रकृत्या साध्यावस्था प्रत्ययेन साधनावस्था गम्यते। अत्र फलमयमेव विशेषो यत् तिङाद्युपस्थाप्य क्रियायां लिङ्गाद्यन्वयेन घञाद्युपस्थाप्यायां क्रियायां लिङ्गाद्यन्वयो भवत्येव, कारकाणामुभयांशे सम्बन्धात्; अतो धातुत्वव्यवहारः। कारकाणां भावनान्वये प्रमाणे भट्टोजिदीक्षितस्येयं कारिका—

---

१. अष्टाध्यायी—१।३।१; २. तदेव—६।४।१४०; ३. प० शेखरः—११४।

सम्बोधनानां कृत्वोऽर्थाः कारकं प्रथमो वतिः ।
धातुसम्बन्धाधिकारनिष्पन्नमसमस्तनम्[1] ॥

सम्बोधनान्तस्य क्रियायामन्वयः, त्वं ब्रूहि देवदत्त ! इत्यादौ निघातानुरोधात् 'समानवाक्ये निघातयुस्मदस्मदादेशाः' इत्यनेन समानवाक्य एव तन्नियमात् । उक्तञ्च वाक्यपदीये—

सम्बोधनपदं यच्च तत्क्रियायां विशेषणम् ।
व्रजानि देवदत्तेति निघातोऽत्र तथा सति[2] ॥ इति ।

तस्माद् धातोर्फलं व्यापारश्चेत्यर्थद्वयं सर्वैः स्वीकरणीयम् । प्राचीनानामेष राद्धान्तः ।

नागोजिभट्टा अपि 'लः कर्मणि'[3] इत्यादिसूत्रविरोधापत्तेः फलमात्रं न धात्वर्थं इति प्राहुः । न हि तेन व्यापारस्य प्रत्ययार्थता लभ्यते । पचति, पक्ष्यति पक्त्वानित्यादौ फूत्कारादि प्रतीतये । तत्रानेकप्रत्ययानां शक्तिकल्पनापेक्षयैकस्य धातोरेव शक्तिकल्पनोचिता । यत्तु तार्किकाः फलव्यापारो धात्वर्थः, लकाराणां कृतावेव शक्तिर्लाघवात्, न तु कर्तरि, कृतिमतः कर्तृत्वेन तत्र शक्तौ गौरवात् प्रथमान्तपदे नैव तल्लाभाच्च । अख्यातार्थे धात्वर्थो विशेषणम् । प्रकृतिप्रत्ययार्थयोः सहार्थत्वे प्रत्ययार्थस्यैव प्राधान्यात्, प्रथमान्तार्थे आख्यातार्थो विशेषणम् । अनुकूलत्वमाश्रयत्वञ्च संसर्गः ।

एवञ्च 'चैत्रः पचति' इत्यादौ विक्लित्यनुकूलव्यापारानुकूलकृतिमांश्चैत्र इति बोधः । रथो गच्छतीत्यादौ रथस्याचेतनत्वाद् यत्नशून्यत्वेन व्यापारे आश्रयत्वे वाऽऽख्यातस्य लक्षणेत्याहुः, तन्न समीचीनम्, युस्मदस्मदोर्लकारेण सामानाधिकरण्याभावात् पुरुषव्यवस्थानापत्तेः । पचन्तं चैत्रं पश्य, पचते देवदत्ताय देहीत्यादौ शतृशानजादीनामपि तिबादिवल्लादेशाविशेषेण तेभ्यः कृतिमात्रबोधापत्तेश्च । न चेष्टापत्तिः, आश्रयाश्रयिभावेन कर्मणि सम्प्रदाने च कृतेरन्वयादिति वाच्यम्, नामार्थयोरभेदान्वयो व्युत्पन्न इति व्युत्पत्तिभङ्गापत्तेः ।

एवञ्च नामार्थनिष्ठभेदसंसर्गावच्छिन्नप्रकारतानिरूपितविशेष्यतासंसर्गेण शाब्दबोधं प्रति मुख्यविशेष्यतया प्रत्ययजन्योपस्थितिः कारणमिति कार्य्यकारणभावमूलिकेयं व्युत्पत्तिरिति । नामार्थयोरभेदान्वयानुरोधात् शतृशानजादीनां कर्त्तरि शक्तिर्न वाच्या, 'पचति कल्पम्', 'पचतिरूपं देवदत्तः' इत्याद्यनुरोधेन तिङ्क्ष्वपि कर्तुरेव वाच्यत्वौचित्यादित्यास्तां तावत् ।

वस्तुतस्तु एतच्छास्त्रीयकर्मसंज्ञकार्थान्वय्यर्थकत्वं सकर्मकत्वम् । अत्रैव सकर्मकशब्दमर्यादा तेनाध्यासिता भूमय इत्यादौ क्तोपपत्तिः, अन्वयस्य पृथगुपस्थितयोः संसर्गरूपतया न जीवत्यादिषु दोष इति मञ्जूषासिद्धान्तः । आत्मानं जानातीत्यादौ सकर्मकाकर्मकलक्षणस्याव्याप्त्यतिव्याप्तिमाशंक्य द्वावात्मानौ शरीरावच्छिन्नः, अन्तःकरणावच्छिन्नश्च । तत्रान्तरात्मा तत्कर्म करोति येन शरीरात्मा सुखदुःखे अनुभवतीति भाष्योक्त्याऽऽत्मन एकत्वे शरीररूपोपाधिभेदपरिकल्पितं भेदमादाय वैयधिकरण्यस्य सूपपादत्वान्न क्वचिद् दोषावसर इति समाहितं मूलसारकृताऽपि ।

---

१. शब्दकौस्तुभः, का० १७ ।　　२. वाक्यपदीयम्—२।५ ।

३. अष्टाध्यायी—३।४।६९ ।

यदपि मीमांसका इत्थं सङ्गिरन्ते यत्—बोधकतारूपशक्तिराख्यातेऽप्यबाधितैव, यतस्ततो भावनाबोधस्य जायमानत्वाद् धातोरेव भावना वाच्या, नाख्यातस्येति कथं निर्णय इति। तथापि न तत्समीचीनम्, यतः —'साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिः'[1] इति हर्यादिसम्मतेन व्याकरणस्मृतिः शब्दसाधुत्वपरा साधुशब्दे च बोधजनकतावच्छेदकतया कल्प्यमानधर्मस्य शक्तित्वमिति वदतां मीमांसकानां मते शक्तं साधुत्वमित्येकमेवेति तद्रीत्या विचारे साधुत्वनिर्णय एव शक्तिनिर्णय उच्यते ।

व्याकरणेन भावनायां साधुत्वाविधानेनाख्यातस्य तत्र शक्तेरसम्भवतरत्वात् । तथा च यादृशविशेषणान्वितयादृशविशेष्यबोधयादृशानुपूर्व्या सूत्रकृतादिसम्मतत्वम्, तादृशबोधे तादृशानुपूर्वीकः शब्दः साधुर्नान्यत्रेति लभ्यते ।

एवञ्च भावनायामाख्यातस्य शक्तिभ्रमेण प्रयोगे 'नानृतं वदेत्' इति निषेधोल्लंघनप्रयुक्तं प्रायश्चित्तं मीमांसकैर्दुष्परिहरणीयमेवेति । वैयाकरणमते तु नानृतं वदेदिति निषेधस्य क्रत्वर्थत्वं सिध्येत्, किन्त्वाख्यातेन कर्तुरुक्तत्वमिति श्रुत्या पुरुषार्थत्वमेव स्यात् ।

यद्यपि प्रकरणात् क्रत्वर्थतासम्भवः, तथापि श्रुतिलिङ्गवाक्यप्रकरणे स्थानसमवाये पारदौर्बल्यमर्थविप्रकर्षादिति जैमिनिसूत्रेण प्रकरणतः श्रुतेर्बलवत्त्वेन बाधादिति मीमांसकोक्तं युक्तमिति प्रतिभाति, तथाप्याख्यातश्रुत्या कर्तृरुपस्थितावपि न तस्य प्राधान्यं येन निषेधस्य पुरुषार्थता शक्येत । तथा च विशेषणतयोपस्थितस्य कर्तुः श्रौतमर्थसम्बन्धाभावान्नात्र श्रुत्या प्रकरणबाध इत्यदोषात् । कर्तुरप्राधान्येऽपि कर्तृवृत्तिभावनायाः प्राधान्यात् तस्या नञर्थान्वये तद्द्वाराऽऽख्यातकर्तुरप्यन्वयान्न श्रौतपुरुषार्थत्वानुपपत्तिरिति चेत्, सत्यं जञ्जभ्यमानोऽनुब्रूयाद् मयि दक्षक्रतू इति वाक्योक्तमन्त्रविधिवद् नानृतं वदेदिति निषेधस्य क्रतुयुक्तपुरुषधर्मत्वे यजमानस्य प्राधान्यात् प्रधानीभूतकर्त्रैवानृतवचनं वर्ज्यं स्यात् । क्रत्वर्थत्वे तु कर्त्रनपेक्षत्वेन यज्ञप्रवृत्तैः पुरुषैस्सर्वैरपि वर्जनं सिद्ध्यतीति विशेषसत्त्वेऽपि श्रुतिप्रकरणाभ्यां क्रतुसम्बद्धपुरुषकर्तृकानृतवदनाभाव इति बोधेन क्रतुकर्तृकेति बोधे मानाभावेन क्रतुयुक्तपुरुषधर्मत्वेऽप्यनुष्ठाने विशेषाभावादित्यलं धातो फलमात्रमर्थं इति विभिन्नतर्कग्रहिलैर्मीमांसकैरायासबहुलपरायणैरिति । प्राङ्नव्यशाब्दिकैः सर्वैरपि समुचितयुक्त्या—सूत्र-वार्त्तिक-भाष्यकारमतावलम्बिभिः साधुसमर्थितफलव्यापारयोः धातुरिति न क्वचिदपि विसंवादावसरः । इतोऽग्रेऽपि विचारपन्था अवशिष्टः सुधिभिर्विभावनीय इति शम् ।

● ● ●

---

१. वाक्यपदीयम्—१।१४२ ।

# तात्पर्यटीकासहितस्य तर्कामृतचषकस्य परिचयः

श्रीकेदारनाथोझाः

सम्मानितप्राध्यापकः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

काशीस्थप्रसिद्धसरस्वतीभवनपुस्तकालये हस्तलिखितपुस्तकेषु चिरात् संगृहीतं सुरक्षितञ्च ग्रन्थरत्नमिदम्। तत्र पुस्तकद्वयम्, तयोः प्रथमम् (क) संकेतेन मया व्यवह्रियमाणं तर्कामृतस्य चषकाख्यव्याख्येति मनीषया विरचितम्। परं तत्रापि सूक्ष्माक्षरेषु बह्व्यष्टीप्पण्यः।

द्वितीयम् (ख) संकेतेन निर्दिष्टम्, यत्र तर्कामृतचषकटीकायास्तात्पर्यव्याख्यानमुपर्यधश्च लिखितं वर्तते। उभे प्रतिबिम्बिते कारयित्वोभयोः प्रतिबिम्बमुद्रणं पठितुं पुस्तकालयेन मह्यं प्रदत्तमस्ति।

तृतीयमप्येकं संशोधनाय सम्पादनाय च तात्पर्यटीकासहितस्य (ख) पुस्तकस्य प्रतिलिपिं सम्पादयित्वा पुस्तकालयात् प्राप्तं विद्यते, परं तत्र कस्य मूलस्य कुत्र टीका? मूलात् प्राक् पश्चाद् वा टीका? इत्यर्थावबोधसमन्वयौ विना विवेक्तुं न शक्यते, संशोधितं सम्पादितमप्यक्षरमुद्रायोजकाय प्रदातुं नार्हम्। अतो मुद्रणाय पुनरस्य तदुपयोगिलेखनमपेक्षितम्। प्रतिलिपिविधातुरपि लेखकस्य सम्पादकसन्निधानमावश्यकम्।

प्रथम (क) पुस्तकस्योपरि पृष्ठे पुस्तकालयेन इत्थं निर्दिष्टम्—विषयः-न्यायवैशेषिकम्, पुस्तकनाम-तर्कामृतं सटीकम्, ग्रन्थकारः-जगदीशभट्टाचार्यः, टीकाकारः-गङ्गारामः, विवरणम्-पूर्णो ग्रन्थः-टीका चषकाख्या। आकारः-१०-९×५, प्रतिपङ्क्तिरक्षराणि ४१, प्रतिपृष्ठं पङ्क्तयः १४, लिपिः-देवनागरी, सं० १८१८, आधारः काशी, पत्रावली एकस्मिन् पृष्ठे लिखितम्।

यथास्थितमेव कञ्चिदुपक्रमोपसंहारभागमुद्धरामि—

**उपक्रमः**

प्रथमपृष्ठे तर्कामृतचषकपुस्तकमिदं जडचुपनाम्नो गङ्गारामस्य। द्वितीयपृष्ठे श्रीगणेशाय नमः, श्रीसरस्वत्यै नमः, श्रीगुरुभ्यो नमः।

आत्मरूपगुणनृत्यकारिणे लोचनाकलिततत्त्वसाक्षिणे।
नूतनोद्भवसमाधिहेतवे नीलकण्ठगुरवे नमो नमः॥ १।

गुरुगणना यत्पूर्वं यस्याग्रे स ग्रहाग्रणीतनयः।
कविमिव तं कवयन्तं तातं नारायणं वन्दे॥ २।

मुक्तावलीप्रकाशात् स्फुरिते चषके समर्पितं सुधियः।
गंगारामेण मया पिबन्तु तर्कामृतं सुधियः॥ ३।

यद्यप्यविगीतशिष्टाचारविषयत्वेन मङ्गलस्य सफलत्वे सिद्धे विशेषतः फलजिज्ञासायां दृष्टसम्भवे विश्वजिन्न्यायानवताराद् रात्रिसत्रन्यायेन फलकल्पनाध्रौव्ये परिशेषानुमानप्रवृत्तस्य पुंसो व्यक्तप्रारिप्सितविघ्नोपशान्तये कृतं मङ्गलं शिष्यशिक्षायै निबध्नन् श्रोत्रावधानाय चिकीर्षितं प्रतिजानीते । श्रीगणेशाय नमः ।

ब्रह्माद्या निखिलार्चितास्त्रिदशसंदोहाः सदाभीष्टदाः ।
स्वाज्ञानप्रशमाय यत्र मनसो वृत्तीः समस्ता दधुः ॥
श्रीविष्णोश्चरणाम्बुजं भवभयध्वंसैकबीजं परं ।
हृत्पद्मे विनिधाय तं निरुपमं तर्कामृतं तन्यते ॥

ब्रह्माद्या इति । मया तर्कामृतं तर्क्या द्रव्यादयः पदार्था इत्यादि ।

**उपसंहारः**

सुन्दोपसुन्दनिष्ठप्राणवियोगानुकूला तद्व्यधिकरणा च या क्रिया तदनुकूलकृतिमन्तौ ताविति सुंदोपसुंदावन्योन्यं जघ्नतुरिति वाक्याधीनो बोध इति विशेषो यद्यपि बहुवक्तव्यः, तथापि विस्तरभिया विरम्यते ।

चषकसुवर्णस्पर्शं दिनकरकरकृतपरामर्शम् ।
जगदीशमथनकल्पं पिबन्तु तर्कामृतं तदाकल्पम् ॥
सूत्रं स्वयं न बलितं मणिर्न घटितस्तथापि चास्माकम् ।
मालाकाराणामिव ममता ग्रन्थे स्वकीयकौशल्यात् ॥

इति श्रीजड्युपनामकगंगारामविरचितस्तर्कामृतचषकः सम्पूर्णः ॥ समतः १८१८ वैशाखशुदि ग्रन्थ ३००० संख्या ॥ राम ॥ पृष्ठसंख्या—वामभागे १०७, दक्षिणभागे राम० १०७। प्रतिबिम्बग्रहणानन्तरं पृष्ठसंख्यायामुभयभागे १०७ छित्त्वा १०९ लिखितं वर्तते ।

अनुस्वारस्य परसवर्णं न करोति, अवसानेऽप्यनुस्वारमेव संरक्षति । अस्याः पृष्ठसंख्याया वास्तविकता नास्ति । मध्ये बहुषु पत्रेषु पृष्ठसंख्या न वर्तते; लिखिता च क्रमशो न विच्छिन्ना, परं मध्ये कतिपयानि पत्राणि पृष्ठसंख्याविरहितान्येव विद्यन्ते । सर्वाः पङ्क्तयः परिपूर्णाक्षरा एव, वाक्यस्य पद्यस्य प्रकरणस्य वा विभेदाय पङ्क्तिविच्छेदो नादृतः । प्रायः सर्वेषु पत्रेषु सूक्ष्माक्षरेण पार्श्वस्थलेषु टीप्पण्यो विराजन्ते । तासु टीप्पणीषु काचन मूले लिखितुं विस्मृतं वर्णं पदं वाक्यं वा संयोजयति; कानिचन पत्राणि चतुर्षु पार्श्वभागेषु दुर्वाच्यसूक्ष्माक्षरटीप्पणीभिः परिपूर्णानि दृश्यन्ते । प्रथमं हस्तलेखे क्वचिद् असमीचीना दुष्टा वा मषी उपयुक्ताऽभूत्; या समयेन हतप्रभा प्रतिबिम्बितुं नाशकत्, तेन च प्रतिबिम्बं नीतोऽप्ययं ग्रन्थो न सुपठः संवृत्तः ।

द्वितीय (ख) पुस्तकस्य पुस्तकालयेन वर्णितं स्वरूपम् । फोटोकापीसंख्या १३, नाम-तर्कामृतचषकः सटीकः, ग्रन्थकारः-गङ्गारामजड़ी, विषयः—न्या० वै०, पत्रसंख्या च ५५९, आकारः १३–५–५८० पूर्णः, विवरणम्-टीका तात्पर्याख्या, प्रतिपृष्ठं पङ्क्तिः ११, पङ्क्तौ अक्षराणि–२७, लिपिः–देवनागरी, आधारः का० लिपिकालः–१८३०, ह० १९५४ ।

तर्कामृतचषकस्य प्रारम्भः प्रायः (क) पूर्वग्रन्थवदेव; तात्पर्यटीकायाः प्रारम्भभागं प्रदर्शयामि । श्रीगणेशाय नमः ।। श्रीसरस्वत्यै नमः ।। श्रीगुरुभ्यो नमः ।

व्याख्यातुः सुखहेतुर्यथार्थगुरुगम्यवचनतात्पर्यम् ।
साभिप्रायपदानां चषके तात्पर्यटीकेयम् ।। १ ।।
नत्वा राधां देवीं गंगारामो जडीति यः ख्यातः ।
समकारि तेन विदुषा विदुषां मनसो विनोदाय ।। २ ।।

आत्मरूपेति आत्मरूपाः स्वस्वरूपाः किं चात्मानं रूपयन्ति व्यावर्तयन्ति, ते तथा । तथा चात्मपक्षकभेदानुमितिलिङ्गतावच्छेदकावच्छिन्ना गुणाः सत्यसङ्कल्पादयो यस्य तथाऽसौ नृत्यकारी च तस्मै । लोचनेति लोचनेन मायास्वरूपेण प्रमाणेन वा कलितानां भासमानानां तत्त्वानां पदार्थानां साक्षी द्रष्टा तस्मै ।

नूतनेति नूतनस्य जगत उद्भवसमाध्योर्हेतुर्विवर्तकारणं किं वा नूतनस्य प्रागभावप्रतियोगिन उद्भवसमाध्योरुद्भवस्थितिलयानामिति यावत्तन्मध्यपतितन्यायाद् हेतुर्निमित्तं तस्मै । नीलः कण्ठो यस्य स एव गुरुर्ज्ञानप्रदस्तस्मै । पक्षान्तरे आत्मरूपकुलक्रमागतो गुणोऽध्ययनसम्पन्नं ज्ञानं तेन नृत्यकारी संतुष्टः परिपूर्ण इति यावत्तस्मै । एतेनाध्ययनसम्पत्तिरुक्ता । लोचनाभ्यामाकलितस्य पुस्तकस्य तत्त्वसाक्षी यथार्थद्रष्टा तस्मै । एतेन भावनोक्ता । नूतनेभ्य उद्भवो येषां तेषां दूषणानां समाधौ समाधाने हेतुः प्रथमवक्ता तस्मै । एतेन वक्तृनैपुण्यं दर्शितं नीलकण्ठतत्शर्मा गुरुरुपदेष्टा तस्मै । नमो नम इत्यादरे वीप्सा । तथा च गुर्वनधिको यो मदीयापकर्षस्तद्बोधनानुकूलो मदीय आदरपूर्वको व्यापार इत्यर्थः । प्रकृतश्लेषोऽत्रालङ्कारः । नानार्थसंश्रयः श्लेषो वर्ण्यावर्ण्योभयास्पद इति तल्लक्षणात् ।। १ ।।

(ख) पुस्तकस्य तर्कामृतचषकस्योपसंहारभागः—अन्योन्यादिपदस्य तु स्वसमभिव्याहृतपदार्थतावच्छेदकावच्छिन्नमर्थस्तस्य स्वप्रकृतिकद्वितीयार्थे फले तस्य चानुकूलत्वस्वावच्छिन्नभेदसामानाधिकरण्योभयसम्बन्धेन क्रियायामन्वयः कर्मव्यतिहारे द्विर्भावस्य बलादिति सुंदोपसुंदावन्योन्यं जघ्नतुरिति वाक्याधीनो बोध इति विशेषो यद्यपि बहुवक्तव्यस्तथापि विस्तरभिया विरम्यते ।

चषकसुवर्णस्पर्शं दिनकरकरकृतपरामर्शम् ।
जगदीशमथनकल्पं पिबन्तु तर्कामृतं तदाकल्पम् ।। १ ।
सूत्रं स्वयं न बलितं मणिर्न घटितस्तथाऽपि चास्माकम् ।
मालाकाराणामिव ममता ग्रन्थे स्वकीयकौशल्यात् ।। २ ।

इति श्रीजड्युपनामकगङ्गारामविरचितस्तर्कामृतचषकः सम्पूर्णः ।

वर्षे वर्षाकाले चषकं चन्द्राग्निवसुवसुमतीमिलिते ।
व्यलिखद् गंगारामो गंगारामोभयस्य सन्तोषाय ।।

**तात्पर्यटीकोपसंहारः**

स्वकीर्त्यनुवृत्तये आशास्ते चषकेति चषकः सुवर्णस्य साभिप्रायपदस्य स्पर्शोऽभिप्रेतार्थग्रहणोपायो यस्य तत् । दिनकरेणास्मन्मातामहेन कर्त्रा करेण लेखनसाधनत्वात् करणेन कृत-

परामर्शः शोधनं यस्य तत् । जगदीशस्य ग्रन्थकर्तुर्मंथनं शास्त्रार्णवालोडनं दुरूहशास्त्रमननमिति यावत्तस्य कल्पो नामग्रहणे कर्तव्ये नामैकदेशस्य ग्रहणात् कल्पतरुरूपं फलं कामितार्थप्रकाशकत्वात्तत् तदित्थं व्याख्यातं तर्कामृतमाकल्पं पिबन्त्वित्याशीर्व्युत्पित्सव इत्यार्थिकं तत्कर्तृपदमध्याहार्यम् ।

सूत्रमिति सूत्रं न्यायवैशेषिकादीनां गुणो वा स्वयं मया न वलितं कृतं वा मणिग्रन्थो गुटिका वा न घटित उत्पादितस्तथापि स्वातन्त्र्याभावेऽप्येतेन तत्तत्कार्ये तेषामेव स्वातन्त्र्यं दर्शितमस्माकं तु मालाकाराणामिव ग्रन्थे ग्रथने वचनसन्दर्भे वा स्वकीयकौशल्यात् सन्दर्भाच्चुतेर्ममतास्ति । अत एव मया समर्पितमिति प्रागभ्यधायीत्यर्थः ।

समर्पितं बुद्धिमतां वरेण्ये पुरुषोत्तमे ।
असारहृदयाप्येषा पाञ्चालीव विलोक्य ताम् ॥ १ ।
विस्तृतन्यायशास्त्रस्य संक्षेपोऽयं कृतो मया ।
ग्रन्थसंख्यावियद्व्योमखाङ्कैर्लोकविश्रुता ॥ २ ।

इति श्रीजड्युपनामकगङ्गारामविरचिता चषकतात्पर्यटीका सम्पूर्णा ।

चषक स नाभिलिखिता लिखता तात्पर्यटीकामसौ गङ्गारामेण मया ।
विदुषो मनसोऽस्तु तोषाय भग्नपृष्ठकटिग्रीवं स्तब्धचक्षुरधोमुखम् ॥
कष्टेन लिखितं ग्रन्थं यत्नेन परिपालयेत् ।
व्यलेखि मेवाधरमिश्रतस्त्विदम् ॥

सं० १९५४ । वै० कृष्ण ३ भौमवारः

अनुस्वार-पर-पूर्वरूप-खण्डाकारचिन्हविषये उदासीनताऽस्य पूर्ववदेव, परं लेखस्य सुवाच्यता, अत्रापि क्वचित्प्रतिबिम्बस्य स्फुटता मन्दता च विद्यते कारणमज्ञातम्, तथापि मन्दोऽपि विशेषालोकापेक्षी ममापि मन्दहृष्टेः प्रायः सुपठः । अक्षरमात्रादीनां त्रुटयः प्रतिलेखावृत्ति जायन्त एव । किन्तु लघीयस्यत्रोद्धरणेऽपि उपसंहारभागे तर्कामृतचषकस्य पाठभेद आरम्भे दृश्यते । श्रीजगदीशकृतं तर्कामृतं चिरान्मुद्रितं लघुपुस्तकं प्रसिद्धम्, परमत्र चषकग्रन्थे मिलितमेवं लिखितम्, न तस्य विभेदकृते विशेषेण संकेतचिह्नमपि समादृतम् । व्याख्यानादेव तदंशो निर्णेतव्योऽस्ति । प्राचीनेऽत्र लेखे तस्य पाठभेदोऽपि सम्भवति । आपातत एवावलोकने मया एकत्रोपलब्धोऽपि । अग्रेऽपि भूयान् पाठभेदः, क्वचन मम टीप्पण्यां सूचितोऽपि दुष्पठस्यापि (क) प्रथमपुस्तकस्य (ख) द्वितीयापेक्षया शुद्धिरनुभूता, क्वचन टीप्पण्यां सूचिताऽपि । मम छात्रावस्थायां मूलमात्रं मुद्रितं तर्कामृतं लघुपुस्तकमुपलब्धमासीत् । नेदानीमुपलब्धम् । काशी-चौखम्भातः प्रकाशितं श्रीरामचन्द्रमिश्रकृतहिन्दीसंस्कृतटीकायुतं निर्णयसहायकमपश्यम् । तात्पर्यटीकाया एकमेव पुस्तकमतः पाठभेदस्य चर्चा नायाति ।

प्रथमं पार्श्वस्थबहुलटिप्पणीयुतं पुस्तकं द्वितीयञ्च विलोक्य एवमपि कल्पना प्रसरति यत् प्रथममेकमेव पुस्तकमुद्देश्यभूतम् पश्चाच्च टीकाभूतस्यापि चषकस्य मूलतायास्तात्पर्यटीकायाश्च मनोरथ आविरभूत् । अत एव पाठभेदो नान्तरीयकः संवृत्तः । कारिकावल्या मुक्तावली तस्याश्च दिनकरीयेति दृष्टचरो दृष्टान्त उत्तेजको भवेद्वा ।

द्वयोः पुस्तकयोरुपसंहारे उट्टङ्किता समयसंख्या विसंवादिनी

प्रथमपुस्तकेऽन्ते १८१८ वैशाखश्रूदीति वर्तते । द्वितीयपुस्तकेऽन्ते पद्येन चन्द्राग्निवसुवसुमतीमिते इत्यनेन १८३१ संवद् वर्षाकालश्च सूच्यते । अनयोस्तु समन्वयः कथञ्चित् सम्भवति । प्रथमं तर्कामृतचषकस्य सम्पूर्तिः १८१८ वैशाखशुक्लतृतीयायाम् अक्षयाभिधानायां परशुरामजयन्त्यां जाता । परं तात्पर्यटीकाविभूषितस्य तर्कामृतचषकस्य निर्माणम् १८३१ वर्षाकाले समापयत्, तथापि द्वितीयपुस्तकस्यान्ते 'सं० १९५४ वैशाखकृष्णभौमवारः' इति लिखितं न संवदति । मेवाधरमिश्रस्य प्रतिलिपेः समापनसमयोऽयमिति यद्युच्यते, तदा वृद्धस्यापि पण्डितपुङ्गवस्य द्रष्टुं श्रोतुमवगन्तुञ्च समर्थे वयसि, तस्य गङ्गारामस्य गङ्गालाभानन्तरं वा इति विकल्पो ग्रसति । तस्माद् मेवाधरमिश्रस्य प्रतिलिपिसमापनकालः १८५४ वैशाखकृष्णभौमवार इति । एवं ८ इत्यस्योपरि भवाङ्कलिपिसम्पादिका रेखा प्रमादादापतिता इत्येव प्रतिभाति । १८१८ वत्सरे पुस्तकमेकं समापितवतः पण्डितपुरन्दरस्यावगमनसमर्थजीवनम् १९५४ वर्षे न श्रद्धेयं स्यात् । यदि श्रीविश्वनाथसायुज्यसम्पन्ने तस्मिन् प्रतिलिपिस्तर्हि प्रामाणिकत्वाय मूललेखस्यापेक्षा, समर्थे जीवने एव प्रतिलिपिश्चेत् प्रामाण्यमावहति ।

पुस्तकस्य समर्पणग्रहणयोस्तिथेस्तथा समर्पयितुर्नामादेरङ्कनं क्वचिन्नास्तीति पुस्तकालयाध्यक्षेणान्विष्य सूचितम् ।

यदि पुस्तकालयीयप्राचीनलेखकर्गदानि कश्चिद् गवेषयेत्, पुस्तकद्वयं सह वै गृहीतं समयद्वये वा ? कस्मिन् कस्मिन् समये समागतम् ? कश्च दाता ? इत्यादि किमपि मिलेत्, तदाऽऽभ्यन्तरपक्षो निष्प्रत्यूहं निर्णीयेत; अन्यथा तु पक्षद्वयं सम्भवति—

(१) १८५४ वत्सरमेव ग्रन्थनिर्मातुर्जीवनकालः प्रतिलिपेः समयः, निर्मातैव पुस्तकस्य समर्पकः । तदानीं न प्रामाण्यसंशयावसरो न वा मूललेखस्यापेक्षा ।

(२) १९५४ एव प्रतिलिपेः समापनकालः, जडीमहोदयस्यावसाने कश्चित् तदुत्तराधिकारी मेवाधरमिश्रेण व्यलेख्य पुस्तकं पुस्तकालयाय समार्पयत्, ग्रहीता च मूलपुस्तकं नापेक्षत न चायाचत इति ।

अन्यच्च–यावत् प्रबलप्रमाणं न विरुणद्धि, तावदेवं विश्वसनीयं विपश्चिद्भिः । मुक्तावलीप्रकाशात्स्फुरिते चषके इत्यादिग्रन्थलेखे मुक्तावलीप्रकाशशब्देन मुक्तावल्याः प्रसिद्धा प्रचलिता टीका दिनकरीया ग्राह्या । तत एव साहाय्यग्रहणं ग्रन्थकर्तुरभिप्रेतम् । दिनकरीयाया एव टीकाया नाम प्रकाशः, तस्यैवायं मुक्तावलीप्रकाशनाम्ना निर्देशः । भारद्वाजकुलोद्भवश्रीमहादेवभट्टविरचितो मुक्तावलीप्रकाशः परं पूर्णतां न गत आसीत्, तस्यैव श्रीमहादेवभट्टस्य तनुजन्मना श्रीदिनकरभट्टेन पूरितः प्रकाश इति दिनकरीया नाम्ना व्यवहृताऽभूत् प्रकाशटीका । वैदुष्याभिरामश्रीगङ्गारामस्य समानकालिकस्तस्य मातामहो दिनकरभट्टः संशोधनमस्य पुस्तकस्याकरोदिति दिनकरकरकृतपरामर्शमित्यनेन निर्दिश्यते ।

एवञ्च विश्वनाथपञ्चानन-महादेवभट्ट-दिनकरभट्ट-नव्यनैयायिकश्रीजगदीशभट्टाचार्य-रामरुद्रभट्टाचार्याणामैतिहासिकसमया अन्वेषणीयाः समन्वेयाश्च सम्पतन्तीति सूचयामि । अहं तु पादसञ्चारशक्तेरभावात् सामग्रीं संघट्टयितुमशक्नुवानो न करोमीति च ।

**ग्रन्थकर्तुरन्ये ग्रन्थाः**

**(१) नौका**—स्वतन्त्रो न्यायग्रन्थः प्रतिभाति, विवादग्रस्तानां बहूनां पदानामभिधा-लक्षणाभ्यां तदर्थविचारः, लक्षितलक्षणोदाहरणभूतानां पङ्क्तिरथप्रभृतीनामर्थविवरणं प्रथमम् २४ पृष्ठे सूचिता, ५० पृष्ठे उपाधिनिरूपणेऽप्युद्धृता, ४३ पृष्ठे पङ्क्तिरथादिशब्दविवेचने १०६० पृष्ठे सामर्थ्योपपादने च स्मृता नौका।

**(२) शक्तिवादव्याख्या**—३२२ पृष्ठे सूचिता, पुनः ७६७ पृष्ठे शक्तेरैक्यप्रसङ्गे च चर्चिता, इमे पुस्तके ग्रन्थकर्तुर्गङ्गारामजडीमहोदयस्यान्वेषणीये।

**एतद्ग्रन्थोपलब्धो ग्रन्थकर्तुर्वंशपरिचयः**

श्रीप्रभाकरजडी पितामहः, तस्य ग्रन्थस्य पाण्डित्यस्य वा नोल्लेखः। श्रीनारायणजडी पिता, ८९८ पृष्ठे पितृपितामहयोरुभयोरुल्लेखः। नारायणजडीमहोदयस्य तत्र पदपद्धतिः पाणिनिभाषितम् इति ग्रन्थयोरपि पद्ये सूचना, पाणिनिभाषितविषये न किञ्चिदुक्तम्, परम् पदपद्धतेरुद्धरणं दत्तम्। प्रकृतिविकृतिकर्मनिरूपणसन्दर्भे 'सुवर्णं पिण्डं भवतीति प्रयुज्यते, पिण्डं सुवर्णं भवतीति न प्रयुज्यते' इत्यनुभववशादवयवावयविवृत्तिसुवर्णत्वजातिः प्रकृतित्वप्रयोजिका इत्याद्यभिप्रायकं समुद्धृतम्।

**मातृकुलम्**

दिनकरकरकृतपरामर्शमिति पद्यांशेन भारद्वाजो दिनकरभट्टो मातामहः स्मृतः। तस्य ग्रन्थो मुक्तावलीप्रकाशोऽसदकृदुल्लिखितः, दिनकरीयापराभिधानेन मुक्तावलीप्रकाशः प्रसिद्धः। तस्य कर्ता महादेवभट्टो भारद्वाजोऽपि स्मर्यते। तथा च प्रमातामहेन महादेवभट्टेनारब्धो मातामहेन दिनकरभट्टेन प्रपूरितो मुक्तावलीप्रकाश इत्यवसीयते। ज्ञानप्रदस्य श्रीनीलकण्ठशर्मगुरोर्ग्रन्थस्य चर्चा नास्ति। सर्वत्रैव पृष्ठसंख्या हस्तलिखितस्य प्राक्सूचितस्य तृतीयपुस्तकस्य बोध्या।

**ग्रन्थकर्तुः शास्त्रपाण्डित्यम्**

कवित्वशक्तिरस्योपक्रमोपसंहारपद्यैरनुमीयते। ग्रन्थस्य प्रासङ्गिकार्थसंग्रहाय ववचन श्लेष-कठिनता आयातीति त्वन्यत्। टीकायां मूलपद्येष्वलङ्कारं निर्दिशति। ग्रन्थे प्राकरणिकार्थस्फोरणाय प्रसिद्धकवीनां काव्यान्युदाहरति। कविनिबन्धवक्तृप्रौढोक्तिप्रसङ्गे सशङ्कासमाधानमालङ्कारिक-ग्रन्थेऽनुपलब्धं कविकल्पितवक्तृत्वं परिष्करोति। आलङ्कारिकशास्त्रस्य प्रणयी अधीती अपि तत्र। व्यञ्जनाविवेचनप्रसङ्गे स्थापने रसगङ्गाधरोपज्ञं सोदाहरं रूढिर्योगापहारिणीति न्यायानुकूलतादिकं सर्वमुपपादयति, स्वानुभवं सूचयति, न्यायनयेन समनुगमयति च। रूपकादि-व्यवस्थापने पण्डितराजप्रदर्शितमभेदस्य प्रतियोगिमुखमनुयोगिमुखञ्च भेदं न्यायदर्शन-व्याख्याऽप्याख्याति। तथा च पण्डितराजपाण्डित्येन प्रभावितोऽयं पण्डितप्रकाण्डः।

पाणिनिव्याकरणस्य पाटवमप्यस्य प्रशस्त्यास्पदम्। **'बहुषु बहुवचनम्'**[1] **'द्व्येकयोर्द्विवच-नैकवचने'**[2] इत्यादौ योगविभागेन वैयर्थ्यमुपपाद्य नियमार्थं कल्पयित्वा बहुत्वाभावेऽपि बहुवचनं संसाधितम्। नियमं च परिसंख्यापरं विवेचयता बहुत्वे बहुवचनमेवेति वर्णनेनानिष्टं निवारितम्।

---

१. अष्टाध्यायी १।४।२१। २. तदेव-१।४।२२।

उदाहरणञ्च कविप्रयोज्यः। उपपदविभक्तेः कारकविभक्तिर्बलीयसीति परिभाषाविषये यद्यपीदं स्वतन्त्रपरिभाषारूपेण पठितम्, तथापि भाष्यानुशीलनेनान्तरङ्गमूलकत्वमस्येति विलिख्य कारकाणां प्रथमं क्रियायामन्वय इति प्रत्यपादि। 'गतिबुद्धि'[1] प्रभृतिकर्मसंज्ञासूत्रस्य विधिनियमपक्षद्वयं चिन्तितम्। रन्यतरस्यामित्यत्र प्राप्ताप्राप्तविभाषां सकलं विविच्य व्यवस्थापितम्, कर्मव्यतिहारसूत्रवार्त्तिके विधिनियमव्यवस्थायुते सफले विवेचिते। भूषणदर्पणानुसारं कतिपये प्रकृतिविकृतिकर्मस्थले निरूपितमित्यन्यत्र निबन्धेऽलिखमेव। धात्वर्थे णमुल् उष्ट्रासिका आस्यन्ते सदृशाः कतिपये प्रयोगा उदाहृता व्याख्यातास्तदर्थं पद्यमपि समुदाहृतम्। भाष्यानुसारान्वयविषये मम प्रकारान्तरमन्यत्र लिखितं प्रकाशितं च कदाचन पुनरपि प्रकाशमुपगच्छेत्।

धर्मशास्त्रेऽपि सम्प्रदानस्योद्देश्यताघटितत्वेनोद्देश्यस्यैव सम्प्रदानसंज्ञा, न तु स्वत्वाधिकारिणोऽन्यथाऽर्धाधिकारिण्याः पत्न्या अपि सम्प्रदानत्वापत्तिरिति प्रसङ्गे स्मृतिवचनं समुद्धृतम्। स्वस्वत्वध्वंसप्रयोजिका सम्प्रदानस्वीकृतिरपीति प्रमापयितुं स्मृतिवचनं प्रदर्शितम्। तथा च शास्त्रान्तरेष्वपि सम्यगधीतीति पर्यवस्यति।

न्यायशास्त्रस्यापि प्रौढिं प्रदर्शयति, परे केचिदित्यादिना नैकविधव्याख्यानप्रदर्शने 'इति मदुपज्ञा सरणिः' 'मादृशां परिशीलितः पन्थाः' इति प्रौढोक्तयोऽसकृद् विलोक्यन्ते। तत्त्वचिन्तामणिव्याख्यातॄणामुपाध्यायमिश्राणां मतानि बहुधा निर्दिष्टानि समन्वितानि कृतानि व्याख्यातानि चेति कथमप्यस्य प्रकाशनेऽस्य चतुरस्रा वैदुषी विज्ञास्यते विज्ञैरिति शम्।



---

१. अष्टा० १।४।५२।

# आधुनिकं खगोलविज्ञानम्

डॉ० श्रीकृष्णचन्द्रद्विवेदी
ज्योतिषविभागाध्यक्षः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

❀ ❀ ❀

भव्यालोककलापकल्पकलया कालुष्यकालायते
लोकानां कमनीयकोमलकृपावारा हृदो हारकम् ।
कृत्स्नां सृष्टिकलां पुनाति पवनं तिग्मांशुमान्यमहो
नत्वा तत्तनुते खगोलकमलं श्रीकृष्णचन्द्रो बुधः ।। १ ।
दिव्ये देवरियावरे जनपदे ग्रामे सजाँवाभिधे
दैवज्ञो विमलः कुबेरघरजः श्रीकृष्णचन्द्रः सुधीः ।
ख्यातः शास्त्ररसारसायनधरः सूर्यैकभक्तो गुणी-
विज्ञानं चिनुते खगोलविषयं दान्तो द्विवेदी द्विजः ।। २ ।
गोत्रं भरद्वाजमुपेत्यमानी
मानं निजीयं वृणुते वरिष्ठम् ।
अवाप्तविज्ञानकलस्तनोति
विज्ञानबद्धं कमलं खगोलम् ।। ३ ।

**अस्माकं नभोमण्डलम्**

यद्यपि मनुष्यः स्वजन्मत एव दिवि प्रकाशमानान् सूर्येन्दुनक्षत्रादीन् खेचरान् दर्शं दर्शं समाकृष्टचेता नाद्यापि स्वकुतूहलं सन्तोषयितुं शक्तः। व्यतीतेष्वपि शरदां लक्षकोटिषु तद्-रहस्यमद्यापि रहस्यमेव समुत्सुकयति विवेकभाजां धियं तद्ग्रन्थिभेदनाय। प्रागैतिहासिके युगे तदाकर्षणसन्निकृष्टचेता भारादिरूढो लोको देवत्वबुद्धिं तेषु समारोप्य तन्महिम्नस्तवादौ परम्परामिवाकलयत् स्वकाव्यकल्पनाप्रागल्भ्यस्य। किन्तु प्रवर्धमानेन विज्ञानसम्पदा सहैव लोककुतूहलमपि दिवि भ्राजिष्णुपिण्डरहस्यज्ञानाय प्रावर्धत यत् कानि भास्करपिण्डानीमानि, कुतस्त्वेषां प्रकाशोद्गमः, कियद्दैर्घ्यमेतेषाम्, कियन्मात्रमन्तरं पृथिवीतस्तेषाम्, को न्वाधारो वा तत्स्थितेः ?

इदमेव कारणं विद्यते यद् बहुशाखामयेऽपि विज्ञाने ज्योतिर्विज्ञानं सर्वापेक्षया प्राचीन-तमं विज्ञानमस्ति। अनधिगताधुनातनोत्कृष्टयन्त्रविधयोऽपि बहुषु देशेषु प्राञ्चो ज्योतिर्विदो नभोरहस्योद्भेदनदिशि कानिचिद् याथार्थ्योम्मितानि विवेकनिष्ठानि विज्ञातवन्तस्तथ्यानि। तत्राग्रेसराः खलु भारतीयज्योतिर्विदोऽस्मिन् विज्ञाने प्रमोदामहे च यदद्यापि खगोलीयज्ञाने च प्रतिभाऽध्यवसायश्च भारतीयानामनन्यसामान्या विमुग्धकरी च।

प्रकाशमानेषु खेचरेषु सूर्यः सोमश्च धुरि वर्तमानोऽनन्यप्रतिमौ च, यतस्तयोः प्रकाश-परिमाणोऽधिकतरः। सूर्यो हि प्रथमो ज्योतिर्मयेषु व्योमपिण्डेषु। सूर्येणैवास्माकं जीवनस्य कृते

प्रचुरतरा ऊष्मा समागच्छति । स एव कारणं देहिनां वनस्पतीनां जीविताय, तेनैव वर्धते कृषिः, स एव तिमिरहरो योनिः प्रकाशस्य, तेनैव प्राणिति विश्वसर्गो नितरां स एव लोकालोकः ।

बहुले यन्त्रनिरपेक्षमपि यन्निशि दृश्यते तारकाराशिरनन्ते तत्सङ्ख्या त्रिसहस्रेभ्योऽप्यधिका श्रूयते । एतत्तारकं मण्डलं परिभ्रम्य दिवा भानि विहायसि यथा यथा पूर्वस्यामुदयन्ति क्रमशो नवनवास्ताराः प्रतीच्यां तथैवास्तं यान्ति । व्यतीतायां चतुर्विंशतिघटिकायां पुनः स्वस्थानं प्राप्नुवन्ति । उदीच्यामेको हि तारकः स्थिर इवाभाति, तस्यैव ध्रुवः[1] (स्थिरः) इति संज्ञा । तं परितो भ्रमन्ति तत्समीपवर्तिनोऽन्ये तारकाः । सर्गे हि तारकगणः कस्याप्यन्तर्शून्यस्य, किन्तु सुदृढगोलकस्योपरितने भागे लग्नः सम्भाव्यत इव,[2] खगोलापरपर्यायमिदं गोलकं स्वाक्षोपरि समानवेगं निरन्तरं परिभ्रमत् स्वभ्रमणचक्रैकं पूरयति चाहोरात्रकालानुसारम् । तदक्षस्तु पृथ्वीध्रुवसंयोगिनी रेखा तदुपरि स्थित्यैव ध्रुवतारको ध्रुवत्वं [अचलतामिति] भजते, तदूनाश्चान्ये तारकाः स्ववृत्ते भ्रमन्त इव दृश्यन्ते ।

यद्यपि तमिस्रायामेव दृश्यते नक्षत्रगतिरियम्, तथापि स्पष्टतरमेतद् यदहन्यपि प्रवर्तमानोऽयमेव क्रमो निरन्तरं प्रचलति, समुदेति भगवति मरीचिमालिनि तत्तेजसा समाच्छन्ने निखिले गगनमण्डले परिभूतत्विषो न दृश्यन्ते क्षीणप्रकाशा इमे तारकाः ।

यद्येकाहोरात्रावधिमधिकृत्य गगने समुदयं लभमानास्तारका गण्यन्ते चेत्, तत्संख्याऽतिशेते षट्सहस्रमपि । दूरवीक्षणयन्त्रेण निरीक्ष्यमाणाऽतिक्रान्ता लमिव दृश्यते इयं सङ्ख्या । यथा यथा वर्धते शक्तिमत्ता दूरवीक्षणयन्त्रस्य, तथा तथा हि दृश्यन्तेऽनन्ते नभसि नवनवतराः ताराः । नूनमानन्त्यमेव भजतेऽनन्ते विष्णुपथे तत्संख्याऽपि ।

परं सूर्येन्दुसहिता केवलमष्टावेवान्ये तारका याः खगोलकेऽस्मिन् स्वस्थितिपरिवृत्तिं भजन्ते । एतद्व्यतिरिक्ताः प्रायशः सर्वं एवं तारकाः सुव्यवस्थितस्थितयः पारस्परिकमन्तरं दिङ्मानञ्च रक्षन्ति । विभिन्नतारकोपेता निर्मिता बहुविधा ज्यामितीयाकृतयोऽपि नितरामपरिवृत्तिसहा विभाव्यन्ते । न च तेषु तारकमण्डलेषु[3] मिथः सापेक्षिकगतिवैषम्यं वा दृश्यते ।

सुस्थिरतारकस्थितिमतिखगोलकेऽस्मिन् स्थितिपरिवृत्तिसहायेऽष्टौ तारकाः, ते तु वस्तुतो न तारकाः, किन्तु ग्रहा[4] इत्यभिधीयन्ते । ते कुज-बुध-गुरु-शुक्र-सौरि-यूरेनस-नेप्चून-प्लूटोऽभिधाः । एषु कुजादिपञ्चकास्तु विनाऽपि दूरवीक्षणयन्त्रं दृष्टिगोचरतां भजन्ते । ज्ञाताश्चासन् प्रागेव ज्योतिर्विद्भिः, परं त्रयोऽन्तिमास्तु दूरवीक्षणयन्त्रमहिम्नैव स्वस्थितिबोधे विद्वज्जनकुलं क्रमशः खीष्टाब्दे १७८१-१८४६-१९३० वर्षे समेधयामासुः । स्थितिपरिवृत्तिबलात् सूर्यश्चन्द्रमाश्च प्राचीने ज्यौतिषशास्त्रे ग्रहाभिधावेव ।

प्राचां मते भूः केन्द्रं खगोलकवृत्तस्याचला चासीत् सतारकमण्डलं विष्णुपथं भुवं परिभ्राम्यतीव, किन्तु ४९९ तमे खीष्टाब्दे नाम्नाऽऽर्यभटेन ज्योतिषशास्त्रमहाविदुषा प्रतिपादितमेव

---

१. Pole-star.   २. Celestial sphare.

३. Constellations.   ४. Planets.

यत् सर्वथा निश्चलं खगोलकं तथा कन्दुकाकृतिरियं भूरेव पश्चिमतः पूर्वमभिस्वकक्षपरिवर्तिनी परिभ्राम्यतीव। किन्तु प्रत्यक्षज्ञानप्रतीपत्वान्नासौ सिद्धान्तः प्रतिष्ठामवाप भारतीये वैदेश्ये च ज्योतिर्विन्मण्डले। श्रूयते यत् खीष्टाब्दतः पञ्चाशदुत्तरद्विशताब्दपूर्वम् २५० केनचिद् 'अरिस्ताकंस'नामा ग्रीसदेशीयपण्डितेनापि तत्सममेव मतं प्रतिपादितमासीत्, परम् १४७३ खीष्टाब्दजातः पोलैण्डवास्तव्यः कॉपरनिकस[1] एवाचलस्थितिं खगोलकस्य परिचलनं भुवश्च प्रतिपादितवान् वैज्ञानिकदृष्ट्या युक्त्या च। परमीसाईधर्मावलम्बिनामाचार्याणां विरोधभयात् सुचिरकालं लब्धप्रतिष्ठोऽपि विशिष्टकीर्तिरपि न कोऽपि ज्योतिर्विन्मतमेनमनुमेने व्यपनीयविरोधम्। परं सत्यमेव जयते, नासतो विद्यते भाव इत्यादिगौरवात् स्वसत्यनिरूपणाच्च शनैः शनैर्मतमेतद् विद्वन्मण्डले प्रतिष्ठां लेभे, तथाऽधुना तु सर्वमान्यमेतद्।

आधुनिके विज्ञानसंवलिते लोके तु खगोलीयप्रेक्षणादिवर्ज्जमपि प्रमाणबाहुल्यं प्रमाणीकरोत्येव परिभ्रमणं भुवः।

मेषवृषादीनां द्वादशराशीनामाकृतिस्थिरीकरणे तदभिधाने च महोद्योगोऽङ्गीकृतो प्राचीनज्योतिर्विद्भिः प्राचीनभारतजातैः। तारकमण्डलं समूहो वा पुञ्जीभूतं राशिरिति। येन मार्गेण स्वकक्षावर्तिनः सूर्यसोमादयो ग्रहा व्योम्नि चलन्ति, तदाकाशभाग एव स्थाने स्थाने तारकनिचया दृश्यन्ते विविधरूपाकृतयस्त एव राशयः। यथा प्रथमं मेषतुल्याकृतिस्तारकपुञ्जो मेष इति नाम्ना व्यपदिश्यते। न केवलं ग्रहगतिरेव समधीतास्तैः, अपि तु तद्भ्रमणकालमपि सुसूक्ष्मं समाकलय्य गणितद्वारा विनिश्चित्य भविष्यवाण्या समुद्घोषितमपि यदमुककालेऽमुकस्थानेऽमुकग्रहयोगो भविष्यतीति, सूर्यचन्द्रग्रहणादिज्ञानन्तु ज्योतिर्विदां प्रथमः प्रत्ययः। एतदर्थं दूरवीक्षणयन्त्रेण सह तैरेककोणीयनिर्देशाङ्कपद्धतिरपि[2] सुतरामाविष्कृता। एतद्द्वारा कस्यापि नवदृष्टतारस्य खगोलीयस्थाननिर्देशो नितरां सुकरः। यथा यथा दूरवीक्षणयन्त्रनिर्माणे तद्द्वारा निर्देशाङ्कमानकलायाश्च समुत्कर्षोऽभवत्, तथैव निर्देशाङ्कमानेऽपि तद् याथार्थ्यं विश्वासार्हतां लेभे। इदानीं तु कस्यापि तारकस्य दिगाद्यवगमने सूक्ष्मतमकोणशतांशतुल्यमप्यन्तरं सर्वथा सुष्ठुरूपेण ज्ञातुं शक्यते। कालाद्यवगमाय समुत्कृष्टघटीयन्त्राणां निर्माणमपि साधुश्लाघ्यतरमेव। एतद्द्वारा कालाकलनादौ वर्षावधावपि नैकविपलस्याप्यन्तरं भवितुमर्हति। अत एव क्वापि जगति वेधशालासु समयमानज्ञाने याथातथ्यमसन्दिग्धम्।

एतदपि क्रमशो ज्ञातमेव यन्न ग्रहः सूर्यः, परं तारक एव। प्रायेणाचलश्च खगोलीयतारकाणाम्। पृथिव्यास्तन्वदिष्ठत्वमेव सूर्यस्य दैर्घ्यत्वे हेतुः। तारकान्तरापेक्षया सूर्ये या गतिशीलता दृश्यते, तत्त्वाभासमात्रमेव भ्रमारोपितम्। वार्षिकगतिरेव पृथिव्यास्तत्कारणम्। यथा तीव्रतरगतिशीलयानस्थाय निश्चलमपि वानस्पत्यं जगच्चलदिव प्रतिभाति। इत्थमेव सूर्योऽपि चलन्निव दृश्यते। यथाऽन्ये ग्रहास्तथैवास्माकं भूरपि ग्रह एव।

खीष्टाब्दतः १६०९, खीष्टाब्दम् १६१९ यावदनवरतप्रेक्षणैर्ग्रहादिगतिमुद्दिश्य वैज्ञानिकमूर्धन्येन 'केपलर'[3]महाभागेन प्रतिपादिता सयुक्तिपुरस्सरं सिद्धान्तत्रयी। तदनन्तरं तु

---

१. Copernicus. २. Co-ordinate system. ३. Kepler.

सरलतरो जातः परिकलनादिविविधिर्ग्रहगतीनाम् । सुस्पष्टतरं प्रख्यापितमेभिः सिद्धान्तैर्यद् भूरन्ये ग्रहाश्च सूर्यं परिक्रामन्ति गगने । तेषां परिभ्रमणपथः[१] कक्षो वा दीर्घवृत्ताकारः परस्परान्तरवर्तिनी कक्षाणामवस्थितिस्तथा विहिता यथा प्रत्येककक्षानाभिः सूर्यस्थितिं रक्षति । स्वपरिक्रमणे सूर्यात् स्वान्तररक्षणे च तेषु ग्रहेषु घनिष्ठतरः परस्परं सम्बन्धो दृश्यते । सरलतरेण गणितीयसूत्रेणास्य व्यक्तीकरणमपि सुकरं सिद्धान्तस्य—सुस्पष्टमेव सिद्धान्तितमनेन यत् सर्वे ग्रहा यथाकथञ्चित् सम्बद्धाः सूर्येणेति । तदनन्तरं सरआइजकन्यूटनप्रतिपादितेन गुरुत्वाकर्षणसिद्धान्तेन विज्ञापितमेवास्य भौतिकमपि कारणम् । सूर्यस्तथा पृथिव्यादिग्रहादीनां समुदायश्च [२]सौरपरिवारसंज्ञयाऽभिधीयते ।

अयं चन्द्रोऽपि सौरपरिवारीयः, परं नैष ग्रहः, पृथिव्यादयो ग्रहाः सूर्यं परिक्रामन्ति, तद्वदेव चन्द्रोऽपि पृथ्वीं परिक्रामति गुरुत्वाकर्षणसिद्धान्तवशगः । अतोऽयमुपग्रहश्चन्द्रः पृथिव्याः । निकटतरमेवास्य स्थितिः पृथिवीतः । इत्थमेवान्येऽपि ग्रहाः स्वस्वोपग्रहसहिताः । यथा सूर्यं परिक्रामन्ति ग्रहाः, तथैवोपग्रहा अपि स्वग्रहं तदैवं परिक्रामन्ति नैरन्तर्यमरोऽयं क्रमः कदापि न विरमति ।

भुवश्चन्द्रस्य गतिज्ञानात् स्पष्टीकृत एव सूर्यचन्द्रग्रहणहेतुः । नैवात्र राहुकेत्वादिपुराणव्यपदिष्टोऽसुरो ग्रहणे हेतुः । यदैव सूर्यपृथ्वीमध्यवर्तिनश्छाया चन्द्रमसः सूर्यबिम्बं पूर्णतोंऽशतो वा समावृणोति[३], तदा सूर्यग्रहणमिति कथ्यते । तथैव सूर्याचन्द्रमसोर्मध्ये समागतां भुवश्छायां यदा चन्द्रबिम्बं समावृणोति, तदा तच्चन्द्रग्रहणमिति ज्ञायते । सूर्यचन्द्रादिग्रहणसमयनिर्देशे नितरां समर्था ज्योतिर्विदां भविष्योक्तिः ।

नक्षत्रग्रहोपग्रहादीनां सूक्ष्मप्रेक्षणादेव तद्गतिस्थितिमानादेर्याथार्थ्याकलनेनैव सम्पन्नतामेतत् सर्वं जातम्, अत्रैव विरमति प्राचीनज्यौतिषशास्त्रम् । अधुनातनविज्ञाने तारकादिमानशास्त्रं[४] तारामितिरिति संज्ञायते । तथैव तन्मानाय सूक्ष्मयन्त्रादिनिर्माणं तद्द्वारा मापनादिकलापरिज्ञानञ्च व्यावहारिकं[५] ज्यौतिषशास्त्रमिति कथ्यते ।

इदानीं या ताराभौतिकी[६] ज्योतिर्भौतिकी वाऽभिधीयते, तद्द्वारैव नक्षत्रग्रहोपग्रहादीनां बहुविधं ज्ञानं समधिगम्यते । तद्यथा—कियन्मात्रं तेषामन्तरम्, तन्माने पद्धतिश्च का, कियच्च तेषां दैर्घ्यम्, पिण्डायतनञ्च किम्, किञ्च द्रव्यमानम्[७], कथं विनिस्सरति प्रकाशस्तेभ्यः, कियद्वा तापमानम्, को वा तन्निर्मितौ पदार्थसमवायः, किमनादयोऽनन्तास्ते आगमापायिनो वा, यदि ध्वंस एव परिणतिः, तदपि कथम्, किं निश्चल एव नितरां तारकसमुदायः, कियद्रूपा वा तेषां गतिः, नियतप्रायो ब्रह्माण्डविस्तारः परिवृतिं वाऽपेक्षते, पृथिव्यामिव तारकेषु ग्रहादौ वा सम्माव्यते जीवनमस्तित्वं वा वनस्पतीनाम्, विद्यते कोऽपि पृथिव्यतिरिक्ते तारके ग्रहादौ वा बुद्धिविज्ञानयुक्तो मनुष्य इव जीवविशेषः ?

एतेषामेतद्विधान्येषामपि प्रश्नानां समाधानं संक्षेपतः प्राचीनभारतीयखगोलशास्त्राध्येतॄणामन्तेवासिनां कृते तद्विषयसंस्तव एवास्माकं प्रस्तावोद्देश्यः ।

---

१. Orbit. २. Solar-System. ३. Satellite. ४. Astrometry.,
५. Practical Astronomy. ६. Astrophysics., ७. Mass.

यद्यपि नैवाद्यापि सम्भाव्यते याथार्थ्येन समाधानमेतेषां बहुविधानां प्रश्नानाम्, तथापि सर्वथा परिचिता वयमसन्दिग्धमेतत्पराणां विषयाणाम्। खगोलविज्ञानेऽभिनवः प्रयोगो नवनवाः प्रगतिश्च प्रत्यहं श्रूयत इव। कुतूहलपदमेवैतद् यदतिलक्षकोटिक्रोशदूरभाजां ब्रह्माण्डैकभागावस्थितानामतिदूरतया केवलं क्षीणतरप्रकाशैकसंस्तवानां तारकाणां विषयेऽपि सफला वयमेतन्मात्रमपि ज्ञानलब्धये आधुनिकविज्ञानबलेन।

आधुनिकविज्ञानविरहादेव पुरा बलवतीयं धारणाऽऽसीद् यन्मनुष्य एव प्रथमस्थानीयः सर्गविधौ, यत् तदर्थमेव तत्कल्याणाय तदभ्युदयैकहेतवे निखिला धातुरियं सृष्टिः प्रावर्तत; परं सर्वथाऽवगतमेवेदानीं यदस्माकं तु परं नगण्या स्थितिरस्मिन् ब्रह्माण्डे। सूर्यादपि दैर्घ्ये शक्तौ च बहुगुणाधिका तारका अतिलक्षकोटिसंख्याका ब्रह्माण्डकोणैकदेशे विद्यन्ते।

अयञ्च सौरपरिवाराध्यक्षोऽस्माकं सूर्यः पृथिवीतो लक्षगुणादप्यधिका स्थितिरिदानीं ब्रह्माण्डेऽस्माकं भुवः। नूनं सैकतराशिनिर्भरे[1] ब्रह्माण्डे धाम्नि सिकताकणैः कस्यापि स्थितिं न लभते वराकी पृथिवी, सुतरां चिन्तयतु नाम वराको मानवः क्षुद्रतमात्मस्थितिं विरमतु च मिथ्याऽहङ्कृतिप्रपञ्चात्। निर्विवादास्पदमेतद्यद् विपुलविस्तारवति जगत्यस्मिन्नेकरूपमेव परमाणुमयं द्रव्यजातं तथा चाघटितघटनापटीयसी भगवती प्रकृतिरेव नियन्त्रयति निखिलं कार्यकलापम्। पुनः पुनः विस्मयान्धौ निपतति मनुष्यबुद्धि दर्शं दर्शं ब्रह्माण्डवैचित्र्यमेतत्—प्रभवति च विवेकभाजां दार्शनिकानामुद्योगस्तद्रहस्यावगमे।

प्रायशो विश्वस्मिन् सर्वत्र बलीयसीयं विश्वासपरम्परा यदाकाशचारिणो ग्रहाः तारकाश्च स्वगतिभिर्मिथो मैत्रीद्वेषौदासीन्यप्रकृतिशीलितसंयोगवियोगसङ्क्रमणादिव्यापारैः प्रतिदेशं प्रतिजनं प्रतिजीवनमभ्युदयं विनिपातादिविधौ स्वप्रभावेण नियन्त्रयन्ति। प्रायेण ज्योतिर्विदो भविष्यमानवफलश्रुतिमपि कुर्वन्ति ग्रहादिस्थितिं पर्यालोच्य। ग्रहतारकादिखेचराणां सुचिरकालात् प्रेक्षणे गतिस्थित्यादिसमाकलने ज्योतिर्विदामयमेव विश्वासः कारणम्। फलितज्यौतिषशास्त्रं[1] तु भारतीयदैवज्ञानां परमो निधिः। श्रद्धाभरे भारते तु फलितज्यौतिषो विज्ञानत्वमसन्दिग्धमेव। नैवाद्रियते विज्ञानविदां समाजे न च प्रतीतिकक्षामारोहति। फलितज्यौतिषशास्त्रम्, तथापि विस्मयकरमेवैतद् यन्निखिलेऽपि जगति सर्वो हि लोकः फलितज्यौतिषाऽऽकृष्टः प्रतिभाति। यथा हेमीकरणसिद्धान्तोत्साहितो लोको निष्फलोऽपि तद्द्वारैव रसायनविज्ञानप्रक्रियामतनोत् समवर्धयच्च, तथैव फलितज्यौतिषाग्रहोत्साहितो दैवज्ञलोको ग्रहगतिस्थित्यादौ प्रयत्नभरो जातः। तदेवाधुनिकखगोलविज्ञानस्य मूलम्, संवर्धमानमेव दिनानुदिनमेतद्विज्ञानमिति शम्।



१. Astrology.

# प्राचीनभारतीयवाङ्मये सापेक्षवादः

डॉ० नागेन्द्रपाण्डेयः

प्राध्यापकः—ज्योतिषविभागे

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

वस्तुतस्तु स्पष्टरूपेण नाम्ना सापेक्षवादस्य नास्ति क्वापि चर्चा विस्तृते भारतीय-वाङ्मये। तस्य गणितीयस्वरूपस्य का कथा? पुनरपि यत्र तत्र विविधविषयविश्लेषणे ये सिद्धान्ताः प्रतिपादितास्तैः सापेक्षसिद्धान्तस्य तुलनां कर्तुं शक्यते। यथा—ऋग्वेदस्य नास-दीयसूक्ते प्रश्नः समुत्तिष्ठति—

**नासदासीन्नो सदासीत्तदानीं नासीद् रजो नो व्योमा परो यत्।**
**किमावरीवः कुह कस्य शर्मन् अम्भः किमासीद् गहनं गभीरम्॥**

कः क्वावस्थितिं लेभे? कः केन पिहित आसीत्? कः कमशिश्रियत्? किं तदानीं गहनं गभीरमम्भ आसीत्? प्रतिवचनेनाभिहितम्'''सृष्टेः प्राग् न सदासीद् नापि चासत्। नान्तरिक्ष-मासीद् नापि ततः परस्ताद् व्योमापि चेति।

**"न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत् प्रकेतः।"**

तदानीं मृत्युर्नासीत्। अमरत्वमपि नासीत्। रात्रिर्नाभवद् दिनमपि च तथा। न च युग्मयोरेतयोरेकतरस्य पार्थक्यावबोधकृते किमपि विनिगमकं कारणमुपलब्धमासीत्। मन्ये तदानीं वस्तुमात्रस्याभाव एव लब्धसत्ताक आसीत्। किन्तु चेतसीदं स्फुरति यद् ब्रह्माण्डस्य लोचनगोचरेषु द्रव्येषु ध्वस्तेषु सत्स्वपि कालः स्थास्यत्येव। किन्तु यदीत्थं कल्प्येत यदाकाशोऽ-न्तरिक्षं देशो वा संकुचितुमुपक्रमेत, ततोऽयं सङ्कोच एतावतीं वृद्धिमुपायाद् यद् निखिलोऽपि विश्वोऽवकाशो वा लोपं व्रजेत्, तदाऽपि कालः सत्तावान् स्यात्। परिकल्पनयाऽनया मनस्तु शैथिल्यमुपयाति, किन्तु क्षणं क्षीणा सम्भावनाऽप्रत्यक्षतया समक्षमुपतिष्ठति यद् देशविलयसम-कालमेव कालोऽपि विलयमुपयातुं सम्भवति। यदीत्थं सम्भवति तदा नासदीयसूक्तस्योक्तिः स्फुटरूपेण प्रकाशितेव दृश्यते यद् देश एव कालः, काल एव देश इति। यच्चाधुनिकभौतिक-विज्ञानस्योपलब्धिर्विद्यते। इदमेव तत् सूक्तं स्वविलक्षणया सरण्या अतितरां पुरातने काले एव व्यक्तीकृतवदासीत्।

**देवानां दीर्घायुष्ट्वस्य रहस्यम्**

ज्योतिषशास्त्रेण पुराणाख्यानेन च ज्ञायते यद् ब्रह्मण आयुः = ३११०४००००००००, १०० वर्षाणां भवति[1]। अगस्त्यकाकभुशुण्डिनारदादयश्चापि दीर्घायुस्सम्पन्ना मन्यन्ते। अश्व-त्थामा-बलि-व्यास-हनुमद्-विभीषण-कृप-परशुरामाश्चापि चिरजीविनः कथ्यन्ते।[2]

---

१. सि० शि० कालमानाध्याये, श्लो० २५।

२. अश्वत्थामा बलिर्व्यासो हनुमांश्च विभीषणः।
कृपः परशुरामश्च सप्तैते चिरजीविनः॥ (भारतभक्ति० श्लो० १५)

इत्थं विचार्यते यद् देवास्तीव्रगतिशालिन आसन्; यतस्तेषां त्रिषु लोकेषु सर्वत्रैव विद्यमानता स्मरणमात्रेण दरीदृश्यते (साधकैः)। हनुमतस्तीव्रगतिविषये तु…'मनोजवं मारुततुल्यवेगम्' इत्युक्त्या तस्य गतेस्तुलना मनसा कृतं वर्तते। अर्थात् सोऽतीव तीव्रगतिशाली आसीत् (यथा समुद्रतरणम्, लक्ष्मणस्य शक्त्याघातप्रसङ्गे सञ्जीवन्योषध्यानयनार्थं तीव्रगत्या गमनागमनं च)।

सापेक्षवादसिद्धान्ते प्रकाशगत्या किञ्चिन्न्यूनगतिशालिजनस्य समयः पृथिव्याः समयेन मन्दो भवति। यथा यदा जनस्य गतिः प्रकाशवेगस्य (१८६,००० मी० = १ से०) ९९% प्रतिशतं भवेत्, तदा पृथिव्याः १०० वर्षाणि जीवातुजनस्य कृते १४·१ वर्षाणि भविष्यन्ति। प्रकारान्तरेण कल्प्यते यद् विंशतिवर्षीयौ युवकौ स्तः। अनयोरेकः पृथिव्यां तिष्ठति, द्वितीयश्च पूर्वोक्तगत्या सुदूरेऽन्तरिक्षे परिभ्रमति। शतवर्षानन्तरं पृथिव्यां स्थितस्य युवकस्यायुः २० + १०० वर्षप्रमाणम् = १२० भविष्यति, तदाऽन्तरिक्षे भ्रममाणस्य युवकस्यायुः २० + १४·१ = ३४·१ वर्षस्य भविष्यति[1]। तदैकश्च दन्तहीनो वृद्धो भविष्यति, परं द्वितीयश्च युवक एव स्थास्यति। अस्य सूत्रस्य निर्धारणं सापेक्षसिद्धान्तेनैवं क्रियते—

$$\frac{\text{स न}}{\text{स पृ}} = \sqrt{१ - \left(\frac{\text{ग न}}{\text{गप्र}}\right)^{२}}\ ।$$

अत्र स न = अन्तरिक्षे भ्रमणशीलस्य यात्रिणो गतिः।

स पृ = पृथिव्यां व्यतीतकालः।

ग न = अन्तरिक्षे गतिमानम्।

ग प्र = प्रकाशगतिः।

अत एव पूर्वोक्तनियमेन देवानां वैचित्र्या गतिरेव तेषां दीर्घायुसो रहस्यमिति स्पष्टम्। देवानां पार्श्वेऽतितीव्रगतिशाली आसीदित्यस्य प्रमाणं प्राप्यते ऋग्वेदे। यथा—

अनेनो वो मरुतो यामो अस्तु अनश्वः चिन्त्यः अजत्यरथीः।
अनवसो अनभीशू रजस्तूः विरोदसी पत्था याति साधन्॥[2]

पुनश्च—

तिस्रः क्षपस्त्रिरहातिव्रजद्भिर्नासत्या भुज्यु………प्रतङ्गैः।
तमूह्युः नमिरात्मन्वतीभिः अन्तरिक्षप्रद्भिरयोदकाभिः॥[3]

भर्तृहरिमतम्

महर्षिकल्पस्य श्रीमद्भर्तृहरेर्नीतिशतकस्य मङ्गलाचरणे उक्तम्—

दिक्कालाद्यनवच्छिन्नानन्तचिन्मात्रमूर्त्तये।
स्वानुभूत्यैकमानाय नमः शान्ताय तेजसे॥[4]

---

१. डॉ० खड्गसिंह वल्दिया (धर्मयुग, २७ मई, १९७३)।

२. ऋग्वेदे ६।६६।७।   ३. ऋग्वेदे १।११६।३।

४. नीतिशतकम्, श्लो० १।

अत्रैकं विलक्षणं तैजसस्वरूपं कल्पितं यत्तु दिक्कालादिनाऽबाधितोऽस्ति । तस्य तैजस-पदार्थस्य केवलानुभूतिरेव भवितुमर्हति । मन्ये स तदा सूक्ष्मतमः (अदृश्यः) व्यापकश्च स्यात् । यतश्चेन्मात्रमूर्तेः कापरा मूर्तिर्भविष्यति । अस्य श्लोकस्य अपरपक्षोऽपि विचारणीयो यदत्र दिक्कालावपि परिमितौ समुद्घोषितौ । सापेक्षवादस्यापि मुख्यनियमोऽयमेव यद् निरपेक्षरूपेण सर्वतन्त्रस्वतन्त्ररूपेण च दिक्कालस्य व्याख्या नास्ति । यश्च दिक्कालादिनाप्यवच्छिन्नः, स तु चिन्मात्रः, स्वानुभूतिमात्र एव भविष्यति; उदाहरणार्थं यथेश्वरस्य परिकल्पना । अत्र 'स्व'-शब्दस्य योजनापि विशिष्टार्थे कल्प्यते । सम्प्रति विज्ञाने 'स्व' इत्यस्यास्ति विशेषविचारः, यथा 'स्वदिक्', 'स्वकाले' (I-Time) इत्यादीनाम् । यतो विविधपिण्डेषु तेषां स्थित्यनुसारं कालस्य पृथगेव स्वरूपोऽस्ति । सार्वत्रिककालस्य मान्यता खण्डिता[1] सापेक्षवादेन, अतः स्वानुभूतिजन्य-परिणाम एव स्वस्य कृते वास्तविको भवति ।

**श्रीमद्भागवते कालस्य वैचित्र्यप्रतिपादनात्मिकैका कथा**

ककुद्मिनामकस्य राज्ञ एका कन्या रेवती सञ्जाता । स्वकन्यकाया रेवत्या विवाहार्थं राजा ब्रह्मलोकं ब्रह्माणं प्रष्टुं गतो यत् केन सहास्याः परिणयो भविष्यति । तत्र गत्वा राजा दृष्टवान् यद् ब्रह्मणो द्वारे गतिवाद्यादिकं प्रचलन्नास्ते । अतस्तस्मिन् क्षणेऽनवकाशं दृष्ट्वा क्षणान्तरं स्थित्वा (गन्धर्वगानसमाप्तिकालम्) स्वाभिप्रायं ब्रह्मणो निवेदितवान् । तदा ब्रह्मा विहस्योक्त-वान्—राजन् ! त्वया आगमनवेलायां ये जना हृदि कृता मनसा चिन्तिताश्च ते सर्वे कालेन कवलिताः । तेषां ये पुत्रादयस्तेऽपि नाममात्रावशेषा अपि न सन्ति । यतस्तवागमनानन्तरं सप्तविंशतिचतुर्युगानि व्यतीतानि । अतो वर्तमानकाले देवांशभूतो बलदेवो वर्तते, तेनैव रेवत्याः परिणयं कर्तुं युक्तम् । यथा—

ककुद्मी रेवतीं कन्यां स्वमादाया विभुं गतः ।।
कन्यावरं परिप्रष्टुं ब्रह्मलोकमपावृतम् ।
आवर्तमाने गान्धर्वे स्थितोऽलब्धक्षणः क्षणम् ।।
तदन्त आद्यमानम्य स्वाभिप्रायं न्यवेदयत् ।
तच्छ्रुत्वा भगवान् ब्रह्मा प्रहस्य तमुवाच ह ।।
अहो राजन् निरुद्धास्ते कालेन हृदि ये कृताः ।
तत्पुत्रपौत्रनप्तॄणां गोत्राणि च न शृण्महे ।।
कालोऽभियातस्त्रिणवचतुर्युगविकल्पितः ।
तद् दगच्छ देवदेवांशो बलदेवो महाबलः ।।
कन्यारत्नमिदं राजन् नररत्नाय देहि भो ।।[2]

ब्रह्मलोके क्षणमात्रकालोऽपि भूवासिनां सप्तविंशतिचतुर्युगतुल्योऽभवदिति विचारणीयम् । सापेक्षवादस्यायं सिद्धान्तो यत्—एकैव घटना द्रष्टृभेदात् स्थानभेदाच्च विभिन्नकालिका भवति । नास्ति कापि क्रिया या सर्वेषां कृते समकालिकी भवेत् । अत्रापि राज्ञः ककुद्मिकृते यो क्षणमात्रकालः स भूवासिनां कृते सप्तविंशतिचतुर्युगतुल्यतां गतः । नूनमनेन कथामाध्यमेन सापेक्षवादस्य परिपुष्टिर्भवतीति सुस्पष्टम् ।

---

१. अपेक्षिकता की मूल संकलपनाएँ, पृ० ३५ । २. श्रीमद्भागवते—९।३।२८ ३४ ।

**गत्या कालस्य सम्बन्धः**

श्रीमद्भागवते वानप्रस्थाश्रमवर्णनप्रसङ्गे वानप्रस्थी स्वकीयशरीरान्तर्गतवर्तमानतत्त्वानि कथं विलयेदितीत्थं वर्णितम्—

वाचमग्नौ सवक्तव्यामिन्द्रे शिल्पं करावपि ।
पदानि गत्या वयसि रत्योपस्थं प्रजापतौ ॥[1]

वीरराघवस्यात्रान्वितार्थप्रकाशिकाटीकायाम् 'गत्या सह पादौ वयसि कालात्मके विष्णौ विनिर्दिशेत्, ततोऽभिनिवेशयेत् ।'

गिरिधरलालश्च—'गत्या सह पादौ वयसि कालात्मके विष्णौ विनिर्दिशेत्, विलयमनुसन्दधीत' अर्थाद् गतेर्विलयः काले भवति । गतेरधिष्ठातृदेवता कालश्च प्रतिपादितः । अनेन गत्या सह कालस्य सम्बन्धः सापेक्षवादस्य गतिकालसम्बन्धेन तुलनीयोऽस्ति ।

**योगवाशिष्ठे सापेक्षवादः**

कालः सर्वं निकृन्ततीति कालमहिम्न्युक्तम्[2] । किन्तु समयस्य सापेक्षताया अपि सुस्पष्टं प्रतिपादनं कृतम् । यथा—

निमिषेणैव मे कल्पो गत इत्यनुभूयते ।
रात्रिर्द्वादशवर्षाणि हरिश्चन्द्रे तदा ह्यभूत् ॥
कान्ताविरहिणामेको वासरो वत्सरायते[3] ॥

सापेक्षवादसिद्धान्ते यथा विभिन्नतन्त्रे विभिन्नसमयस्य बोधः क्रियते, तथैवात्रापि व्यक्ति(तन्त्र)भेदात् कालभेदोऽस्ति । तथैव योगवाशिष्ठकारेणाभिहितम् । तद्यथा—

देशकालाभिधानेन रामसङ्कल्प एव हि ।
कथ्यते तद्वशाद्यस्माद् देशकालौ स्थितिं गतौ[4] ॥

अपि च—

द्यौः क्षमा वायुराकाशं पर्वताः सरितो दिशः ।
सङ्कल्पकल्पितं सर्वमेवं स्वप्नवदात्मनः ॥

पुनश्च—

मनोरथे तथा स्वप्ने सङ्कल्पकल्पनासु च ।
गोष्पदं योजनव्यूहः स्वासु लीलासु चेतसः ॥
निमेषे यदि कल्पौघसंविदं परिविन्दति ।
निमेष एव तत्कल्पो भवत्यत्र न संशयः ॥
कल्पे यदि निमेषत्वं वेति कल्पोऽप्यसौ ततः ।
निमेषो भवति क्षिप्रं तादृग्रूपात्मिका हि चित् ॥

---

१. श्रीमद्भागवते—७।१२।२६ ।
२. योगवाशिष्ठे—१।१८।३७ ।
३. योगवाशिष्ठे—३।०२०।५० ।
४. योगवाशिष्ठे—३।१११।५९ ।

दुःखितस्य निशा कल्पः सुखितस्यैव च क्षणः ।
क्षणः स्वप्ने भवेत् कल्पः कल्पश्च भवति क्षणः ॥
यन्मुहूर्तं प्रजेशस्य स मनोर्जीवितं मुनेः ।
जीवितं यद् विरञ्चस्य तद्दिनं किल चक्रिणः ॥
विष्णोर्यज्जीवितं राम तद् वृषाङ्कस्य वासरः ।
ध्यानप्रक्षीणचित्तस्य न दिनानि न रात्रयः ॥[1]

**परमगतेर्विवेचनम्**

यदि कोऽपि जनोऽत्युत्कृष्टशुभकर्मकर्त्ता पुण्यात्मा च स्यात् तदा तस्य तुलना देवैः क्रियते । भगवतः (शक्तिविशेषस्य) यदा सान्निध्यं प्राप्यते, तदा तूच्यते यद् तस्य 'परमा गतिः' जाता; अर्थात् तस्य सर्वाणि मनोरथानि परिपूर्णानि जन्ममृत्युरित्यादिना च स मुक्तोऽभवत् । यथा श्रीमद्भागवते—

"सङ्कल्पास्तस्य सिद्ध्यन्ति स याति परमां गतिम् ।"[2]

सापेक्षसिद्धान्ते परमागतिः प्रकाशकिरणस्यास्ति—(१,८६,००० प्र० से०)। यदि केनापि (यद्यप्यसम्भवः) जनेनेयं परमागतिर्लभ्यते, तदा तदुपरि परिणामोऽपि पूर्वोक्तवदेव जायते । किमत्र सापेक्षवादस्य तुलना कर्तुं न शक्यते ?

**त्रिशङ्कोः रहस्यम्**

विश्वामित्रस्य तपस्याया विशिष्टतैजसबलेन युक्तः त्रिशङ्कुरन्तरिक्षे नक्षत्ररूपेण तीव्रगत्या परिभ्रमन्नास्ते । तद्यथा श्रीमद्भागवते—

तस्य सत्यव्रतः पुत्रस्त्रिशङ्कुरिति विश्रुतः ।
प्राप्तश्चाण्डालतां शापाद् गुरोः कौशिकतेजसा ॥
सशरीरो गतः स्वर्गमद्यापि दिवि दृश्यते ।
पातितोऽवाक् शिरा देवैस्तेनैव स्तम्भितो बलात् ॥[3]

अत्र त्रिशङ्कुरन्तरिक्षे परिभ्रमन् कथं न पतति, कथं च न जीर्यतीत्यस्य रहस्यस्योत्तरं विज्ञानस्याकर्षणसिद्धान्तेन सापेक्षसिद्धान्तेनैव (यस्य चर्चा प्राक्कृता) भवितुमर्हति ।

**भारतीयदर्शने सापेक्षवादः**

प्राचीनभारतीयदर्शने दिक्कालौ प्रायेण स्वतन्त्रौ । कालः क्रियामात्रोपाधिनिबन्धनः, दिक् तु मूर्तमात्रोपाधिनिबन्धना । कालो नियतोपाध्युन्नायकः, दिक् त्वनियतोपाध्युन्नायिका । तथापि तत्रापि यत्र तत्र सापेक्षत्वस्य च्छाया दृश्यते । दिक्कालौ परस्परसंबद्धाविति तु तयोः सदा सहैव विवेचनात् स्पष्टम् । रघुनाथशिरोमणिस्तु दिक्कालयोरीश्वरेऽन्तर्भावं करोतीति ।

शिवादित्योऽपि दिक्कालयोर्भेदं न मन्यते—"दिक्कालयोश्चैकत्वेनैव व्यवहारोपपत्तावनेकत्वकल्पनायां प्रमाणाभावात्"[4] इति ।

१. योगवाशिष्ठे—३।६०।२०-२६ ।
२. श्रीमद्भागवते—८।२४।६० । ३. श्रीमद्भागवते—९।७।५-६ ।
४. मितभाषिणी (सप्तपदार्थीत्यस्य टीका) द्रष्टव्या, पृ० २३ (कलकत्तासंस्कृतग्रन्थमाला) ।

चन्द्रकान्ततर्कालङ्कारोऽपि समुदीरयति यत्–"कणादस्य मते दिक्, कालः, आकाशश्चैकमेव द्रव्यम् । तेषां पृथगभिधानं तु कार्यभेदेन बाह्यावस्थाभेदेन च सम्भवति ।"[१] तथापि सापेक्षवादस्य साङ्गोपाङ्गविवेचनमाधुनिकवैज्ञानिकैरेव क्रियते, अतस्त एव कीर्तिमन्तः ।

सापेक्षवाद एव कालस्वरूपस्यान्तिमं निर्णयं करोतीति न मन्तव्यम । मानवः प्रकृतेरङ्गभूतः । अङ्गोऽङ्गिनं सर्वात्मना ज्ञास्यतीति कथनं तर्कशक्तेः परम् (स ब्रह्म एवेति त्वन्या कथा) । अङ्गिनः सम्यग् ज्ञानस्याभावे तस्य कस्यचिदङ्गस्यापि ज्ञानमपूर्णमेव तिष्ठति । सापेक्षवादोऽपि नास्त्यस्यापवादः । सम्भवतः कालः सापेक्षवादस्यापि कालः स्यात् । "विज्ञानस्येतिहासः प्रयोगप्रारम्भे उल्लासमयैः; किन्त्वन्ते समुपेक्षितैर्वादैराकीर्णो वर्तते"[२] इत्याह श्रीह्वाइटहैडमहाशयः ।

रोवमहोदयः सापेक्षसिद्धान्तप्रतिपादकस्य स्वकीयग्रन्थस्यान्ते लिखित—"यद्यपि दिशो विश्लेषणं कालसातेक्षत्वेन स्यादपि, तथापि दिक्कालयोर्यथार्थस्वरूपं किलाद्यापि रहस्यमेव । यद्यपि सर्वे परिणामाः काले सम्भवन्ति, तथापि कश्चिदपि तर्कयुक्तः कालस्वरूपप्रतिपादकः सिद्धान्तः स्वतः सदाऽवश्यमपरिणामित्वं व्यनक्ति"[३] ।

डाक्टरभगवानदासमहोदयोऽपि[४] मन्यते यत् सापेक्षवादोऽन्ततोगत्वा न कोऽपि कालस्य स्वरूपं नूतनरूपेणोपस्थापयितुं शक्नोति । इदमपि स्पष्टं यत् कालस्याध्ययनं दर्शनशास्त्रापेक्षया विज्ञानक्षेत्र एव सुष्ठुतरं सम्पत्स्यते । प्रातिभज्ञानेन स्यात् कश्चित् कदाचिदस्य प्रज्ञानम्, किन्तु प्रातिभज्ञानस्य विश्वजनीनताऽद्यावध्यनिश्चिता । सुचरितपूतानां महर्षिप्रवराणामपि विज्ञाने भेददर्शनात्—"सुगतो यदि धर्मज्ञः कपिलो नेति का प्रमा" इति प्राचीनोक्तिः प्रसिद्धैव दर्शनदृष्ट्या कालस्य कथाऽद्वैतवादः सर्वेषां समाप्यते । तत्रैव कालादपि परस्योपलब्धिः ।

परन्तु मदीयनम्रसमताद्वैतवादः सर्वेषां विकल्पानां समाधानं कुर्यादपि, तथापि प्रकृते रहस्योद्घाटने च नातिसाहाय्यं वितरति । समतलस्थितानामस्माकं समक्षमेकस्मिन् सर्वोत्तमे सर्वोच्चे शिखरे किमपि भव्यं मन्दिरमहर्निशं प्रकाशते । किन्तु तदीयमार्गस्थितोद्भूतरहस्यस्य यथोचितं ज्ञानं नास्ति । ऊर्ध्वमवलोकनेनाधः स्थितानामपि तस्य दोप्तिर्भासते, तथापि मध्येऽन्धकारपरिच्छिन्नमेवावतिष्ठते । मध्येऽवलोकनप्रणाली सर्वथा विस्मृताऽस्माभिः । विज्ञानं दिशि दिशि प्रकाशं विकिरति, मध्यदेशमपि द्योतयति, मार्गस्य रहस्यमपि च बोधयति । विनैतत् परिज्ञानं मन्दिरस्यापि महत्ता न सुष्ठु गम्या । अतो विज्ञानमेव शरणम् । ह्यो विज्ञानं कालस्य गतिं कलयन्नासीत्, अथ कालस्य कलां दिशि-दिशि पश्यति, श्वः कालस्यात्मानमप्यात्मसात् करिष्यति । नहि केवलं तेन विज्ञातेन सर्वमिदं विज्ञातं भवति, अपि तु सर्वेणानेन विज्ञातेन तदपि विज्ञातं भविष्यति ।

● ● ●

१. द्रष्टव्यम्—तर्कालङ्कारभाष्यपरीक्षा—पृ० ३३१-३४ ।
२. द्रष्टव्यः—श्रीह्वाइटहैडमहाशयरचितः—'दी प्रिंसिपुल आफ रिलेटिविटी' नामको ग्रन्थः—पृ० १ ।
३. द्रष्टव्यम्—श्रीअल्फ्रेड० रोवमहाशयरचितम्—'थ्योरी आफ टाइम एण्ड स्पेश' पृ०—३७१ ।
४. 'दी साइन्स आफ सेल्फ' पृ०-८१, पादटिप्पणी ।

# योगदर्शनानुसारेण ज्ञानस्वरूपम्

स्वामी परमानन्दः 'प्रज्ञाचक्षुः'

अनुसन्धाता—सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी ।

सांख्यमतवत् पातञ्जलयोगदर्शनेऽपि चित्तवृत्तिरेव ज्ञानम्, अस्याश्च पौरुषेयतया बोधः प्रमा, फलम्, उपलब्धिरित्यादिपदैरुच्यते ।

प्रकृतेस्त्रिगुणात्मिकायाः प्रथमः परिणामस्त्रिगुणं चित्तमिति व्यपदिश्यते । त्रिगुणत्वं चास्य त्रिगुणकार्यत्वात् प्रख्याप्रवृत्तिस्थितिशीलत्वाच्च प्रमितम् ।[1] अस्य चित्तस्य ज्ञानात्मकः परिणामोऽवस्थाभेदात् पञ्चविधः । अत एव पञ्च परिणामाः पञ्चवृत्तय इत्यप्युच्यन्ते । पञ्चवृत्तयश्च—'प्रमाणविपर्ययविकल्पनिद्रास्मृतयः'[2] इत्यनेन सूत्रेण भगवता पतञ्जलिनैवोक्ताः ।

(क) प्रमाणम्—प्रमीयतेऽनेनेति करणार्थाभिधानत्वात् प्रमाणशब्दः प्रमोत्पादिकां चित्तवृत्तिमभिधत्ते । योगेऽपि सांख्यवत् त्रीणि प्रमाणानि प्रत्यक्षानुमानागमाख्यान्युक्तानि ।

(i) प्रत्यक्षम्—ग्राह्यवस्तूपरागाच्चित्तस्य विषयाकारः परिणामः प्रत्यक्षमिति व्यपदिश्यते । विषयेन्द्रियसम्बन्धाद्धि चित्तनिष्ठं विषयावभासप्रतिबन्धकं तमोऽभिभूयते । ततश्च सत्त्वसमुद्रेकः, ततश्च विषयाकारा वृत्तिर्भवतीति शास्त्रस्थितिः । प्रत्यक्षे च ग्राह्यस्य वस्तुनो विशिष्टं स्वरूपम् इदमित्थमित्याकारकं स्फुटीभवति । अत एव 'विशेषावधारणप्रधाना वृत्तिः प्रत्यक्षम्'[3] इति योगभाष्यकृताऽप्युक्तम् ।

(ii) अनुमानम्—व्याप्तिज्ञानमूला या चित्तवृत्तिर्विषयाकारा सा अनुमानमिति कथ्यते । व्याप्तिश्च 'यत्र यत्र हेतुस्तत्र तत्र साध्यम्' इत्येका, 'यत्र यत्र साध्याभावस्तत्र तत्र हेत्वाभावः' इत्यपरा । आद्याऽन्वयव्याप्तिरिति द्वितीया च व्यतिरेकव्याप्तिरिति गीयते । उभयविधा चेयं व्याप्तिर्योगभाष्यकर्तुरभिमतेति[4] 'अनुमेयस्य तुल्यजातीयेष्वनुवृत्तो भिन्नजातीयेभ्यो व्यावृत्तः सम्बन्धः' इति तदुल्लेखेन ज्ञायते । अस्या व्याप्तेर्ज्ञानाद्धेतोः पक्षधर्मतया प्रतीतो प्रतिपत्तुश्चित्तस्य व्यापकविषया (=साध्यविषया) वृत्तिर्भवति । इयमेवानुमानम् । अस्या आकारश्च प्रायेण 'पक्षः साध्यवान्' इति । अत्र विषयेण सहेन्द्रियसन्निकर्षासम्भवाद् विषयस्य सामान्याकारमात्रं प्रस्फुटीभवति, न विशेषाकार इति हेतोरेव व्यासदेवादिभिः 'सामान्यावधारणप्रधाना वृत्तिरनुमानमित्युक्तम् ।'[5] नहि पर्वते धूमेन वह्न्यनुमानं विदधतः पुंसो भवति प्रतिपत्तिरित्थं यदयं वह्निराम्रकाष्ठसंकोर्णो गोमयोपरूढो वेति । तस्माद्युक्तमस्य सामान्यावधारणप्रधानत्वमिति ।

---

१. यो० प्र०, पृ० ३ । २. यो० सू० १।७ । ३. यो० भा०, पृ० २७–२८ ।
४. यो० भा०, पृ० ३०–३१ । ५. यो० भा०, पृ० ३०–३१ ।

इदं हि विवृतं पूर्ववच्छेषवत्सामान्यतो दृष्टभेदैस्त्रिधा व्याख्याकारैर्योगसूत्रस्य।[1] अत्रार्थे सांख्याचार्याणामपि सम्प्रतिपत्तिरेव। यथोक्तं सांख्यकारिकायाम्—'त्रिविधमनुमानमाख्यातम्'[2] इति। सांख्यव्याख्यातृमिश्रायमर्थो निपुणं निरूपितोऽस्माभिरपि सांख्यमतनिरूपणप्रसङ्गे विस्तरेणोपपादित एवेति नेह वितन्यते।

(iii शब्दः = आगमः—भ्रमप्रमादविप्रलिप्सादिविरहितस्याप्तस्य वाक्याज्जायमानार्थज्ञानेनार्थाकारा चित्तवृत्तिरागमः।[3] अयं च द्विविधः—लौकिकोऽलौकिकश्च। तत्रान्त्यः स्वतः प्रमाणम्, आद्यश्च तन्मूलकत्वेनेति विवेकः।[4]

एभ्योऽधिकमुपमानादि न प्रमाणम्, तस्य यथासम्भवमेष्वेव त्रिष्वन्तर्भावादिति विशेषेण निरूपितं 'सर्वप्रमाणसिद्धत्वादित्यादि'[5] कारिकाव्याख्यायां सांख्यतत्त्वकौमुदीकृद्भिः। योगसिद्धान्तचन्द्रिकायामप्ययमर्थोऽनूदितः।

आभिर्वृत्तिभिर्यः पौरुषेयो बोधः, अर्थाकारबुद्धिप्रतिबिम्बितत्वात् पुरुषस्य पुरुषे वाऽर्थाकारवृत्तिविशिष्टचित्तस्य। तत्र च पुरुषस्य परस्परं बिम्बप्रतिबिम्बभावात् स फलं प्रमाणस्य प्रमेति च व्यपदिश्यते। पौरुषेयबोधविषये प्रथमः पक्षो वैशारदीकर्तुर्वाचस्पतिमिश्रस्य, द्वितीयस्तु योगवार्तिककृतो विज्ञानभिक्षोः।

योगशास्त्रे सांख्यमतवत् प्रमाणभूता चित्तवृत्तिः पौरुषेयो बोधश्चेत्युभयमपि 'ज्ञानपदव्यपदेश्यम्' इति न विप्रतिपन्नम्।

(ख) विपर्ययः—मिथ्याज्ञानम्। यत्र यन्नास्ति तद्विषया चित्तवृत्तिर्विपर्ययः कथ्यते। अत एव ज्ञानप्रतिभासि यद्रूपं तद्रूपाप्रतिष्ठम् = अतद्रूपप्रतिष्ठमयमुच्यते।[6] यथा शुक्ताविदं रजतमिति ज्ञानम्। अत्रैव तद्रूपमात्राप्रतिष्ठः संशयोऽप्यन्तर्भवति। यत्कारकं यद्विशेष्यकं रूपं ज्ञानेन प्रतिभासते तस्मिन् रूपे यज्ज्ञानं न प्रतिष्ठते, किन्तूत्तरकालिकेन ज्ञानेन बाध्यते तज्ज्ञानमेककोटिकं वा द्विकोटिकं वा सर्वं तद्रूपाप्रतिष्ठत्वेनातद्रूपप्रतिष्ठमुच्यत इति तात्पर्यार्थः।[7]

(ग) विकल्पः—'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः'[8] इति सूत्रेण विकल्पवृत्तेर्लक्षणमुक्तं योगसूत्रकारेण। तथा चालीकविषयकं प्रचलितं 'राहोः शिरः', 'पुरुषस्य चैतन्यं स्वरूपम्' इत्यादिवाक्यजन्यं ज्ञानं विकल्प इति तात्पर्यम्। प्रचलितं व्यवहार इति हेतोर्नास्य विपर्ययात्मकत्वम्, अवस्तुप्रतिष्ठत्वाच्च नापि प्रमाणात्मकत्वमपि। अयमेव विकल्पो न्यायादिदर्शनेषु 'आहार्यभ्रमः' इति व्यपदिश्यते। बाधज्ञानसमकालिकेच्छाजन्यं च ज्ञानमाहार्यज्ञानमिति तेषां परिभाषा। इयं च वृत्तिः सहजैव। यथोक्तमन्यैरपि—"अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि" इति।

---

१. यो० सि० च०, पृ० ९।
२. सां० का० ५।
३. यो० भा० १।७।
४. त० कौ०—का० ५।
५. सां० का० ४।
६. यो० सू० १।८।
७. त० वै० १।८; यो० प्र०, पृ० ६।
८. यो० सू० १।९।

(घ) निद्रा—जाग्रत्स्वप्नकालिकवृत्तीनामभावस्य यत्कारणं बुद्धिसत्त्वावरकं तमस्तद्विषया वृत्तिरन्तःकरणस्य निद्रेति योगशास्त्रपरिभाषा।[१] यथोक्तं सूत्रकृता—'अभावप्रत्ययालम्बना वृत्तिर्निद्रा'[२] इति सात्त्विकराजसतामसभेदात् त्रिविधा निद्रावृत्तिः। तत्र सात्त्विक्यां निद्रायां सत्यां तदुत्थितस्य पुंसः 'सुखमहमस्वाप्सम्' इति; राजस्यां तस्यां जातायामुत्थितस्य 'दुःखमहमस्वाप्सम्' इति, तामस्यां पुनः तस्यां 'गाढं मूढोऽहमस्वाप्सम्' इति परामर्शः प्रजायते।[३] परामर्शानुपपत्त्यैव सुषुप्तावपि वृत्तिरन्तःकरणस्य मन्तव्यैव। बुद्धिसत्त्वाच्छादकतमोविषयकत्वादेव चेयं न योगात्मिका।[४]

(ङ) स्मृतिः—प्रमाणादिवृत्तिजन्यसंस्कारजन्या चित्तवृत्तिः स्मृतिः। स्मृतौ हि पूर्वानुभवाविषयीकृतं वस्तु एव भासते। अत इयमनुभूतविषयासम्प्रमोष इत्युच्यते—'अनुभूतविषयासम्प्रमोषः स्मृतिः' इति।[५] न चैतावता मन्तव्यं यत्स्मृतौ पूर्वानुभूतो विषयः सर्वथैव पूर्णात्मना प्रकाशते, उद्बोधकसमवधानं यदि अंशतः, तर्हि अंशतोऽपि स्मृतावनुभूतविषयप्रकाशनं भवत्येव। एवमेवानुभवक्रमेणापि स्मृतेर्न नियतत्वम्, व्युत्क्रमेण चेदुद्बोधस्तदा व्युत्क्रमेणापि स्मृतेः सर्वजनसिद्धत्वात्।

इयं स्मृतिः कदाचित् प्रमुष्टतत्ताकापि भवति—'स घटः' इत्यस्य स्थाने केवलं 'घटः' इत्याकारा। तथापि कारणसाम्यादियं स्मृतिरेव न ज्ञानान्तरमिति मिश्रादीनां[६] मतम्। विज्ञानाभिक्षवादयस्तु प्रमुष्टतत्ताकज्ञानानन्तरं स्मरामीत्याकारकस्फुटव्यवहाराभावादस्या न स्मृतित्वम्, अपि त्वनुभवत्वमेवेति मन्यन्ते[७]। परमेतन्मतं न सम्यक्, ऊनविषयिण्यां स्मृतौ सुतरामन्तर्भावादस्या वृत्तेः। किञ्च 'ग्रहणाकारपूर्वा बुद्धिः, ग्राह्याकारपूर्वा स्मृतिः'[८] इति योगभाष्योक्त्या अनधिगतविषयज्ञानस्यैवानुभवत्वव्यवस्थापनादधिगतविषयस्य च स्मृतिनिरूपणात्प्रमुष्टतत्ताकं 'घटः' इत्याकारकं ज्ञानमपि यद्यधिगतविषयं तदा स्मृतिरेवेति निर्विचिकित्सोऽर्थः। तस्मादत्र मिश्रादिमतमेव सम्यगिति अस्मभ्यं रोचते।

आसु पञ्चविधास्वपि चित्तवृत्तिषु प्रमाणात्मकवृत्तिजन्यः पौरुषेयो बोधः प्रमेति, इतरवृत्तिजन्यश्च सोऽप्रमेति भेदः। वृत्तिपौरुषेयबोधयोरुभयोरपि योगतन्त्रे ज्ञानपदव्यपदेश्यत्वस्यासकृदभिहितत्वाद् ज्ञानस्वरूपत्वं स्फुटीकृतमेवैतावता प्रबन्धेन।

**अथ ज्ञेयस्वरूपमधिकृत्योच्यते**

अत्रापि योगदर्शने सांख्यसम्मताः प्रकृत्यादिचतुर्विंशतिजडपदार्थाः पुरुषश्च चेतनः (चैतन्यात्मक एव परमार्थतः) स्वीकृत एव। एतेषां स्वरूपविषयेऽपि सांख्यमतान्न कोऽपि विशेषो योगमतस्येति न तत्सर्वं प्रकृत्य पुनरुच्यते किमपि। एतेषां प्रकृत्यादिपदार्थानां 'गुणपर्वम्' इति

---

१. त० वै० १।१०। २. यो० सू० १।१०। ३. भ० प्र०, पृ० ६।
४. त० वै०, पृ० ४०। ५. यो० सू० १।११। ६. त०वै० १।११; भास्वती-१।११।
७. यो० वा० १।११; भावागणेशवृत्तिः—१।११। ८. यो० भा० १।११।

नामधेयं योगतन्त्रे प्रसिद्धम् । अस्य गुणपर्वणश्चतुर्धा विभागोऽपि शास्त्रेऽत्र सम्मतः । तदुक्तं सूत्रकारेणैव—'विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि'[१] इति ।

(क) **विशेषपर्वम्**—अत्र पञ्च स्थूलभूतानि एकादशेन्द्रियाणि चेति षोडश विकारा अन्तर्भवन्ति ।[२]

(ख) **अविशेषपर्वम्**—अत्र पञ्चतन्मात्राणि शब्दस्पर्शरूपरसगन्धाख्यानि अहङ्कारश्चेति षट् समाविष्टाः ।[३]

(ग) **लिङ्गपर्वम्**—अत्र प्रकृतेः प्रथमः परिणामो महान् केवलमागच्छति । यद्यपि, अहङ्कारादीनामपि स्वस्वकारणे लयगमनाल्लिङ्गत्वमविरुद्धम्, तथापि सृष्ट्यारम्भानुमापकत्वादेव कारणात् केवलं महानेव 'जगदङ्कुर' इति लिङ्गपदव्यपदेशभाक् । अत एवार्थविशेषममुमभिप्रेत्य महत एव केवलं लिङ्गपर्वणि समावेशः कृतो योगाचार्यैः ।[४]

(घ) **अलिङ्गपर्वम्**—यथा महदादिकार्येण प्रधानस्यानुमानाद् महदादयो लिङ्गं प्रधानस्य, तथा प्रधानेनापि स्वकारणस्यानुमानासम्भवात् प्रधानं न लिङ्गमिति युक्तमस्यालिङ्गपर्वत्वाभिधानम्[५] । प्रधानस्याकारणकत्वं चानवस्थानुगृहीताजत्वादिप्रतिपादकश्रुतिगम्यमेव । यदुक्तं सांख्याचार्यैः—'मूलाभावादमूलं मूलम्'[६] इति ।

तदित्थं कार्यात् कारणानुमानमभिप्रयन् योगाचार्यो विशेषाविशेषलिङ्गालिङ्गपर्वसु व्यक्ताव्यक्ते न्यवेशयत् ।

अत्र प्रसङ्गे परिणामक्रमे सांख्यमताद्योगमतस्यैते विशेषा अवगन्तव्याः—

(i) सांख्यमते प्रकृतेर्महान्, महतोऽहङ्कारः, अहङ्काराच्च तन्मात्रादीनां समुद्भवो मन्यते । यथोक्तम्—

> प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद् गणश्च षोडशकः ।
> तस्मादपि षोडशकात् पञ्चभ्यः पञ्चभूतानि ॥[७] इति ।

योगशास्त्रे पुनर्मतद्वयम्—अहङ्कारः पञ्च तन्मात्राणि च बुद्धेरेव महत्तत्त्वापरपर्यायायाः परिणामभूतानीत्येकं वाचस्पतिमिश्रप्रभृतीनाम् ।[८] 'पञ्चतन्मात्राणि बुद्धिकारणकानि, अविशेषत्वात्; अस्मिता (=अहङ्कार)वत्' इति हि वैशारदीकर्तुर्न्यायप्रयोगः । योगवार्त्तिककृदादयः पुनः सांख्यमतमिव योगमतमपि मन्यन्ते । तदुक्तं योगवार्त्तिके—'अत्र षण्मध्ये तन्मात्राणां बुद्धिपरिणामत्वमहङ्कारद्वारैव'[९] इति ।

(ii) सांख्याचार्याः सर्वेषामिन्द्रियाणां विकासो भवत्यहङ्कारात् सात्त्विकादेवेति स्वीकुर्वन्ति—'सात्त्विक एकादशकः प्रवर्त्तते वैकृतादहङ्कारात्'[१०] इति योगाचार्याः पुनः सत्त्वप्रधानादहङ्काराज्ज्ञानेन्द्रियाणि, रजःप्रधानात् कर्मेन्द्रियाणि, सत्त्वरजोद्वयप्रधानात्तु मनः समुत्पद्यते

---

१. यो० सू० १।१९ । २. यो० भा० १।१९ । ३. यो० भा० १।१९ ।
४. यो० वा०, पृ० २०४; ना० बृ० वृ०, पृ० २८७ । ५. भास्वती, पृ० २०६ ।
६. सां० सू० १।३७ । ७. सां० का० २२ । ८. त० वै०, पृ० २०३ ।
९. यो० वा० १।१९ । १०. सां० का० २५ ।

इत्यभ्युपगच्छन्ति । यथोक्तं तत्त्ववैशारद्याम्—'अस्मितालक्षणस्याविशेषस्य सत्त्वप्रधानस्य बुद्धीन्द्रियाणि विशेषाः, रजःप्रधानस्य तु कर्मेन्द्रियाणि मनस्तूभयात्मकमुभयप्रधानस्येति मन्तव्यम्'[1] इति ।

उक्तेषु चतुर्षु पर्वस्वाद्यानि त्रीणि पर्वाण्यनित्यानि । एतेषां पर्वणां पुरुषार्थनिमित्तक-परिणामत्वात् सिद्धे तत्तत्पर्वप्रयोज्यतत्तत्पुरुषार्थे स्वस्वकारणे लयो जायते । लयशीलत्वाच्चैते-षामनित्यत्वमपि स्फुटमेव । अन्त्यं पर्व पुनः प्रधानात्मकं प्रसवधर्म्यमपि न तत्त्वात्प्रच्यवते यतस्ततो नित्यमेव ।

एभ्यः पर्वभ्यो व्यतिरिक्तं पर्व नास्त्येव । यद्यपि स्थावरजङ्गमादिबहुविधं पदार्थजातं विशेषसंज्ञकात्स्थूलभूतादुत्पद्यमानं प्रसिद्धं लोके, तथापि तेषां तत्त्वान्तरत्वाभावान्न पृथक् पर्वत्वम् । यथोक्तं योगवार्त्तिककृता—'विशेषेभ्यः परमुत्तरभावि तत्त्वान्तरं तत्त्वभेदो नास्ति । अतो विशेषाणां तत्त्वान्तरपरिणामो नास्तीत्यर्थः । अतो ब्रह्माण्डादिकं सर्वं विशेषपर्वणैव सङ्गृहीतमिति भावः'[2] इति । एतच्च 'षोडशकस्तु विकारः'[3] इति सांख्यकारिकाव्याख्यानावसरे तत्त्वकौमुद्यामप्यभिहितम् ।

(iii) सांख्याचार्या ईश्वरं न मन्यन्ते, तत्सिद्धान्त ईश्वराभ्युपगमस्योपयोगाभावात् ।

योगाचार्याः पुनः क्रियायोगनिरूपणप्रसङ्गे स्वीकुर्वन्त्येवाचिन्त्यशक्तिसम्पन्नं जीवानुग्रह-कारकं परमेश्वरं नित्यनिरतिशयज्ञानसम्पन्नम् । अतः संक्षिप्येश्वरस्वरूपं योगानुसारेण निरूप्यते ।

**ईश्वरः**

'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष[4] ईश्वरः' इति योगसूत्रोक्तमीश्वरस्वरूपम् । अत्र क्लेशा अविद्यास्मितारागद्वेषाभिनिवेशाख्याः पञ्च, विहिताविहिते कर्मणी, तयोर्भोगः, भोगजनिता च वासना साधारणे पुरुषे तत्सम्बद्धमनोनिष्ठा सम्बद्धेन भाति । परमेश्वरे पुनरेते न सन्ति दुर्गुणा इति स एभ्योऽसंसृष्ट उक्तः । अत एव स्मृतिरपि—

क्लेशकर्मविपाकाद्यैर्वासनाभिस्तथैव च ।
अपरामृष्टमेवाहु पुरुषं हीश्वरं श्रुतिः ॥[5] इति ।

मुक्ता पुरुषा अपि यद्यपि अपरामृष्टा एवैतैर्दोषैः, तथापि पूर्वं बद्धानां तेषां नित्यापरामर्शा-सम्भवादेव नेश्वराभिन्नत्वम् । अत एवेश्वरः 'नित्यमुक्तः' कथ्यते, तस्य कदापि बन्धासम्भवात् । इतरथा हि तस्येश्वरत्वमेव व्याहतं स्यात्[6] ।

अस्य सार्वज्ञ्यादिकं च निरतिशयं शास्त्रप्रमाणकम्[7], अनुमानसमर्थितञ्च । सर्वज्ञबीजस्य सातिशयत्वेन परिमाणवत् काष्ठाप्राप्तिरपरिहार्यैव । यत्र च तत्काष्ठाप्राप्तिः, स चेतरबाधसह-कारेण पुरुषविशेष एव कश्चनेश्वरमहेश्वरपदाभिधेयः श्रुतिस्मृत्यादिप्रसिद्ध इति न्यायप्रयोगो व्यासभाष्यतट्टीकोपटीकादिषु[8] स्फुटतयोक्तः । तस्यास्येश्वरस्य गुणा वायुपुराणे प्रोक्ताः—

---

१. त० वै० १।१९ । २. यो० वा० १।१९ । ३. सां० का० ३ ।
४. यो० सू० १।२४ ५. बृहद्योगियाज्ञवल्क्यस्मृतिः २।४३ । ६. व्या० भा० १।२४ ।
७. व्या० भा०, यो० वा० आदि–१।२४ । ८. यो० भा०; त० वै०; यो० वा० १।२५ ।

सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः ।
अचिन्त्यशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य ॥
ज्ञानं वैराग्यमैश्वर्यं तपः सत्यं धृतिः क्षमा ।
स्रष्टृत्वमात्मसम्बोधो ह्यधिष्ठातृत्वमेव च ॥
अव्ययानि दशैतानि नित्यं तिष्ठन्ति शङ्करे[1] ॥ इति ।

यतोऽत्रेश्वरे निरतिशयं सार्वज्ञ्यबीजमत एवायं सर्वेषां सिद्धानामपि गुरुरनादिगुरुरिति व्यवह्रियते । एतदेवाभिप्रेत्योक्तं सूत्रकृता पतञ्जलिना—'**स पूर्वेषामपि गुरुः कालेनानवच्छेदात्**'[2] इति ।

स चायमीश्वर एक एव कार्योपाधिवशाद्विभिन्नपदव्यपदेश्यः, पाकाद्युपाधिवशाद्देवदत्तादिवत् । अनेकत्वे हि कदाचिदेकत्रेच्छाविसंवादादैश्वर्यव्याघातापत्तिः[3] ।

अयं हि कर्मानुसारेण जीवात्मानं मोक्षाय भोगाय वानुगृह्णातीति नैयायिकमतादविशेषोऽत्र योगमते । कर्मसापेक्षत्वाच्च फलप्रदातुरस्य न वैषम्यनैर्घृण्ये । तथा च ब्रह्मसूत्रमपि समर्थयति प्रकृतार्थम्—

"**वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति**[4] ।" इति ।

भक्तिसमावर्जितोऽयमीश्वरो जीवात्मानमनुगृह्णातीत्यादिकमस्य परोपकारकत्वमुक्तम् ।

**ईश्वरस्य चित्तसत्त्वम्**

ईश्वरस्य पूर्वोक्तं सर्वज्ञत्वादिकं चित्तसंसर्गमन्तरा नोपपद्यत इति हेतोरीश्वरस्याप्येकं चित्तसत्त्वमभ्युपगन्तव्यमेव । तत्रायं विशेषः—पृथग्जनस्याविद्यानिमित्तकश्चित्तसत्त्वेन स्वस्वामिभावः, नित्यसर्वज्ञे पुनरीश्वरेऽविद्याऽभावादस्य जीवानुग्रहनिमित्तक एव । एतत्सर्वं संक्षिप्य संगृहीतं तत्त्ववैशारद्यामेव—'नेश्वरस्य पृथग्जनस्येवाविद्यानिबन्धनश्चित्तसत्त्वेन स्वस्वामिभावः, किन्तु तापत्रयपरीतान् प्रेत्यभावमहार्णवाज्जन्तूनुद्धरिष्यामि ज्ञानधर्मोपदेशेन—न च ज्ञानक्रियासामर्थ्यातिशयमन्तरेण तदुपदेशः, न चेयमपहतरजस्तमोमलविशुद्धसत्त्वोपादानं विना–इत्यालोच्य सत्त्वप्रकर्षमुपादत्ते भगवानपरामृष्टोऽप्यविद्यया'[5] इति । न चात्रेतरेतराश्रयः, इच्छायाश्चित्तधर्मत्वेन चित्तपरिग्रहे जीवोद्दिधीर्षा, सत्यां चैतस्यां चित्तसत्त्वपरिग्रह इति; सृष्टेर्बीजाङ्कुरवदनादित्वेन तदसम्भवात् । प्रतिसृष्टिसंहारकाले पुनरागते सृष्टिसमये जीवानुद्धरिष्यामीति चित्तपरिग्रहं करिष्यामीत्याकारेच्छासम्पन्न ईश्वरः स्वचित्तं तिरोदधाति तत्कारणे प्रधाने पुनश्च सृष्टिसमये पुनरुत्थानवासनावासितं चित्तं प्रधानादुद्भूय संयुज्यते परमेश्वरेण, ततश्च स जीवानुद्धर्तुं प्रवर्तत इति कथमितरेतराश्रयत्वम्[6] ? यद्वा स्वाभाविक्यां नित्यप्रवृत्तौ न कारणापेक्षेति सर्वमवदातमेव[7] ।

---

१. वा० पु० १२।३३;१०।६५–६६ । २. यो० सू० १।२६ । ३. यो० भा० १।२४ ।
४. ब्र० सू० २।१।३४ । ५. त० वै० १।२४ । ६. त० वै० १।२४ ।
७. यो० वा०, पृ० ७७–७९; ना० बृ० वृ०, पृ० २४२ ।

एवमीश्वरतत्त्वं योगतन्त्रप्रसिद्धं संक्षिप्य निरूपितमत्र प्रबन्धे। विस्तरेण चायमर्थो विवृतो योगभाष्यतट्टीकोपटीकादिषु।

**पुरुषः**

मोक्षभागित्वादेतदर्थं शास्त्रप्रवृत्तेश्च पुरुषः प्रमेयेषु मूर्धाभिषिक्त इति सर्वेषां दार्शनिकानामविप्रतिपन्नं वचः। एतत्स्वरूपविषये यद्यपि सांख्ययोगयोर्न कश्चन प्रदर्शनीयो विशेषः, तथापि योगशास्त्रोपयोगविधिविशेषाध्यवसायार्थं पुरुषस्वरूपमधिकृत्य किञ्चिन्नितान्तमावश्यकं प्रस्तूयते।

योगसूत्रे पतञ्जलिना **'द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः'**[१], **'चितेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम्'**[२] इत्यादिना द्रष्टुः पुरुषस्य स्वरूपमुपन्यस्तम्। **'बुद्धेः प्रतिसंवेदी पुरुषः'**[३] इत्यादिसूत्रेऽपि पुरुषविषयो विचारो निविष्ट एव। अत्र 'दृशिमात्रः' इत्यनेन ज्ञानस्वरूपत्वं पुरुषस्योक्तं सूत्रकारेण। एतच्च श्रुतिस्मृतिप्रसिद्धम्। अत्रार्थे योगवार्त्तिककृता सौरपुराणस्थं पद्यमपि संगृहीतम्—

ज्ञानं नैवात्मनो धर्मो न गुणो वा कथञ्चन।
ज्ञानस्वरूप एवात्मा नित्यः सर्वगतः शिवः[४]॥ इति।

युक्तं चैतत्, पुरुषधर्मत्वे ज्ञानस्याभ्युपगते पुरुषज्ञानयोर्धर्मधर्मिभावस्याभ्युपगमावश्यकतया गौरवात्, पुरुषस्वरूपत्वे तु ज्ञानस्य लाघवमपि भवतीति लाघवसहकृतश्रुतिस्मृत्यादिप्रमाणेभ्यो ज्ञानस्वरूप एव पुरुषः प्रसिद्धयति[५]।

स चायं पुरुषः स्वभावतोऽसङ्गोऽतः शुद्धोऽपि यावदविद्याकृतात् चित्तसंसर्गात् न विमुक्तस्तावद् बुद्धिप्रतिसंवेदीति कथ्यते।

अस्यायमाशयोऽवगन्तव्यः—बुद्धिः सत्त्वबहुला आदिसर्गादेव बद्धपुरुषेण संसृष्टाऽस्ति। सत्त्वबाहुल्यात्तस्यां स्वच्छत्वम्, स्वच्छत्वाच्च प्रतिबिम्बग्राहकत्वं तत्र प्रसिद्धयति। पुरुषश्चानाद्यविद्यानुगतो यावत्सन्तिष्ठते तावद् दर्पणगतप्रतिबिम्बदोषं बिम्बभूतमुखस्यैव मन्यमानः पुरुष इव बुद्धिगतं सुखदुःखादिदोषं तत्प्रतिबिम्बितः स्वस्यैवाभिमन्यते। सेयं प्रत्ययानुपश्यताऽविद्यासम्पृक्तस्य पुरुषस्य। इयमेव च बुद्धिप्रतिसंवेदित्वमपि योगसम्मतं पुंसः। एतत्सर्वं पुरुषेऽनाद्यविद्योपाधिनिबन्धनमिति स्पष्टं समकेति सूत्रकारेण **'शुद्धोऽपि प्रत्ययानुपश्यः'**[६] वृत्तिसारूप्यमितरत्र'[७] **'बुद्धेः प्रतिसंवेदी पुरुषः'**[८] इत्यादिना सन्दर्भेण।

स चायं पुरुषो यावद् दृश्येन बुद्धितत्त्वेन सह संयुक्तः, तावद् बुद्धिवृत्तिमनुपतन् बुद्धिधर्मान् सुखदुःखादीन् अनुभवन् क्लेशोपहतः सन्ततमुद्विजते। यदपि स्रक्चन्दनादिसम्पर्कजनितं सुखं तदपि विरलमस्मिन् जीवानाम्। विचार्यमाणं तु तदपि दुःखपक्षनिक्षिप्तमेवेति प्रायेण समेषां दार्शनिकानां मतम्। अमुमर्थमाह भगवान् पतञ्जलिरपि—**'परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः'**[९] इति।

---

१. यो० सू० २।२०। २. यो० सू० ४।२२। ३. यो० सू० ४।२२।
४. सौरपुराणम्—११।२५। ५. यो० भा०, पृ० २१४। ६. यो० सू० २।२०।
७. यो० सू० १।४। ८. यो० भा० २।२०। ९. यो० सू० २।१५।

दुःखस्य त्रिविधस्याध्यात्मिकाधिभौतिकाधिदैविकभेदभिन्नस्याप्रियत्वं च निसर्गत एव सिद्धम् । अतो दुःखप्रतीकाराय पुंसां प्रयासोऽपि प्रायेण निसर्गसिद्ध एव ।

तत्रायं विवेकः—मूढा हि जनाः क्षणिकप्रतीकारमेवेच्छन्ति, विवेचकाः पुनरैकान्तिकात्यन्तिकम् । प्रतीकारश्च प्रतीकार्यज्ञानमपेक्षते, अभावज्ञानस्य प्रतियोगिज्ञानाधीनत्वात् । प्रतीकार्यं च दुःखमेव, तदप्यनागतमात्रम्, अतीतस्योपभुक्तत्वेन वर्त्तमानस्य च प्रारब्धफलभूतस्यावश्यभोक्तव्यत्वेनानागतमात्रस्यैव प्रतीकार्यत्वात् । अत एवोक्तं योगसूत्रकृता—'हेयं दुःखमनागतम्'[1] इति । प्रतीकारश्च तावन्न पारमार्थिको यावत्प्रतीकार्यनिदानं न निहन्यते । अतोऽनागतदुःखस्य हेयस्य हेतुर्जिज्ञास्यः । स च हेतुर्द्रष्टृदृश्ययोः संयोग एव नान्यः । अत एव भगवान् पतञ्जलिः–'द्रष्टृदृश्ययोः संयोगो हेयहेतुः'[2] इति । अयमेव संयोगः सांख्येऽपि हेयहेतुत्वेनाभिमतः । यथोक्तं कारिकायाम्—

तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ।
गुणकर्तृत्वेऽपि तथा कर्त्तेव भवत्युदासीनः[3] ॥ इति ।

अस्य च संयोगस्य हेतुरनाद्यविद्यैव विपर्ययज्ञानवासनापदाभिधेयेत्यत्रापि 'तस्य हेतुरविद्या'[4] इति योगसूत्रमेव मानम् । अतो यावदियमविद्या न निवर्त्तते तावत्संयोगनिवृत्त्यभावः, संयोगनिवृत्त्यभावे च तत्कार्यदुःखनिवृत्त्यसम्भव इति निवर्त्तनीयाऽविद्यैव सर्वथा । अविद्यानिवृत्तिश्च न विद्याव्यतिरिक्तेन केनापि साधनेनेति विद्याऽन्वेष्टव्या । विद्याऽविद्ये च बुद्धिधर्मभूते । यथोक्तम्—

अध्यवसायो बुद्धिर्धर्मो ज्ञानं विरागैश्वर्यम् ।
सात्त्विकमेतद्रूपं तामसमस्माद्विपर्यस्तम्[5] ॥ इति ।

इयं च विद्या सत्त्वपुरुषान्यताख्यातिरूपैव दुःखमूलहन्त्री, नेतरा । अन्यस्या विद्यात्वमपि योगदृष्ट्यौपचारिकमेव । विद्यारूपेण च चित्तस्थपरिणामस्तावन्न घटते, यावत् चित्तं निर्मलं न सम्पद्यते । चित्तनैर्मल्यापादनं चाष्टाङ्गयोगसाध्यमिति हेतोर्भगवता पतञ्जलिना दुःखपङ्कनिमग्नजगदुद्धाराय महता प्रयासेनात्र योगशास्त्रे साङ्गोपाङ्गमष्टाङ्गो योगो विस्तरेण निरूपितः । अत्रार्थे मानरूपेण—

विनिष्पन्नसमाधिस्तु मुक्तिं तत्रैव जन्मनि ।
प्राप्नोति योगी योगाग्निदग्धकर्मचयोऽचिरात्[6] ॥

इत्यादिशास्त्रमुन्नेयम् । अस्यैव हेतोरत्र संक्षिप्य योगस्वरूपं सपरिकरं निरूप्यते ।

**योगः**

योगशब्दो 'युज्समाधौ' इति समाध्यर्थकाद्धातोर्व्युत्पन्नस्तथैव व्याख्यापि कृता व्यासदेवेन प्रथमसूत्रभाष्ये 'योगः समाधिः'[7] इत्यभिदधता, तथापि योगः समाधिरित्युपचारमूलक

---

१. यो० सू० २।१६ । २. यो० सू० २।१७ । ३. सां० का० २० ।
४. यो० सू० २।२४ । ५. सां० का० २३ । ६. विष्णुपुराणम्—६।७।३५ ।
७. यो० भा० १।१ ।

एव प्रयोगः। वस्तुतस्तु चित्तवृत्तिनिरोध एव योगशब्दार्थः। यथोक्तं सूत्रकारेण—'योगश्चित्तवृत्तिनिरोधः'[1] इति। तत्र क्षिप्तम्, मूढम्, विक्षिप्तम्, एकाग्रम्, निरुद्धम् इति याः पञ्च चित्तभूमयस्तत्र[2] सर्वास्वपि यत्किञ्चिच्चित्तवृत्तिनिरोधावश्यम्भावाद् योगलक्षणातिव्याप्तिः क्षिप्ताद्यवस्थास्वपीति हेतोर्व्याख्यातृभिः परिष्कृतमुक्तं योगलक्षणं तथा यथा न लक्षणस्यातिव्याप्त्यादिदोषाशङ्कापि।

अत्र तत्त्ववैशारदीकृतः 'क्लेशकर्मविपाकाशयपरिपन्थिनमेव चित्तवृत्तिनिरोधं योगम्'[3] आचक्षते। विशेषेण समाविष्टे सति क्लेशा अपरिपन्थिनि क्षिप्राद्यवस्थायां जायमाने वृत्तिनिरोधे नातिव्याप्तिः। योगवार्तिककृतस्तु 'तदा द्रष्टुः स्वरूपेऽवस्थानम्'[4] इति सूत्रसाहित्येनैव 'योगश्चित्तवृत्तिनिरोधः' इति सूत्रस्य योगलक्षणत्वमिति मन्यमानाः 'द्रष्टृस्वरूपावस्थितिहेतुश्चित्तवृत्तिनिरोधो योगः'[5] इति लक्षयन्तो वारयन्ति क्षिप्राद्यवस्थागतचित्तवृत्तिनिरोधेऽतिव्याप्तिं योगलक्षणस्य। उभयोरपि पक्षयोर्न कोऽपि फलगतो विशेषः। द्वितीये तु पक्षे केवलं सम्प्रज्ञातस्यासम्प्रज्ञातद्वारा स्वरूपावस्थितिहेतुभूतत्वमुपपादनीयमिति विशेषोऽवगन्तव्यः। असम्प्रज्ञात इव सम्प्रज्ञातोऽपि योग एवेति तु 'सर्वशब्दाग्रहणात् सम्प्रज्ञातोऽपि योग[6] इत्याख्यायते' इत्यादियोगभाष्योक्त्या, अग्रे तन्निरूपणेन च सुविज्ञेय एवेति तत्राप्यवश्यमेवेष्टव्यो लक्षणसमन्वयः।

तथा च योगो द्विविधः—सम्प्रज्ञातः, असम्प्रज्ञातश्च।

(क) सम्प्रज्ञातयोगः

यदा हि समस्ता राजस्यस्तामस्यश्च वृत्तयश्चित्तादपगच्छन्ति, तदा चित्तं स्वच्छं भवति। सत्त्वप्रधानमेव च चित्तं ध्येयसाक्षात्कारे समर्थं भवति। अत एव सम्प्रज्ञातकाले विषयस्य ध्येयभूतस्य साक्षात्कारस्तदितरवृत्तिनिरोधपूर्वकश्चित्तस्यैकाग्रतायां सत्यामेव सम्पद्यते। अत्र चैकाग्रतायां क्लेशकर्मादिपरिपन्थिचित्तवृत्तिनिरोधसत्त्वात् योगलक्षणसामञ्जस्यमपि सूपपादमेव।

सम्प्रज्ञातकाले हि प्रथमतः स्थूलविषयकः साक्षात्कारः परस्ताच्चाभ्यासपरिपाकक्रमेण सूक्ष्मविषयकः, स तथैव भवति यथा धानुष्कस्य प्रथमतः स्थूलमेव लक्ष्यम्, परस्ताच्च सूक्ष्मम्[7]। अतः प्रथमं योगी सम्प्रज्ञातकाले पाञ्चभौतिकं स्थूलं तत्त्वं ध्येयत्वेनावलम्ब्य परस्तात्सूक्ष्ममवलम्बते। अत एवोक्तं पुराणे—

योगारम्भे मूर्त्तंहरिममूर्त्तंमयं चिन्तयेत्।
स्थूले विनिर्जितं चित्तं ततः सूक्ष्मे शनैर्नयेत्॥[8] इति।

अस्यां ह्यवस्थायां ध्येयं वस्तु सम्यक् प्रज्ञायते समाहितेन योगिनेति सम्प्रज्ञातोऽयं योग उच्यते। अत्र ध्यानध्येयध्यातृभेदविलयनं न भवति, इति चासम्प्रज्ञाताद्विशेषः। सम्प्रज्ञातकाले

---

१. यो० सू० १।२। २. यो० भा० १।१।
३. त० वै० १।२। ४. यो० सू० १।३। ५. यो० वा० १।२।
६. योगभाष्यम् १।२। ७. त० वै०, पृ० ५२। ८. अयं श्लोको योगवार्त्तिके पृ० ५७ उद्धृतः। अस्य पूर्वार्द्धं तु गरुडपुराणे लभ्यते। द्र० ग० पु० १।२२९।२५।

हि प्रथमं तत्त्वसाक्षात्कारवतो प्रज्ञोपजायते[४], परस्ताच्च सा प्रज्ञा विवेकख्यातिरूपेण परिणमते। पश्चाच्चेयं विवेकख्यातिरपि हेयत्वेन प्रमिता भवति। यथाह भगवान् योगभाष्यकारः—"चितिशक्तिरपरिणामिन्यप्रतिसंक्रमा शुद्धा चानन्ता च। सत्त्वगुणात्मिका चेयम्। अतो विपरीता विवेकख्यातिरिति। अतस्तस्यां विरक्तं चित्तं तामपि ख्यातिं निरुणद्धि"[१] इति। विवेकख्यातावपि जायमाना हेयत्वभावना परवैराग्यमेव। यथा च सम्प्रज्ञातपरिपाककाल एव विवेकख्यातावप्यलंप्रत्ययरूपपरवैराग्योदयेन सम्प्रज्ञातो भवत्यसम्प्रज्ञातस्य हेतुरिति[२] न सम्प्रज्ञातमनासादितस्यासम्प्रज्ञातसिद्धिः :

अयं सम्प्रज्ञातो ध्येयस्वरूपभेदाच्चतुर्धा भिद्यते—वितर्कानुगतः, विचारानुगतः, आनन्दानुगतः, अस्मितानुगतश्चेति[३]।

(i) **वितर्कानुगतः**—विराजं चतुर्भुजं ध्येयं ब्रह्मादिस्वरूम्। ध्येयतयाऽवलम्बमानोऽयं सम्प्रज्ञातस्तान्त्रिकैर्वितर्कानुगत इत्यभिधीयते[४]। अयं च परस्ताद्द्विधा—सवितर्को निर्वितर्कश्चेत्यादिविशेषो योगशास्त्रादेवावगन्तव्यः।

(ii) **विचारानुगतः**—सूक्ष्मालम्बनः सम्प्रज्ञातो विचारानुगत इत्युच्यते।[५] अस्यापि देशकालादिपरिच्छिन्नतदपरिच्छिन्नसूक्ष्मविषयभेदाद् द्वे स्वरूपे क्रमेण—सविचारो निर्विचारश्च।

(iii) **आनन्दानुगतः**—इन्द्रियालम्बनो योगः सम्प्रज्ञातः कथ्यत आनन्दनुगत इति। एतच्च वाचस्पतिमिश्रादीनां मतेन[६]। विज्ञानभिक्षवादयस्तु वितर्कविचारानुगतसमाधिप्रकर्षाज्जायमानेन हर्षातिरेकेण योगिनश्चित्ते यः सत्त्वसमुद्रेकः, स एवानन्दः, एतस्यामेवावस्थायाम् 'अहं सुखी' इत्याकारान्तःकरणवृत्तिरुदेति ध्यायिनः। तथा चैतत्सत्त्वसमुद्रेकविशिष्टचित्तविषयः तत्सत्त्वसमुद्रेकविषय एव वा योग आनन्दानुगत इत्याचक्षते।[७]

(iv) **अस्मितानुगतः**—अस्मिता नामाहङ्कारः। तथा च 'अस्मिताप्रभवाणीन्द्रियाणि, तेनैषामस्मिता सूक्ष्मं रूपम्, सा चात्मनाग्रहीत्रा सह बुद्धिरेकात्मिका संवित्'[८] इत्यादितत्त्ववैशारद्युक्तेरऽहङ्कारविशिष्टपुरुषालम्बनो योगः सम्प्रज्ञातोऽस्मितानुगत इति व्यपदिश्यते। चन्द्रिकाकारो नारायणतीर्थोऽप्यमुमेवार्थं समर्थयति—'तेषां कारणं बुद्धिः, सा ग्रहीत्रैकीभूताऽस्मितेत्युच्यते।'[९]

योगवार्त्तिककृतस्तु शुद्धात्मविषयकं सम्प्रज्ञानम् अस्मितानुगतं मन्यन्ते।[१०] एतेषामयमाशयः—जीवेश्वरभेदेनात्मतत्त्वं द्विविधम्। तत्र प्रथमतो जीवात्मसाक्षात्कारस्तदनु परमात्मसाक्षात्कारो भवति। शुद्धात्मसाक्षात्काराकारस्तु 'अस्मि' इति। एते हि 'एकात्मिका[११] संविदस्मिता' इति व्यासभाष्ये प्रयुक्तमेकपदं केवलार्थकं व्याचक्षते।

राजमार्त्तण्डवृत्तिकृत्तु[१२] महत्तत्त्वमेवास्मितापदवाच्यं मन्यमानस्तदालम्बनमेव योगमस्मितानुगतममन्यत।

---

१. यो० भा०, पृ० १४। २. यो० भा० १।२। ३. यो० सा० सं०, पृ० २१। ४. यो० सू० १।१७। ५. त० वै०; यो० वा० १।१७। ६. त० वै०; यो० वा० १।१७। ७. त० वै० १।१७। ८. यो० वा० १।१७। ९. त० वै०, पृ० ५३-५४। १०. यो० सि० च०, पृ० १९। ११. यो० वा०, पृ० ५३। १२. यो० भा० १।१७।

तदेवं चतुर्विधः सम्प्रज्ञातो निरूपितः शास्त्रे। सर्वत्र च स्थूलस्य सूक्ष्मस्य वा सत्त्वादालम्बनत्वेनैते चत्वारोऽपि प्रकाराः सालम्बनाः समाधय इत्युच्यन्ते।[1] अत एवैतच्चतुर्भेदभिन्नस्य सम्प्रज्ञातस्य सबीज इत्यपि नामधेयम्।

(ख) असम्प्रज्ञातयोगः

सम्प्रज्ञातकाले संसारहेतुत्वादिदोषदर्शनादेवेतरवृत्तिनिरोधो जातः, तस्माच्च सिद्धायां विवेकख्यातिनिष्ठायां विवेकख्यातेरप्यनात्मत्वसाक्षात्कारात् तत्रापि वैराग्यं भवति। इदमेव वैराग्यं परवैराग्यं कथ्यते यस्याभिधानम् 'वशीकार'[2] इति शास्त्रे प्रसिद्धम्। अनेन च परवैराग्येण सर्ववृत्तिनिरोध इति प्रक्रियाऽसम्प्रज्ञातस्य। सम्प्रज्ञातकालीना साक्षात्काररूपिणी या प्रज्ञात्मिका वृत्तिः, तस्या अपि परवैराग्येण निरोधे जाते सति असम्प्रज्ञात इति सरलोऽर्थः।[3]

वृत्तिनिरोधश्च चित्तस्य वृत्तिसंस्कारशेषावस्था,[4] अभावस्य (निरोधपदाभिधेयस्य प्रकृते) अधिकरणावस्थाविशेषरूपत्वात्, निरुध्यन्तेऽस्यामवस्थायामिति निरोधशब्दव्युत्पत्तेर्वा। सा चावस्था संस्कारमात्रैः परिणामधारा, निरोधकाले संस्कारतारतम्यमात्रस्यैव चित्तपरिणामस्य शास्त्रकृद्भिरुक्तत्वात्। न तु वृत्तिनिरोधो वृत्त्यभावमात्रम् एकाग्रताविशेषो वा, निरोधस्याभावमात्रत्वे संस्कारजनकत्वानुपपत्तेः, एकाग्रतारूपत्वे च समाधिस्वरूपादष्टमाद् योगाङ्गात् सम्प्रज्ञाताच्च व्यतिरेकानुपपत्तेरिति युक्तमेव वृत्तिनिरोधस्य वृत्तिसंस्कारशेषावस्थत्वम्।[5] अत एव 'विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः'[6] इत्यादिना सूत्रकृताऽप्येतदेवोक्तम्। निरोधावस्थं च चित्तं संस्कारमात्ररूपेण प्रशान्तवाहि भवति।

अत्र चासम्प्रज्ञातयोगे चित्तबीजस्य संस्कारस्य तत्त्वज्ञानपर्यन्तस्याशेषतो दाहान्निर्बीजपदाभिधेयोऽयं योगोऽसम्प्रज्ञात एव। न किञ्चिदत्र योगे ध्यानध्येयादिविवेचनादि ज्ञायत इति हेतोरसम्प्रज्ञातमपि कथयन्त्येनमेव योगं योगिनः। सर्वं चैतत्संक्षिप्य प्रतिपादितं योगभाष्यकारेण-- 'चितिशक्तिरपरिणामिन्यप्रतिसङ्क्रमा दर्शितविषया शुद्धा चानन्ता च, सत्त्वगुणात्मिका चेयम्, अतो विपरीता विवेकख्यातिरिति। अतस्तस्यां विरक्तं चित्तं तामपि ख्यातिं निरुणद्धि। तदवस्थं संस्कारोपगं भवति। स निर्बीजः समाधिः। न तत्र किञ्चित्सम्प्रज्ञायत इत्यसम्प्रज्ञातः'[7] इति। विवेकख्यातेरप्युपेक्षणीयत्वं स्मृत्यादौ सुप्रसिद्धमेव। अत एव मार्कण्डेयेऽप्युक्तम्—

युञ्जीत योगी निर्जित्य त्रीन् गुणान् परमात्मनि।
तन्मयश्चात्मना भूत्वा चिद्वृत्तिमपि संत्यजेत्[8]॥

अत्राप्युक्तम्—

उल्काहस्तो यथा कश्चिद् द्रव्यमालोक्य तास्त्यजेत्।
बोधेन ज्ञानमालोक्य तथा बोधं परित्यजेत्[9]॥ इति।

---

१. रा० मा० वृ० १।१७। २. यो० भा० १।१७। ३. यो० सू० १।१५।
४. यो० वा०, पृ० १४–१५। ५. त० वै० पृ० १२; यो० वा०, पृ० ७।
६. यो० वा०, पृ० ७। ७. यो० सू० १।१८। ८. यो० भा० १।२।
९. मार्कण्डेयपुराणम्—३।४५। १०. अयं श्लोको योगवार्त्तिके ८ पृष्ठे समुद्धृतः।

**असम्प्रज्ञातप्रभेदौ**—असम्प्रज्ञातो द्विविधः—भवप्रत्यय उपायप्रत्ययश्चेति ।

(i) **भवप्रत्ययः**—अत्र भवन्ति जायन्ते जन्तवोऽस्यामिति व्युत्पत्तेरविद्यैव भवशब्दार्थः । कस्यचन ध्येयस्य निरन्तरानुध्यानेन चित्तं संस्कारशेषतामापद्यते । परमियं संस्कारशेषावस्था चित्तस्य विवेकज्ञानपूर्विका यदि न भवति, तर्हि तत्राविद्याप्रभवः संस्कारोऽप्यवतिष्ठत एव । अतो यावदयमविद्यासंस्कारोऽनुद्बुद्ध एव तिष्ठति, तावत् विदेहाः प्रकृतिलयाश्च कैवल्यमिवानुभवन्ति । उद्बुद्धे पुनरविद्यासंस्कारे ते पुनराविर्भवन्ति यथायथं स्वस्वकर्मानुसारेण । अयमेवार्थो निवेदितः सूत्रकारेण **"भवप्रत्ययो विदेहप्रकृतिलयानाम्'**[1] इत्यत्र ।

अत्र विदेहाः—भूतेन्द्रियाणामन्यतममात्मत्वेन प्रतिपन्नास्तदुपासनया तद्वासनावासितान्तःकरणाः पिण्डपातानन्तरमिन्द्रियेषु भूतेषु वा लीनाः संस्कारमात्रावशेषमनसः षाट्कौशिकशरीररहिताः[2] । एते हि—**"दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः । भौतिकास्तु शतं पूर्णम्"**[3] इत्यादिवायुपुराणोक्तानुसारेण चिराय कैवल्यपदमिवानुभवन्तस्तिष्ठन्ति ।[4] प्रकृतिलयास्तु—अव्यक्तमहदहङ्कारपञ्चतन्मात्रेष्वन्यतममात्मत्वेन प्रतिपन्नास्तदुपासनया तद्वासनावासितान्तःकरणाः पिण्डपातानन्तरमव्यक्तादीनामन्यतमे लीनाः ।[5] एते हि—

**..................सहस्रन्त्वाभिमानिकाः ।**
**बौद्धा दशसहस्राणि तिष्ठन्ति विगतज्वराः ।**
**पूर्णं शतसहस्रन्तु तिष्ठन्त्यव्यक्तचिन्तकाः ।।**[6] इति ।

वायुपुराणप्रोक्तदिशा अजनितसत्त्वपुरुषान्यताख्यातौ चेतसि प्रकृतिलीने कैवल्यपदमिवानुभवन्ति तावद्यावन्न पुनरावर्त्ततेऽधिकारवशाच्चित्तम्[7] ।

अयमर्थोऽत्र विज्ञातव्यः—अविद्यादिक्लेशनिचयानदग्ध्वैव वृत्तिनिरोधं कुर्वन्तः पुरुषाः स्वरूपावस्थितौ नैव समर्थाः । अतो भवप्रत्ययावस्थायां कञ्चित्कालं चित्तेऽसमर्थेऽपि स्वाधिकारनिर्वाहे परस्तात्तदुदेत्येवेति नायं प्रकारोऽसम्प्रज्ञातस्य तत्त्वतो विवेचितो विदेहकैवल्यायालमिति ।

(ii) **उपायप्रत्ययः**—शास्त्रोक्तानामुपायानां विधिवदनुष्ठानेन जायमानो निरोध उपायप्रत्यय इत्यभिधीयते । एते च शास्त्रोक्ता उपायाः श्रद्धावीर्यस्मृतिसमाधिप्रज्ञाख्याः पञ्चैव । यथाह भगवान् पतञ्जलिः—**'श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम्**[8]**'** इति । तत्र श्रद्धा चेतसः सम्प्रसादः, वीर्यं धारणा-ध्येयनिर्बन्धश्चित्तस्यैकाग्रस्य, स्मृतिर्ध्यानम्, समाधिश्चाष्टमम‍ङ्गं योगस्य, एतेभ्यस्त्रिभ्यो जायमाना प्रज्ञा । सम्प्रज्ञातयोग एव तत्पूर्वकः सोऽयमसम्प्रज्ञातः । सम्प्रज्ञातस्य चासम्प्रज्ञातकारणत्वं परवैराग्यजननद्वारेणैवेत्युक्तप्रायम् ।

एतेषामुपायानामनुष्ठाने मृदुमध्यतीव्रत्वविशेषाद्विशेषोऽपि भवत्येव । तदेवं नवधाऽसम्प्रज्ञातसाधका द्रष्टव्याः—(१) मृदूपायमृदुसंवेगयुक्तः, (२) मृदूपायमध्यसंवेगयुक्तः, (३) मृदूपायतीव्रसंवेगयुक्तः, (४) मध्योपायमृदुसंवेगवान्, (५) मध्योपायमध्यसंवेगवान्, (६, मध्योपाय-

---

१. यो० सू० १।१९ ।
२. त० वै० पृ० ५७–५८ । ३. यो० वा० पृ० ६१ । ४. त० वै० पृ० ५८ ।
५. त० वै० पृ० ५९ । ६. त० वै० पृ० ६० ।
७. त० वै० पृ० ५९; यो० प्र०, पृ० १० । ८. यो० सू० १।२० ।

तीव्रसंवेगवान्, (७) तीव्रोपायमृदुसंवेगवान्, (८) तीव्रोपायमध्यसंवेगवान्, (९) तीव्रोपायतीव्रसंवेगवांश्चेति[1]।

अत्र संवेगो वैराग्यम्[2], क्रियाहेतुर्दृढतरः संस्कारः[3], उपायानुष्ठानशैघ्र्यं[4] वेति तत्त्वतो न महान् भेदः। उपायादीनां मृदुत्वादि च प्राग्भवीयसंस्कारवशादेवेति[5] विज्ञेयम्।

इत्थं निरूपितो योगः सम्प्रज्ञातासम्प्रज्ञातभेदभिन्नः। सम्प्रति कथमस्य योगस्य सिद्धिरिति विविच्यते—

**योगसाधनम्**

चित्तवृत्तिनिरोधो योग उक्तः। स चायं निरोधः साधकभेदाद्भिन्नभिन्नसाधनसाध्यः[6]। तत्रापि ये उत्तमाधिकारिणः पूर्वजन्मन्येव प्रारब्धयोगाभ्यासा यमादिप्रत्याहारान्तपञ्चविधयोगबहिरङ्गसाधनसम्पन्नाः 'युक्ताः' तेषां कृते अभ्यासवैराग्याभ्यां चित्तवृत्तिनिरोध उक्तो योगसूत्रकृता। एवंविधाः साधका उत्तमा जडभरतादिविशेषाः कतिपय एव परमहंसावताराः।

तत्रोत्साहादिपूर्वकं पौनःपुन्येन चिन्तनमेव तत्त्वस्याभ्यासः[7]। वैराग्यं पुनश्चतुर्धा—यतमान-व्यतिरेक-एकेन्द्रिय-वशीकाराख्याः शास्त्रोक्ताः। अत्राप्याद्यास्त्रयोऽपरवैराग्याभिधेयाः, अन्त्यश्च परवैराग्यनामधेयः।

मध्यमाधिकारिणः पुनर्वानप्रस्थादय इह जन्मनि योगसाधनरताः 'युञ्जानाः'। एतेषां योगसिद्ध्युपायः क्रियायोगः प्रोक्तः। क्रियायोगश्चाभ्यासवैराग्यार्थं क्रियमाणस्तपः[8] स्वाध्यायेश्वरप्रणिधानान्येव। तपश्चात्र युक्ताहाराद्येव, न तु धातुवैषम्याधायकश्चान्द्रायणादिः[9]। अत एवेदमुक्तं गीतायामपि —

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा[10] ॥ इति।

स्वाध्यायो वेदोपनिषदादीनां पौनःपुन्येन पाठश्चिन्तनं वा[11]। ईश्वरप्रणिधानं च फलाभिसन्धि विनैव विहितानां कर्मणां परमगुरावीश्वरे समर्पणम्[12]।

अस्य च क्रियायोगस्य फलद्वयम्—चित्तस्य समाध्युन्मुखीकरणम्, क्लेशानां तनूकरणं (शैथिल्यापादनम्) च[13]। एवं चायं क्रियायोगः पूर्वोक्तफलद्वयं सम्पादयन् युञ्जानस्य चित्तमभ्यासवैराग्याभ्यां समर्थं सम्पादयन् एव योगसाधनमिति स्फुटम्।

ये तु मन्दा अधिकारिणः 'योगारूढाः' नितरां विक्षिप्तचित्ताः, तेषां कृते यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाध्याख्यैरष्टभिरङ्गैः संसाध्योऽयं निरोधात्मको योगः। अत्र च प्रथमतः पञ्चबहिरङ्गसाधनत्वमन्त्यत्रितयं चैकत्र 'संयमः[14]' इति प्रथितं भजत्यस्य योग-

---

१. यो० सू० १।२२। २. त० वै०, पृ० १।२२। ३. रा० मा० वृ०, पृ० ९।
४. यो० वा० पृ० ६१। ५. त० वै०, पृ० ६१। ६. यो० सा० सं०, पृ० ३७।
७. यो० भा०, पृ० ४५-४६। ८. यो० सू० २।१।
९. यो० प्र०, पृ० २४। १०. गीता—६।१७। ११. यो० मा०, पृ० १३९।
१२. म० प्र०, पृ० २०। १३. यो० सू० २।२। १४. यो० सू० ३।४।

स्यान्तरङ्गत्वमिति[1] विवेकः। तत्रापि यमाद्यनुष्ठानकालेऽभ्यासादेरवश्यम्भावाद् अष्टाङ्गयोगेऽस्मिन्नान्तरीयकतया सन्निविष्टावेवाभ्यासवैराग्याभिधावुपायौ[2]। तपः स्वाध्यायादीनां क्रियायोगपदाभिधेयानां चान्तर्भावो नियमाख्ये द्वितीये योगाङ्गे[3]। मैत्र्यादिचित्तपरिकर्मणामपि सुकरोऽन्तर्भावो धारणाध्यानसमाधिषु[4]; इति राजमार्गोऽयमष्टाङ्गयोगः। अत एवास्यैव विस्तरेण निरूपणं विहितमितिहासपुराणस्मृत्यादिग्रन्थेषु। अष्टानामङ्गानां च निरूपणमस्मिन्निबन्धे गौरवभयादुपेक्षितमिति।

एतावता प्रबन्धेन संक्षिप्य योगस्वरूपादिकं निरूप्य योगप्रयोजनमधिकृत्य विविच्यते—

**'प्रतिपित्सितमर्थं प्रतिपादयन् प्रतिपादयिताऽवधेयवचनो भवति प्रेक्षावताम्'** इति न्यायेन योगाचार्यस्य पतञ्जलेरपि साध्यमवधेयवचनत्वं प्रतिपित्सितप्रतिपादनमुखेनैव। तत्र प्रतिपित्सितोऽर्थो दुःखविघातकोपायो विवेकबोध एव। स च येनावगम्यः प्राप्यो वा सोऽपि प्रतिपित्सितः। न च सम्प्रज्ञातासम्प्रज्ञातभेदभिन्नस्योक्तं साक्षात्परम्परया वापि प्रतिपित्सितत्वं निर्वहति, **'योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः'**[5] इति सूत्रेण योगाङ्गस्यैव ज्ञानहेतुत्वोक्तत्वात्। सम्प्रज्ञातयोगकाल एव च शास्त्रेषु ज्ञानोत्पत्तिः श्रुता, तत्र च समानकालीनयोरनयोः सव्येतरगोविषाणवत् कार्यकारणभावासम्भवाच्च। अस्तु वा **'क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतग्रहणग्राह्येषु तत्स्थतदञ्जनतासमापत्तिः'** इति सूत्रप्रामाण्याद्यथाकथञ्चित्। सम्प्रज्ञातस्य ज्ञानसाधनत्वम्, असम्प्रज्ञातयोगस्य तु स्वतो ज्ञानजन्यस्य ज्ञानजनकत्वासम्भव एव। स्वस्यैव जन्यत्वजनकत्वद्वयाश्रितत्वाभावात्। किञ्च, ज्ञानं साक्षान्मोक्षसाधनम् इति **'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ[6] सम्पत्स्ये'** इति छान्दोग्यश्रुत्या प्रमितितया ज्ञानोत्पादे सति पुनस्ततोऽसम्प्रज्ञातस्य मोक्षार्थमावश्यकत्वस्यानुचितत्वमपि स्फुटमेव।

तथा च योगनिरूपणसफलमेवेति पूर्वः पक्षः।

अत्र शास्त्रकृतामयं समाधिः—**'तस्य तावदेव चिरम्'** इत्यादिश्रुत्या **'नाभुक्तं क्षीयते कर्म'** इत्यादिस्मृत्या च ज्ञानस्य प्रारब्धनाशकत्वं नास्तीत्यवगम्यत एव। तथा च जीवन्मुक्तस्य सशरीरस्य दुःखाद्यभावो जीवन्मुक्तिकाले योगमन्तराऽनुपपन्न इति योगः सप्रयोजनः।[7] अपि च–

**विनिष्पन्नसमाधिस्तु मुक्तिं तत्रैव जन्मनि।**
**प्राप्नोति योगी योगाग्निदग्धकर्मचयोऽचिरात्॥**[8]

इत्यादिवाक्यप्रामाण्येन यथैव ज्ञानस्य कर्मणां सञ्चितक्रियमाणानां प्रक्षयं द्वारीकृत्य मोक्षहेतुत्वं जीवन्मुक्त्यादिश्रुतिस्मृतिबलेन सिद्धम्, तथैव योगस्यापि तत्त्वं मन्तव्यमेव। तत्र चायं विशेषः—ज्ञानस्य प्रारब्धनाशकत्वं श्रुतिस्मृतिबाधितम्, असम्प्रज्ञातयोगस्य पुनः प्रारब्धनाशकत्व-

---

१. यो० सू० ३।७। २. त० वै० पृ० २४७। ३. यो० सू० २।१।
४. यो० द० वा० रा० उ० टिप्पणी, पृ० १७२।
५. यो० सू० २।२८। ६. यो० सू० १।४१। ७. छा० उ० ६।१४।२।
८. यो० वा०, पृ० ८। ९. वि० पु० ६।७।३५।

मपीति झटिति मोक्षप्रदोऽयं योगः। अत्र च मानम् **'तत्रैव जन्मनि······दग्धकर्मचयोऽचिरात्'** इति पूर्वोक्तवाक्यमेतत्सदृशानि स्मृतिपुराणादिवाक्यान्तराण्यपि।[१]

किञ्च, वृत्तिनिरोधात्मकोऽयं योग एव दुःखत्रयनिवृत्त्यात्मके मोक्षे साक्षाद्धेतुः, पुरुषे दुःखस्य चित्तवृत्त्यौपाधिकत्वात्, उपाधिनिवृत्तेश्चौपाधिकनिवृत्तौ चरमकारणत्वेन न दुःखात्मकवृत्तिनिरोधात्मकस्य योगस्य ज्ञानेनान्यथासिद्धिः शक्या। ज्ञानादयस्तु वृत्तिनिरोधाख्यचरमकारणद्वारेणैव दुःखक्षयहेतुतां भजन्ते। वृत्तीनां निरोधस्तु परमार्थतोऽसम्प्रज्ञातकाल एव भवतीत्यसकृदावेदितमेव पूर्वम् इति सिद्धमसम्प्रज्ञातस्य साक्षात्कैवल्यहेतुत्वम्। कैवल्यस्वरूपं तु सांख्यमतविवेचनप्रस्तावे विवेचितमत्रापि योजनीयमेव। संक्षिप्य तु सूत्रमिदमेव ध्येयम्—**'पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यम्, स्वरूपप्रतिष्ठा वा चितिशक्तिः'** इति।

एवं निरूपितं साक्षात्कैवल्यहेतुत्वमत एव ज्ञानाद्यतिशायित्वं चासम्प्रज्ञातस्य योगस्य 'तदा द्रष्टुः स्वरूपेणावस्थानम्'[३] इति सूत्रेण स्वयमेव योगसूत्रकृदुदाजहारेति योगनिरूपणे नाचार्यस्य पतञ्जलेरप्रतिपित्सिताभिधायकत्वमिति।

**अथ योगमतसमालोचनम्**

प्रधानकारणवादादिः समानतन्त्रसिद्धो वादो योगशास्त्रसम्मतः सांख्यनिराकरणेनैव निराकृतः। योगस्य निःश्रेयससाधनत्वं पुनरवशिष्यते विवेचयितुमिति प्रकृते तस्यैव युक्तायुक्तत्वे विमृशामः।

तत्र 'योगो वेदविहितः' इत्यत्राविवाद एव। अत एव **"श्रोतव्यो मन्तव्यो निदिध्यासितव्यः"**[४] इति श्रुतिः सङ्गतार्था। **"त्रिरुन्नतं प्राप्य समं शरीरम्"**[५] इत्यादिना चासनादिपुरस्सरं योगविधानं श्वेताश्वतरोपनिषदि भृशं वर्णितमेव। अन्यत्रापि **"तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम्"**[६], **"विद्यामेतां योगविधिं च कृत्स्नम्"**[७] इत्यादि च। **"तत्कारणं सांख्ययोगाधिगम्यम्, ज्ञात्वा देवं मुच्यते सर्वपाशैः"**[८] इत्याद्या च श्रुतिः योगस्यात्मज्ञानसाधनत्वं साक्षादेव प्रतिपादयति। स्मृतिरपि—

> **विनिष्पन्नसमाधिस्तु मुक्तिं तत्रैव जन्मनि।**
> **प्राप्नोति योगी योगाग्निदग्धकर्मचयोऽचिरात्**[९]॥ इति।

**'योगप्रभावविधुताऽखिलकर्मबन्धाः'**[१०] इति भागवतेऽपि पठ्यते। तथा च योगो निःश्रेयससाधनमित्यवगम्यत इतीयं व्यवस्था योगानुयायिनाम्।

अत्रेदमालोचनीयम्—किं योगस्य साक्षान्निःश्रेयससाधनत्वं शास्त्रसिद्धं परम्परया वेति? तत्र परम्परयेति विषये तु नास्माकमपि विमतिः। यत्तु तदनुयायिभिः साक्षादित्युक्तम्, तन्न रोचयामहे, आत्मैकत्वविज्ञानं हि वेदेषु साक्षान्निःश्रेयससाधनत्वेन श्रूयते। **'तमेव विदित्वाऽतिमृत्युमेति, नान्यः पन्था विद्यतेऽयनाय'**[११] इति हि श्रुतिः। तच्चात्मविज्ञानं ऋते वेदान्त-

---

१. यो० वा०, पृ० ८। २. यो० सू० ४।३४। ३. यो सू० १।३।
४. बृ० उ० २।४।५। ५. श्वे० उ० २।८। ६. क० उ० २।६।११।
७. क० उ० २।६।१८। ८. श्वे० उ० ६।१३। ९. वि० पु० ६।७।३५।
१०. श्री० भा० १०।३३।३५। ११. श्वे० उ० ३।८।

वाक्येभ्यः, "नावेदविन्मनुते तं बृहन्तम्"[१] इत्यादिश्रुतेः। "तं त्वौपनिषदं पुरुषं पृच्छामि"[२] इति श्रुत्या प्रतिपादितमौपनिषदत्वमपि। एवं सत्येवोपपद्यते। अन्यथा आत्मनः किमन्यदौपनिषदत्वमुपपादनीयम्? एवं "तत्कारणं सांख्ययोगाधिगम्यम्" इत्यत्रापि न योगस्य साक्षान्निःश्रेयससाधनत्वमवगतम्, अत्र प्रत्यासत्तिन्यायेन वैदिकध्यानज्ञानयोरेव सांख्ययोगशब्दावगम्यत्वात्। उक्तं विष्णुपुराणवाक्यन्त्वर्थवाद एव। अन्यथा श्रुतिविरोधापत्तिः। एवं भागवतवाक्यमपि। अत एव सप्तमे नृसिंहप्रह्लादोपाख्याने प्रह्लादं प्रति नृसिंहेणोक्तम्—

कथा मदीया जुषमाणः प्रियास्त्व-
मावेश्य मामात्मनि सन्तमेकम्।
सर्वेषु भूतेष्वधियज्ञमीशं
यजस्व योगेन च कर्म हिन्वन्॥
भोगेन पुण्यं कुशलेन पापं
कलेवरं कालजवेन हित्वा।
कीर्तिं विशुद्धां सुरलोकगीतां
विताय मामेष्यसि मुक्तबन्धः[३]॥

इत्यादि सङ्गच्छते। नह्यत्र योगेन कर्मक्षयानन्तरमेवेश्वरासादनमभिहितमिति न योगः साक्षान्निःश्रेयससाधनम् इत्यवगच्छामः। कर्मक्षयसाधनत्वमप्यस्य न साक्षादपि तु ज्ञानोपकारकतयैव। अज्ञानमूलकं हि कर्म। तत्रारब्धस्य तु भोगादेव क्षयः, "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये"[४] इत्यादिप्रामाण्यात्। अन्येषां च कर्मणामविद्याप्रभवानामविद्योच्छेदमन्तरा समुच्छेदाऽसम्भवात्, कारणनाशे कार्यनाशासम्भवात्। अभिभवमात्रेण तु न कृतकृत्यता, तथा सति कदाचिन्निमित्तसन्निधाने पुनरप्युद्भवसम्भवेनानिर्मोक्षप्रसङ्गः। तस्माद् योगः तत्त्वज्ञानोपयोगितयैव शास्त्रे क्वचित् कर्मक्षयसाधनत्वेन क्वचिच्च निःश्रेयससाधनत्वेनोक्त इति न योगमात्रेण पुरुषस्य कृतकृत्यतेति शम्।



१. तै० ब्रा० ३।१२।९।७। २. बृ० उ० ३।९।२६।
३. श्री० भा० ७।१०।१२–१३। ४. छा० उ० ६।१४।२।

# पुराणलक्षणस्य श्रीमद्भागवते सङ्गतिनिरूपणम्

श्रीविन्ध्येश्वरीप्रसादमिश्रः 'विनयः' एम्० ए०
अनुसन्धाता—संस्कृतविभागे
काशीहिन्दूविश्वविद्यालयः, वाराणसी—५

श्रीमद्भागवते भगवत्तत्त्वप्रतिपादकस्य ज्ञानस्यैव 'भागवतम्' इति संज्ञा दृश्यते। सिसृक्षाविमूढः[1] प्रजापतिर्ब्रह्मा कल्पादौ दुश्चरेण तपसा भगवन्तं नारायणमाराध्य[2] तत्कृपया यज्ज्ञानमवाप्नोति, तदेव भागवतमिति संज्ञितं भवति। श्रीमद्भागवते तच्चतुर्षु श्लोकेष्वेवंरूपेणोपक्लृप्तं वर्त्तते—

अहमेवासमेवाग्रे नान्यद् यत् सदसत्परम्।
पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम्॥
ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि।
तद्विद्यादात्मनो मायां यथाभासो यथा तमः॥
यथा महान्ति भूतानि भूतेषूच्चावचेष्वनु।
प्रविष्टान्यप्रविष्टानि तथा तेषु न तेष्वहम्॥
एतावदेव जिज्ञास्यं तत्त्वजिज्ञासुनाऽऽत्मनः।
अन्वयव्यतिरेकाभ्यां यत् स्यात् सर्वत्र सर्वदा॥

(श्रीमद्भागवतम्—२।९।३२–३५)

इदं ज्ञानमुपाश्रित्य भगवत्साधर्म्यमवाप्य प्रजापतिः पूर्वकल्पवत् स्थूलसूक्ष्मात्मकं स्थावरजङ्गमात्मकं सृष्टिप्रलयात्मकं च विश्वमिदं ससर्ज।[3]

भगवत्प्रोक्तमिदं तत्त्वात्मकं भागवतं लब्ध्वा प्रजापतिरेवास्य पुराणविद्यास्वरूपं रचयति। अस्मिन्नेव काले लक्षणविन्यासोऽप्यत्र दृग्गोचरतामायाति, तद्यथा—

---

१. स आदिदेवो जगतां परो गुरुः स्वधिष्ण्यमास्थाय सिसृक्षयैक्षत।
तां नाध्यगच्छद् दृशमत्र सम्मतां प्रपञ्चनिर्माणविधिर्यथा भवेत्॥
(श्रीमद्भागवतम्—२।९।५)

२. दिव्यं सहस्राब्दममोघदर्शनो जितानिलात्मा विजितोभयेन्द्रियः।
अतप्यत स्माखिललोकतापनं तपस्तपीयांस्तपतां समाहितः॥
तस्मै स्वलोकं भगवान्सभाजितः सन्दर्शयामास परं न यत्परम्॥ (तत्रैव–२।९।८–९)

३. सर्वभूतमयो विश्वं ससर्जेदं स पूर्ववत्। (भा० २।९।३८)

प्रजापतिर्धर्मपतिरेकदा नियमान्यमान् ।
भद्रं प्रजानामन्विच्छन्नातिष्ठत् स्वार्थकाम्यया ॥
तं नारदः प्रियतमो रिक्थादानामनुव्रतः ।
शुश्रूषमाणः शीलेन प्रश्रयेण दमेन च ॥
मायां विविदिषन् विष्णोर्मायेशस्य महामुनिः ।
महाभागवतो राजन् पितरं पर्यतोषयत् ॥
देवर्षिः परिपप्रच्छ ... .... .... ... ... ।
तस्मा इदं भागवतं पुराणं दशलक्षणम् ।
प्रोक्तं भगवता प्राह प्रीतः पुत्राय भूतकृत् ॥ (तत्रैव–२।९।३९-४३)

पुनरग्रिमेऽध्याये[1] भागवतस्य सर्गादिदशलक्षणानां वर्णनमेवं समुपलभ्यते—

अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः ।
मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः ॥ (२।१०।१)

इदानीं श्रीमद्भागवतानुसारमेव भागवतस्य दशलक्षणानि व्याक्रियन्ते—

**१. सर्गः**

भूतमात्रेन्द्रियधियां जन्म सर्ग उदाहृतः ।
ब्रह्मणो गुणवैषम्याद् ... .... ... ... ॥ इति । (२।१०।३)

भगवत्प्रेरणया त्रिगुणात्मिकायां प्रकृतौ सत्त्वादित्रिगुणसंक्षोभादाकाशादिपञ्चमहाभूतानाम्, शब्दादिपञ्चतन्मात्राणामिन्द्रियाहङ्कारमहत्तत्त्वानां चोत्पत्तिरेव सर्गः । अर्थाद् भागवतस्य प्रथमलक्षणमस्ति, तत्कथमेकतत्वान्नानात्वमुद्भवतीति प्रश्नस्य समाधानम्, यतो वैविध्यस्य मूलानुसन्धानं कुर्वन्तो वयं 'नेति नेति' पद्धत्या तत्कारणभूतं ब्रह्मस्वरूपं विज्ञाय वीतशोका भवेम इति ।

**२. विसर्गः**

पुरुषस्य (वासनाविशिष्टस्य) सृष्टिरेव विसर्गः, 'विसर्गः पौरुषः स्मृतः'[2] इति लक्षणात् । अत्र पुरुषरूपेण हिरण्यगर्भ एव गृहीतः । तेन जीवानां वासनापरिणतिमवधार्य, नानात्वरूपेण सृष्टिचक्रस्य यत्प्रवर्त्तनं क्रियते तदेव विसर्ग इति संज्ञया संज्ञितो भवति ।

प्रथमलक्षणं मूलतत्त्वस्यामूर्त्तकारणानुसन्धानस्य, द्वितीयमिदं च विसर्गलक्षणं मूर्त्तकारणानुसन्धानस्य प्रक्रियां बोधयति । चराचरं सम्पूर्णमपि मूर्तिमज्जगत्, भगवत्स्वरूपमेवेति लक्षणस्यास्य पार्यन्तिकं तात्पर्यम् ।

**३. स्थानम्**

"स्थितिर्वैकुण्ठविजयः" प्रतिक्षणं विनाशमुपगच्छन्तीं संसृतिमिमां यो धारयति यश्च मर्यादायामुपबध्नाति, तत्सर्वकारणकारणस्याकुण्ठस्वरूपस्य परमेश्वरस्य माहात्म्यनिरूपणमेव स्थितिः ।

---

१. श्रीमद्भागवस्य द्वितीयस्कन्धस्य—१० तमेऽध्याये । २. तदेव—२।१०।३

तात्पर्यमस्ति यदसत्यभूते नानात्वप्रपञ्चमूले जगति सत्यभूता एकैव भगवत्सत्ता वर्तते । ययैवेदं सर्वमसत्यमपि सत्यरूपेणोपकल्पितं स्वशक्त्या धृतञ्च । अत एव नानाऽवस्थासु तदेकस्यैवानुव्याप्तिः स्थानमिति सिद्धयति ।

४. पोषणम्

"पोषणं तदनुग्रहः" इति जीवानामुपरि भगवत्कृपावर्षणमेव पोषणम् । भगवत्कृपैव जीवस्य मुमुक्षामुद्बोधयति, सैव च तं परमसुखेनोपबध्नाति । यतः सा तमखिलसच्चिदानन्दसुधासारेण पुष्णाति, अतो भगवत्कृपैव भागवते पोषणाभिधानेनोपलक्षिता भवति ।

लक्षणेनानेन भगवदनुग्रहप्रतिपादककथानामवश्यम्भाविता भागवते सिद्धयति, येन साधारणा हतोत्साहा अपि जना भगवदाभिमुख्यं प्राप्नुयुरिति ।

५. ऊतिः

प्रश्नोऽयमुदेति यदीदृशी भगवत्कृपा सर्वदैव जीवानामुपरि यदि वर्तत एव, तत्कथं ते संसारदावानले दग्धीभूताः क्लिश्यन्ते, कथं वा सहसैव निरामयं भगवद्धाम न प्रविशन्तीति ?

तदस्य समाधानमिदं लक्षणं कुरुते—"ऊतयः कर्मवासनाः" इति (२।१०।४) ।

जीवानां स्वकर्मवासना एव 'ऊतयः' । याभिर्भगवदंशभूतोऽपि स बलात् पृथक्कृतः । अत एव जीवगतवासनाविपाकस्य तन्निरोधस्य च निरूपणं भागवतस्य यल्लक्षणं करोति, तद् 'ऊतिः' इति शब्देन समुच्चार्यते ।

६. मन्वन्तरम्

"मन्वन्तराणि सद्धर्मः" इति सर्गस्य यत्कालविशेषे मनुः, तत्पुत्राः, इन्द्रः सप्तर्षयश्च भगवद्भक्तिप्रतिपादकान् धर्मविशेषानाचरन्ति, स्वकीयाचरणेन तत्कालवर्तिजनानां धर्मभावनां शास्त्रदिशा परिशोधयन्ति, तत्कालविशेषस्य धर्मविशेषस्य च वर्णनमेव मन्वन्तरम् ।

एतेनाधिकारिभेदमुपलक्ष्य तत्तन्मन्वन्तराणां भगवत्प्राप्तिसाधनप्रणाली निर्दिश्यते, येन जनाः स्वरुचिमधिकारक्षमतां चाभिलक्ष्य स्ववर्त्मग्रहणे सक्षमाः स्युः ।

७. ईशानुकथा

अवतारानुचरितं हरेश्चास्यानुवर्तिनाम् ।
सतामीशकथाः प्रोक्ता नानाऽऽख्यानोपबृंहिताः ।। (भा० २।१०।५)

सृष्टिप्रलयचक्रे सततं भ्राम्यमाणानां जीवानां कल्याणाय भगवतो नामरूपलीलाधामोपबृंहिता या अववतारलीलास्तत्पार्षदानामपि च यच्चरितानि भवन्ति, तानि सर्वाण्यपि समुदितधिया लक्षणेऽस्मिन्नन्तर्भवन्ति ।

भगवच्चरितनिषेवणात्तत्प्रीतिर्भवति, प्रीत्यैव जनार्दनस्तुष्यति, तस्य तोषणमेव जीवस्य परमपुरुषार्थसाधनमिति भागवतस्य सप्तमेऽस्मिन् लक्षणे भगवच्चरितप्राधान्यमेव विवक्षितमिति ।

८. निरोधः

"निरोधोऽस्यानुशयनमात्मनः सह शक्तिभिः।" (भा०–२।१०।६)

लक्षणस्यास्य प्रसङ्गतो विविधा अर्थाः सम्भवन्ति। प्रत्नानामाचार्याणां व्याख्यासरणिमाश्रित्य केचनात्र निर्दिश्यन्ते, तद्यथा—

(१) भगवदतिरिक्तं सर्वमपि स्थावरजङ्गमात्मकं जगत् प्रलयात्मकमेव। अतस्तस्य नैमित्तिकादिप्रलयसंस्थानां वर्णनम्, परमेश्वरस्य च सत्तारूपेणावशिष्टत्वमेव निरोधः।[1]

यद्वा—

(२) आत्मनो जाग्रत्स्वप्नसुषुप्त्यादिविरहितं तुरीये परमात्मनि शयनमेव निरोधः।[2]

अथवा—

(३) लोकत्रासहेतुकानामसुराणां दुष्टभूभुजां च भगवत्कर्तृकदमनमेव निरोधः।[3]

(४) भगवत्कथामाधुरीप्रवर्षणेन जीवगताज्ञानकटुकषायवासनाविपाकनिरसनमेव निरोधः।[4]

९. मुक्तिः

अज्ञानकल्पितकर्तृत्वभोक्तृत्वादीन् अनात्मभावान् परित्यज्यात्मनः स्वरूपावस्थानमेव मुक्तिलक्षणस्य विषयः—

"मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः।" (२।१०।६ उत्तरार्धम्)

१०. आश्रयः

भागवतस्येदं दशमं लक्षणं महत्त्वपूर्णं लक्षणमस्ति। अस्य शुद्ध्यर्थं स्पष्टीकरणार्थमेव नवानां लक्षणानां प्रवृत्तिर्भवति—

दशमस्य विशुद्ध्यर्थं नवानामिह लक्षणम्॥ (२।१०।२½)

जडजङ्गमात्मकस्य विश्वस्यौत्पत्तिकमुपसंहारात्मकं चोभयविधस्वरूपं यस्मिन् प्रतीयते स एवाश्रयः परं ब्रह्म परमात्मेति च शब्द्यते। अतस्तस्य प्रामुख्येण वर्णनं यस्मिन् लक्षणे भवति, तदन्वर्थतया 'आश्रयः' इति निगद्यते विपश्चिद्भिः, यथा—

आभासश्च निरोधश्च यतश्चाध्यवसीयते।
स आश्रयः परं ब्रह्म परमात्मेति शब्द्यते॥ (भा०–२।१०।७)

इत्येवमेतानि भागवतस्य दश लक्षणानि व्याख्यातानि। अन्यत्र श्रीमद्भागवत[5] एव पुराणानामपि दश लक्षणानि निगदितानि, यथा—

---

१. द्र० 'सुबोधिनी' (श्रीमद्वल्लभाचार्यमहाप्रभुकृता भागवतटीका) १० मस्कन्धे ९मः श्लोकः।

२. श्रीमद्भागवतम् २।१०।६। ३. सुबोधिनी १० स्कन्धे १०½ श्लो०।

४. "स्वकीये—स्वविषयकभावोत्पादनं यया लीलया क्रियते सा निरोधशब्दवाच्येत्यर्थः।" श्रीमद्वल्लभाचार्यभगवत्पादकृतायां सुबोधिन्यां दशमस्कन्धस्य 'नमामि हृदये शेषे' इत्यादिप्रथमश्लोकस्य व्याख्यायां श्रीगोस्वामिविट्ठलनाथदीक्षितमहाशयाः।
द्र० 'सुबोधिनी' चौखम्बासंस्कृतसीरीज—१९११, पृ० २।

५. द्वादशस्कन्धे, सप्तमेऽध्याये।

पुराणलक्षणं ब्रह्मन् ब्रह्मर्षिभिर्निरूपितम् ।
शृणुष्व बुद्धिमाश्रित्य वेदशास्त्रानुसारतः ॥
सर्गोऽस्याथ विसर्गश्च वृत्तीरक्षान्तराणि च ।
वंशो वंशानुचरितं संस्थाहेतुरपाश्रयः ॥

(श्रीमद्भा०—१२।७।८-९)

यद्यपि पुराणानां पञ्च लक्षणान्येव बहुसम्मतानि, यतो विष्णुपुराणे (३।६।२४), मार्कण्डेयपुराणे (१३४।१३), अग्निपुराणे (१।१४), भविष्यत्पुराणे (२।५), ब्रह्मवैवर्त[1]-वराह[2]-स्कन्द[3]-मत्स्य[4]-कूर्म[5]-ब्रह्माण्ड[6]-गरुड[7]-शिवादि[8]-पुराणेष्वपि पुराणलक्षणात्मकमयं श्लोकः किञ्चित् पाठान्तरेण प्रायः सर्वत्रैव समुपलभ्यते, तद्यथा—

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंश्यानुचरितं चेति पुराणं पञ्चलक्षणम् ॥

इति, तथापि महदल्पव्यवस्थया पौराणिकानां मतान्तरेण च पुराणेषु दशलक्षणपद्धतिरपि सङ्गच्छत इति श्रीमद्भागवतस्यैव मतम्[9] ।

ब्रह्मवैवर्त्तपुराणादिष्वपि महापुराणस्य दशलक्षणानि परिगृहीतानि । अन्यत्र श्रीमद्-भागवतमपि 'महापुराणम्', 'क्षुल्लकपुराणम्' इति पुराणस्य द्विधाभेदमुपकल्प्य लक्षणसमन्वयेन प्रश्नस्यास्य समाधानं करोति । अतः प्रतीयते यद् दश लक्षणानि केवलं महापुराणानामेव भवन्ति, नोपपुराणानाम्, तेषामल्पविस्तरत्वाद्वर्णनलाघवाच्चेति ।

पुराणानां दश लक्षणान्यपि श्रीमद्भागवत एव द्वादशस्कन्धे सम्यक्तया व्याख्या-तानि[10] । तेषामप्यनुवादोऽस्माभिरत्र विधीयते, येन भागवतस्य दशलक्षणेभ्यस्तेषां भेदं वैशिष्ट्यं च प्रतिपादने सुकरं भविष्यति, तत्क्रमश एतेषामियं व्याख्या—

१. सर्गः

त्रिगुणात्मिकायां मूलप्रकृतौ गुणानां संक्षोभात् ततो महत्तत्त्वस्योद्भवः, पश्चात् त्रिविधा-हङ्कारेण पञ्चतन्मात्रपञ्चमहाभूतानां समुत्पत्तिरेव सर्गः[11] ।

---

१. १३३।६ । २. २।४ । ३. प्रभासखण्डे २।८४ । ४. ५३।५४ ।
५. पूर्वार्धे १।१२ । ६. प्रक्रियापादे १।३८ । ७. आचारकाण्डे—२।२८ ।
८. वायवीयसंहितायाम् १।४१ ।
९. दशभिर्लक्षणैर्युक्तं पुराणं तद्विदो विदुः ।
केचित् पञ्चविधं ब्रह्मन् महदल्पव्यवस्थया ॥ (२।७।१०)
१०. भा०—१२।११।१९ ।
११. अव्याकृतगुणक्षोभाद् महतस्त्रिवृतोऽहमः ।
भूतमात्रेन्द्रियार्थानां सम्भवः सर्ग उच्यते ॥ (श्रीमद्भा० १२।७।११)

२. विसर्गः

परमेश्वरस्यानुग्रहेण प्रजापतिः सृष्टिसामर्थ्यमवाप्य महदादिभिः पूर्ववासनानुसारं बीजाद् बीजमिव चराचरोपाधिविशिष्टस्य जीवस्य यत्सृष्टिः कुरुते, तदेव विसर्गं इति कथ्यते[1]।

३. वृत्तिः

जीवानां जीवनधारणव्यवस्थाविधानमेव वृत्तिः। तद्यथा—

वृत्तिर्भूतानि भूतानां चराणामचराणि च।
कृतास्वेन नृणां तत्र कामाच्चोदनयाऽपि वा॥ इति।
(श्रीमद्भागवतम्–१२।७।१३)

४. रक्षा

लक्षणस्यास्य सम्बन्धो भगवदवतारकथाभिः सह वर्तते। भगवान् युगे युगे तिर्यङ्मर्त्य-देवादिलीलारूपाणि विधाय, त्रयीधर्मविरोधिनां वधं वैदिकधर्मस्य च पुनरुद्धारं करोति; तदियमेव भगवत्कर्म रक्षेति व्यपदिश्यते।[2]

५. अन्तराणि

मनुर्देवाः, मनुपुत्राः, इन्द्रः, सप्तर्षयो भगवदंशावताराश्च इमे सर्वे मिलित्वा यत्कालमुप-भुञ्जन्ते तन्नियमनं च कुर्वन्ति, तदेवान्तरं मन्वन्तरमिति वाऽभिधीयते, यथा—

मन्वन्तरं मनुर्देवा मनुपुत्राः सुरेश्वरः।
ऋषयोंऽशावतारश्च हरेः षड्विधमुच्यते॥ इति। (१२।७।१५)

६. वंशः

ब्रह्मपरम्पराप्रसूतानां सूर्यचन्द्रादिवंश्यानां राज्ञां त्रैकालिकान्वयनिरूपणमेव वंशः।[3]

७. वंशानुचरितम्

तद्वंशधराणां वृत्तवर्णनमेव वंशानुचरितम्, यथा—

वंशानुचरितं तेषां वृत्तं वंशधराश्च ये। इति। (१२।७।१६)

८. संस्था

नैमित्तिकादिचतुर्धाप्रलयनिरूपणं संस्था, यथा—

नैमित्तिकः प्राकृतिको नित्य आत्यन्तिको लयः।
संस्थेति कविभिः प्रोक्ता चतुर्धाऽस्य स्वभावतः॥ इति।
(तत्रैव–१७ तमः श्लोकः)

---

१. पुरुषानुगृहीतानामेतेषां वासनामयः।
विसर्गोऽयं समाहारो बीजाद् बीजं चराचरम्॥ (१२।७।१२)

२. रक्षाच्युतावतारेहा विश्वस्यानुयुगे युगे।
तिर्यङ्मर्त्यर्षिदेवेषु हन्यन्ते यैस्त्रयीद्विषः॥ (१२।७।१४)

३. राज्ञां ब्रह्मप्रसूतानां वंशस्त्रैकालिकोऽन्वयः (१२।७।१६½)।

९. हेतुः

जीवनिरूपणं हेतुः । यथोक्तं तत्रैवाष्टादशे श्लोके—

हेतुर्जीवस्य सर्गादेरविद्याकर्मकारकः ।
तं चानुशयनं प्राहुरव्याकृतमुतापरे ॥ इति ।

१०. अपाश्रयः

जाग्रत्स्वप्नसुषुप्त्यादिवृतित्रये, साक्षिरूपमधिष्ठानात्मकं यत्तुरीयं तत्त्वम्, तदेवापाश्रयः । लक्षणेऽस्मिन् तस्यैव परिशुद्धिर्भवति ।[1]

इत्येवं पुराणानां दश लक्षणान्यपि कथितानि । लक्षणदशकमिदं कस्यचिदपि महापुराणस्य (क्षुल्लकव्यतिरिक्तस्य[2]) सम्भवति । श्रीमद्भागवतानुसारेण लक्षणसमवायस्यास्य अष्टादशेष्वपि पुराणेषु व्याप्तिर्निश्चप्रचमेव, तेषां महापुराणत्वाद्, अन्यद्वाष्टादशोपपुराणप्राप्तित्वाच्चेति, यथा—

एवं लक्षणलक्ष्याणि पुराणानि पुराविदः ।
मुनयोऽष्टादश प्राहुः क्षुल्लकानि महान्ति च ॥
ब्राह्मं पाद्मं वैष्णवं च शैवं लैङ्गं सगारुडम् ।
नारदीयं भागवतमाग्नेयं स्कान्दसंज्ञितम् ॥
भविष्यं ब्रह्मवैवर्त्तं मार्कण्डेयं सवामनम् ।
वाराहं मात्स्यकौर्मं च ब्रह्माण्डाख्यमिति त्रिषट् ॥ इति ।

(श्रीमद्भागवतम्-१२।७।२२–२४)

अत एव नूनं भागवतमपि (अष्टादशमहापुराणानामन्तर्भावितत्वाद्) एभिर्दशलक्षणैर्लक्षयितुं शक्यते । एतेषां लक्षणानां व्याप्तिरस्मिन्नपि वर्तते, यत इदमपि महापुराणपदवीमनुगतमेवेति ।

किन्तु पूर्वमेवाभिलक्षितमस्माभिर्यद् भागवतकारः पुराणदशलक्षणव्यतिरिक्तम् 'भागवतपुराणस्य' पृथग् दश लक्षणानि स्वीकरोति; यतः "अत्र सर्गो विसर्गश्च" इत्यस्मिन् श्लोके 'अत्र'शब्दः प्रक्रान्तस्य[3] भागवतस्यैवाध्याहारं करोति, न सामान्यस्य कस्यचिदपि पुराणस्येति प्रसङ्गमिमं सूक्ष्मधियाऽऽकलय्य सुतरां वेत्तुं शक्यते । पण्डितबलदेवोपाध्यायसदृशाः पुराणविषयकग्रन्थकारा एतयोर्लक्षणयोर्मध्ये भेदं नाङ्गीकुर्वन्ति । उभयमपि लक्षणसमुदायमिमे नाम पार्थक्याद्भिन्नं वस्तुतोऽभिन्नमेव मन्यन्ते ।[4] परस्परतुलनात्मकधियाऽध्ययनं विधाय एभिः

---

१. व्यतिरेकान्वयो यस्य जाग्रत्स्वप्नसुषुप्तिषु ।
मायामयेषु तद्ब्रह्म जीववृत्तिस्त्वपाश्रयः ॥ (श्रीमद्भा० १२।७।१९)

२. क्षुल्लकम्—उपपुराणमित्यर्थः ।

३. द्वितीयस्कन्धस्य नवमाध्यायवर्ति तस्मा इदं भागवतमित्यादि ४३ तमश्लोकगतविषयस्येति ।

४. द्रष्टव्यः—आचार्यबलदेवोपाध्यायस्य 'पुराणविमर्श' हिन्दीग्रन्थः । (पृ० १२४–१३७) चौखम्बाप्रकाशन, वाराणसी, संवत् २०२१ विक्रमी ।

पुराणदशलक्षणैः साकं भागवतदशलक्षणानामपि सङ्गतिः समुपकल्पिता । परन्तु कार्येऽस्मिन् यत्क्रमविपर्ययः कष्टकल्पना च प्रतिभाति, तत्सत्यपि क्वचिदर्थसाम्ये पुराणदशलक्षणेभ्यो भागवतस्य दशलक्षणानि स्फुटतया विशिनष्टि । तद्दिङ्मात्रमत्रोदाह्रियते, यथा—

उभयलक्षणानां तुलनात्मिका सारिणी[1]

| क्रमसंख्या | पुराणानां दशलक्षणानि (श्रीमद्भागवते १२ स्कन्धे सप्तमेऽध्याये) | भागवतस्य दश लक्षणानि तत्रैव द्वितीयस्कन्धे दशमे अध्याये | तुलना |
|---|---|---|---|
| १. | सर्गः (क्रमः १) | सर्गः (क्र० १) | विषयसाम्यमभिधान-क्रमसाम्यञ्च । |
| २. | विसर्गः (क्रमः २) | विसर्गः (क्र० २) | ,, ,, ,, |
| ३. | वृत्तिः (क्र० ३) | स्थानम् (क्र० ३) | अभिधानवैषम्यम्, विषय-साम्ये कष्टकल्पना च । |
| ४. | रक्षा (क्र० ४) | ईशानुकथा (क्र० ७)<br>पोषणम् (क्र० ४) | अभिधानक्रमवैषम्यं कष्टकल्पना । |
| ५. | अन्तराणि (क्र० ५) | मन्वन्तरम् (क्र० ६) | अभिदानभेदः क्रमभेदश्च । |
| ६. | वंशः (क्र० ६)<br>वंशानुचरितम् (क्र०७) | ईशानुकथा (क्र० ७) | अभिधानक्रमविषयभेदः, साम्ये क्लिष्टत्वम् । |
| ७. | संस्था (क्र० ८)<br>१–नैमित्तिकः प्रलयः<br>२–प्राकृतिकः प्रलयः<br>३–नित्यः प्रलयः | निरोधः (क्र० ८) | अभिधानपार्थक्यं किञ्चित् क्लिष्टत्वं च । |
| ८. | ४–आत्यन्तिकः प्रलयः | मुक्तिः (क्र० ११) | ,, ,, |
| ९. | हेतुः (क्र० ९) | ऊतिः (क्र० ५) | अभिधानक्रमवैभिन्न्यं विषये कष्टकल्पना । |
| १०. | अपाश्रयः (क्र० १०) | आश्रयः (क्र० १०) | साम्यम् । |

वस्तुतः पुराणमुनिर्महर्षिः कृष्णद्वैपायनः श्रीमद्भागवतस्य रचनायाम्, अन्यत्पुराण-वाङ्मयरचनातः किमप्यनिर्वचनीयमेव वैशिष्ट्यमावहति; यतोऽन्येषु पुराणेषु तस्य सङ्कलन-संग्रथनचातुरीमेव सरलातिसरलानुष्टुब्बहुलछन्दःप्रबन्धेन सर्वत्र वरीवर्ति ।

तेष्वखिलेष्वपि पुराणेषु प्रत्नसंवादानामविकलरूपेण संग्रथनपारतन्त्र्याद् वर्णाश्रमा-चारादिलोकधर्ममहिम्ना तत्सुलभकरणोद्देश्याच्चेति, न तत्र तस्य निर्भरहृदयतरङ्गिणी स्वच्छन्द-तया समुद्वेल्लितुं शक्यते; न वा ब्रह्मसूत्रसादृश्यगर्भा दार्शनिकी तस्य भाषाऽपि स्वीयगभीरत्वं श्लिष्टत्वं चोद्भासयितुमवसरमवाप्नोति; न तद्वन्नानाछन्दोविन्यासकोमला प्रभवति वर्णनोपक्रमे

१. पण्डितबलदेवोपाध्यायसरणीमनुसृत्यैव एषा सारिणी अत्र प्रदर्श्यते, केवलमस्यास्तुलनात्मकं प्रकरणमस्मत्कृतमिति द्रष्टव्यः "पुराणविमर्श" हिन्दीग्रन्थः, पृ० १३६ (चौखम्बासंस्करणम् सं० २०१२ विक्रमी) ।

तस्य वाणी। तत्र तु, मुनिवर्यो व्यासः प्रामुख्येण सम्पादकरूपेणावस्थितो दृश्यते, अत एव सप्तदशपुराणविरचनानन्तरमपि तस्य हृदि तादृशी निवृतिर्नोद्भूता, यादृशी श्रीमद्भागवत-रचनानन्तरमिति निर्व्यूढमेव स्फुटं शेमुषीजुषां विदुषां मनसीत्यलमतिपल्लवितेन।

श्रीमद्भागवतस्येदमेव वैशिष्ट्यमस्ति यदिदं सम्पादकव्यासस्य स्वीयं स्वान्तःसुखाय समुपकल्पितं काव्यमस्ति। यत्र विचारमूले लोकापेक्षया भगवत्तत्त्वस्यैव प्राधान्यं वर्त्तते, मानवधर्मस्यापेक्षया भागवतधर्मस्य महत्त्वमेव संराजते। सर्वरूपेण केवलं भगवानेव वर्णना-विषयीक्रियते; लोकस्तु तदनन्तरमेव तत्क्रीडनकवदायाति, न पूर्वकृतमहाभारतादिग्रन्थेष्विव प्राधान्यमावहतीति।

सार्वभौमसनातनधर्मस्य साधनक्षेत्रे प्रत्नकालादेव द्वे भावधारे युगपद्रूपेणायातः। प्रथमा तु मानवसौख्यापेक्षिका, तदुत्कर्षमूला पुरुषार्थप्रधाना 'मानवधर्मरूपा'; अपरा भगवन्मूला, तदनुग्रहविग्रहा, तदनुसंधित्सापेक्षिका 'भागवतधर्मरूपा' चेति।

एकस्यां मुख्यो मानवोऽस्ति, अन्यस्यां श्रीभगवान् विद्यते। प्रथमायां यद्यपि मनुष्यो धर्मानाचरति, पुरुषार्थान् वितनोति, निखिलब्रह्माण्डभाण्डघटयित्रीं प्रकृतिदेवीमपि वशमानयति, ऐश्वर्यं प्राप्नोति सिद्धिमपि च विन्दति, परं शान्तिं नाधिगच्छति। क्वापि कदापि वा तस्य हृदि रसानन्दनिष्यन्दिनी भक्तिर्नोद्भवति। किमधिकं सर्वथाऽपूर्ण इव प्रतिभाति मानवोऽस्यां प्रथमधर्मधारायाम्।

द्वितीयायां भागवतधर्मधारायां यदृच्छालाभसन्तुष्टो द्वन्द्वातीतो विमत्सरो जनो भगवदनुग्रहभाजनीभूत्वा तदाज्ञापालनरूपकर्मान् निष्कामधिया समाचरन्नन्यान् बाह्यधर्मान् परित्यज्य भुक्तिमुक्तिस्पृहामपि च तिरस्कृत्य भगवत्प्रीत्यर्थमेव जीवनं धारयति, क्षणे क्षणे परमानन्दसुधामाधुरीमास्वादयति, तस्यामेवासकृदवगाहते, किञ्च पूर्णकाम एव भवति सर्वथेति।[1]

श्रीमद्भागवतमस्ति एतस्या द्वितीयधर्मधारायाः प्रतिपादको ग्रन्थः, अत एवैतस्मिन् निसर्गत एव भगवत्प्रेमप्रवाहपूर्णा नैष्कर्म्योपलब्धिः पराशान्तिश्च सूत्ररूपेण राराजते, मणिरूपेण लक्षणलक्षितपौराणिकस्वरूपं काव्यकलागुम्फमपि चात्र महर्षिवर्येणोपनिबद्धम्; यतोऽन्येभ्यः पुराणेभ्यः सूक्ष्मरूपेणेदं विशिष्टतरमस्ति, अत एव भाषाशैलीलक्षणविन्यासोऽप्यत्र इतरेभ्यो पृथक् चमत्कारकोटिमुपगतो दृश्यते। श्रीमद्भावगतस्य भाषां विद्वांसः "समाधिभाषा व्यासस्य" इति निगदन्ति। साहित्यिका अत्र 'नारिकेलपाकम्', 'आरभटीवृत्तिम्' चोन्मेषयन्ति, पौराणिकाः पृथग्रूपेणास्य लक्षणं रचयन्ति। यथा—

यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः।
वृत्रासुरवधोपेतं तद्भागवतमिष्यते॥ (मत्स्यपुराणे)

---

१. द्रष्टव्यः—श्री-अक्षयकुमारवन्द्योपाध्यायमहाशयानाम् "महर्षिकृष्णद्वैपायन और भागवतधर्म" इति हिन्दीनिबन्धः। 'कल्याण' (हिन्दीमासिकपत्रम्), वर्ष १६ सं० ३। (गीताप्रेस, गोरखपुर) (पृ० ११७७–११८१)।

अपि च,

> अर्थोऽयं ब्रह्मसूत्राणां भारतार्थविनिर्णयः ।
> गायत्रीभाष्यरूपोऽसौ वेदार्थपरिबृंहितः ॥ (गरुडपुराणे)

श्रीमद्भागवतं स्वयमेवान्येभ्यः पुराणेभ्यः स्वकम् इतरलक्षणेभ्यश्च स्वीयलक्षणानि स्फुटरूपेण विशिनष्टीति पूर्वमेवालोचितमस्माभिः ।

एतावता द्वितीयस्कन्धे दशमेऽध्याये प्रोक्तानि भागवतस्य दशलक्षणानि एतस्मिन्नेव सङ्गच्छन्ते, नेतरेष्विति स्कन्धक्रमानुसारेणाध्ययनं कुर्वन्तोऽत्र वयं विशदं व्याकुर्मः ।

**१. प्रथमः स्कन्धः (अधिकारस्कन्धः)**

श्रीमद्भागवतस्य प्रथमं स्कन्धमाचार्याः 'अधिकारस्कन्धः' इति नाम्ना व्यपदिशन्ति। अतो दशलक्षणलक्षिते भागवते कीदृशोऽधिकारिणः स्युरित्यस्मिन्नेव स्कन्धे विभिन्नकथा-प्रसङ्गेषु सुस्पष्टं भवति ।

अस्य धर्मस्य स एवाधिकारी यस्य हृदि प्राणिनां कृते सहजरूपेणैव कृपा भवति, यः खलु स्वापराधिनमपि जनं स्वविशालहृदयानुरोधेन क्षमादानं कर्तुं शक्नोति, भगवत्स्मरणकारिणीं विपत्तिमपि च सानन्दं स्वीकरोति । तत्सर्वमप्येतस्मिन् निदर्शिनीभूतं विद्यते, तद्यथा—

(१) सप्तमेऽध्याये महाभागा द्रौपदी स्वपञ्चपुत्रहन्तारम्, धनञ्जयेन वशीकृतं वन्दिनम्, अश्वत्थामानं दृष्ट्वा करुणया निर्भिन्नहृदया तं नितरां क्षमादानं करोति, कथयति च यद् मादृशी हतपुत्रा एतस्य जननी गौतमी मा भवेदिति ।[1]

(२) अष्टमेऽध्याये अभिमन्युप्रिया उत्तरा, अश्वत्थाम्ना प्रयुक्तेन ब्रह्मास्त्रेण पीडिता सती आर्त्तत्राणं श्रीगोविन्दमुपयाति, कथयति च—

"देव ! कुरुवंशस्य बीजरूपेणावशिष्टो मदीयो डिम्भः कुशलं तिष्ठेत्, कामं मामयं ब्रह्मास्त्रः प्रदहतु ।[2] न मे मृत्योर्भयः, किन्तु लोकहिताय गर्भस्थशिशुरयं मा म्रियेत" इति ।

(३) अस्मिन्नेव स्कन्धे धनञ्जयादिकानां जननी पृथा, श्रीकृष्णदर्शनकारणभूतं दुःखं कामयते ।[3] यतो दुःखेनैव वास्तविकभगवत्प्रपत्तिः सम्भवति, यया श्रीकृष्णस्तुष्यति मुक्तेरप्युत्कृष्टं स्वकीयं दर्शनं च ददाति ।

---

१. "मुच्यतां मुच्यतामेष........." (भा० १।७।४३)
"मा रोदीरस्य जननी गौतमी पतिदेवता ।
यथाऽहं मृतवत्साऽऽर्ता रोदिम्यश्रुमुखी मुहुः ॥" (१।७।४३)

२. "कामं दहतु मां नाथ न मे गर्भो निपात्यताम् ॥" (१।८।१०)

३. "विपदः सन्तु नः शश्वत्तत्र तत्र जगद्गुरो ।
भवतो दर्शनं यत् स्यादपुनर्भवदर्शनम् ॥ (१।७।२५)

एतदतिरिक्तं महाभागवतस्य भीष्मस्य, शरशय्यात्मके महत्कष्टे भगवत्स्तुतिः, तत्कृपालुतायाश्च स्मरणम् (१।९।३२-४२), परीक्षितः शापप्राप्त्यनन्तरमपि निर्द्वन्द्वात्मिका भगवत्तत्त्वजिज्ञासा (१।१९) इत्यादि सर्वं भगवत्तत्त्वस्याधिकारिनिरूपणं करोति ।

**२. द्वितीयः स्कन्धः (साधनस्कन्धः)**

यथाऽधिकारिनिरूपणादृते दशलक्षणात्मकेऽस्मिन् भागवते जनानां प्रवृत्तिरेव संशयापन्ना स्यात्, तथैव तत्साधननिरूपणाद्विनाऽपि परमतत्त्वस्याधिगमो दुष्प्राप्यः सम्भवेदिति विनिश्चित्य श्रीमद्भागवतरसिकाः स्कन्धमिमम् 'साधनस्कन्ध' इत्यभिधानेनालङ्कुर्वन्ति ।

अस्मिन् स्कन्धे दश अध्यायाः सन्ति । येषु भगवत्प्राप्तेस्त्रीणि साधनानि व्याख्यातानि । यथा—

(१) भगवत्तत्त्वस्य ध्यानविधिः—प्रथमे द्वितीये चाध्याये ।

(२) हृदयनैर्मल्यम्—तृतीयचतुर्थेऽध्याये ।

(३) वैचारिकपराकाष्ठारूपमननम्—५–१० अध्यायेषु ।

एतत्स्कन्धगतोऽयं श्लोको भागवतधर्मस्याभिप्रेतसाधनमेवंरूपेणोपदिशति—

तस्माद् भारत सर्वात्मा भगवान् हरिरीश्वरः ।
श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छताऽभयम् ।। (२।१।५) इति ।

**३. तृतीयः स्कन्धः (सर्गस्कन्धः)**

श्रीमद्भागवतस्य पूर्वोक्तौ द्वावपि स्कन्धौ दशलक्षणात्मकभागवततत्त्वस्य पीठिकारूपेणोपन्यस्तौ । वस्तुतस्तत्त्वात्मिका भगवच्चर्चा तु तृतीयस्कन्धादेव समारभ्यते । अस्मिन्नेव स्कन्धे भागवतस्य प्रथमं लक्षणम् (सर्गः) विस्तरेण व्याख्यातम् । तदनुसारेणैवास्यापि सर्ग इत्यभिधानमूरीकृतं विपश्चिद्भिः, यथा स्कन्धस्यास्य पञ्चमेऽध्याये 'विदुरमैत्रेयसंवाद'द्वारेण सृष्टेः क्रमो निरूप्यते । तदेषो द्वादशाध्यायपर्यन्तम्, अमूर्तसर्गरूपेणोपवर्ण्यते । पश्चात् प्रकृतेस्त्रिगुणात्मकस्वरूपस्य स्पष्टीकरणार्थं काश्चिद् गाथाः समाम्नाताः । षड्विंशे पुनः कपिलदेवहूतिसंवादरूपेण महत्तत्त्वादिभावानामुत्पत्त्यादिकथनेन 'सर्ग' एव व्याकृतः । निष्कर्षत इदं कथयितुं शक्यते यत् (१) चतुर्दशाध्यायादारभ्य १९ अध्यायपर्यन्तं दितिकश्यपकथाव्याजेन तमःप्राधान्येन सृष्टिवर्णनमस्ति ।

दितिरूपायां तामसीप्रवृत्तौ यदा कश्यपरूपः सूत्रात्मा[1] अनिच्छयैव संयुज्यते, तदा लोभात्मको हिरण्याक्षः[2] "नास्तिकभावनाजन्यक्रोधाभिनिवेशात्मको हिरण्यकशिपुश्च", (रागद्वेषाहङ्कारवशवर्ती यः स्वमीश्वरं मत्वाऽपि स्वर्णशय्यायामपि शान्तिं न प्राप्नोति) समुत्पद्यते ।

---

१. 'कश्यपः' इत्यस्य व्यत्ययानुसारेण 'पश्यकः' इति स्वरूपं भवति, यत्खलु द्रष्टा रूपमात्मानं लक्षयति ।

२. "स्वर्णमेव यः खलु पश्यति तदर्थे च रसामपि रसातलं नयतीति" ।

इमास्तामसीप्रवृत्तयः सर्गस्यावष्टम्भकरूपेण भवन्ति, अतस्त्वेतन्निरोधार्थं क्रमशो वराहस्य नृसिंहावतारस्य चावश्यकता भवति ।

(क) भगवान् वराहः—दानरूपयज्ञप्रवृत्तेः सञ्चालकः । एतदवतारेण लोभात्मकहिरण्याक्षदैत्यात् पृथिव्युद्धरणं भवति, लोके सृष्टिचक्रविधायिनी यज्ञपरम्परा च प्रचलिता भवति ।[1]

(ख) भगवान् नृसिंहः—ब्रह्मसर्वात्मप्रवृत्तेः[2] द्योतको नास्तिकप्रवृत्तेरुन्मूलयिता च ।[3] अत एतस्यावतरणेन 'सर्गमूले' सर्वरूपेण हरिरिति भागवतोक्तभावनायाः सञ्चारं भवति । यथा—

सत्यं विधातुं निजभृत्यभाषितं व्याप्तिं च भूतेष्वखिलेषु चात्मनः ।
अदृश्यतात्यद्भुतरूपमुद्वहन् स्तम्भे सभायां न मृगं न मानुषम् ।। इति ।

(भा० ७।८।१८)

(२) एवं मनुकर्दमदेवहूतीत्यादिमनीषिणां कथाप्रसङ्गाः "रजः प्राधान्येन" सृष्टिवर्णनं कुर्वन्ति । यतः सर्गः समृद्धयर्थंसञ्जातानां देवहूतितो नवकन्यानां समुत्पत्तिः, तासां विवाहादीनां कथा इत्येतत्सर्वं सृष्टिविस्तारमेव परिलक्षयति ।

(३) अन्ते च २४ अध्यायादारभ्य ३३ पर्यन्तं भगवतः कपिलावतारवर्णनेन प्रकृतिपुरुषविवेकमूलकसत्त्वप्राधान्येन सृष्टेः संधारणं निगदितमिति प्रथमलक्षणमत्र सुष्ठुतयाऽनुस्यूतं दृश्यते ।

४. चतुर्थः स्कन्धः (विसर्गस्कन्धः)

पूर्वोक्तानुसारेणायमेव 'विसर्ग'शब्दस्य निःसृष्टार्थो यदेकस्मिन् ब्रह्माण्डभाण्डे प्रजापतिकृताया घटशरावादिवन्मूर्तिमयी पञ्चभूतात्मिकायाः सृष्टेर्वर्णनमिति ।

एतस्या आधारमस्ति, धर्मार्थकाममोक्षरूपपुरुषार्थचतुष्टयम् । अतः स्कन्धेऽस्मिन् क्रमश एतस्यैव व्याख्यानं पृथक् पृथगध्यायेषु समुपकल्पितं वर्तते, यथा—

सम्पूर्णेऽपि चतुर्थे स्कन्धे एकत्रिंश अध्यायाः सन्ति, येषु—

(१) प्रथमसप्ताध्यायेषु—दक्षयज्ञवर्णनव्याजेन धर्मपुरुषार्थस्य निरूपणम्, तत्र 'शिव'-तत्त्वस्यावमानना फलत्वेन यज्ञध्वंसरूपधर्मव्यपायः, पुनर्भगवत्प्रपत्तिद्वारेण तस्य धर्मस्य पूर्णतेति धर्म एव कथाभिः कथितः ।

---

१. द्रष्टव्याः श्रीमद्भागवतस्य तृतीयस्कन्धे, १३ तमेऽध्याये ३४–३९ श्लोकाः ।

२. "सर्वं खल्विदं ब्रह्म ।"—श्रुतिः ।

३. हिरण्यकशिपुर्नास्तिकभावनायाः प्रतीक इति तत्कथनेनैव व्यक्तं भवति, यथा—

यस्त्वया मन्दभाग्योक्तो मदन्यो जगदीश्वरः ।
क्वासौ यदि स सर्वत्र कस्मात् स्कन्धे न दृश्यते ।।
गोपायेत हरिस्त्वाद्य यस्ते शरणमीप्सितम् ।। इति ।

(श्रीमद्भागवतम् ७।८।१३–१४)

(२) अनन्तरमष्टमाध्यायाद् द्वादशाध्यायपर्यन्तं ध्रुवकथामाध्यमेन, भगवदाश्रयादर्थ- (पुरुषार्थस्य) निरूपणं तच्छुद्धिप्रतिपादनं च दृश्यते।

(३) पुनः ११ अध्यायेषु—पृथुचरितं वर्ण्यते। यत्र पृथिव्या दोहनमित्यादिगाथाभिः 'काम' पुरुषार्थस्य विस्तारं तद्यज्ञमूलकत्वं च द्योतितम्।

(४) अन्तिमेष्वष्टाध्यायेषु—'प्राचीनबर्हिनारदसंवादेन, प्रचेतसां तपश्चर्यावर्णनेन, रुद्र-गीतेन, भगवद्दर्शननारदादिमुनीश्वराणामुपदेशवर्णनेन च मोक्षरूपश्चरमः पुरुषार्थः सम्यङ् निर्णीतः। अतो विसर्गात्मकपुरुषार्थचतुष्टयव्याख्यानादयमन्वर्थनामा चतुर्थो विसर्गस्कन्धः।

**५. पञ्चमः स्कन्धः (स्थानस्कन्धः)**

लक्षणानुसारेण भगवतो विष्णोस्ता मर्यादास्ते नियमा ये खलु सर्गस्यावस्थाने सहायका भवन्ति 'स्थान'पदेनात्र संगृह्यन्ते। पञ्चमेऽस्मिन् स्कन्धे त एव इदंरूपेणोपलभ्यन्ते, यथा—

(१) भूगोलवर्णनम्—१६, १८, १९, २०, अध्यायेषु।

(२) खगोलवर्णनम्—२१, २२, २३, आदिष्वध्यायेषु।

(३) पातालवर्णनम्—२४–२५ आदिष्वध्यायेषु।

एतदतिरिक्तमपि सर्गधारणनियमाः प्रियव्रताग्नीध्रादिराज्ञां चरितेषु सूत्ररूपेण सङ्गुम्फिताः सन्ति।

स्वाम्यखण्डानन्दसरस्वतीपादा आदितश्चतुर्विंशत्यध्यायेषु[1] प्रकृतिजयम्, अन्तिमे चाध्याय-युगले क्रमश ईश्वरस्य जीवस्य च विजयं स्वीकुर्वन्ति। एवं लक्षणसङ्गतिरत्र नितरामुपपन्ना एव।

**६. षष्ठः स्कन्धः (पोषणस्कन्धः)**

स्कन्धस्यास्य प्रथमोऽयं प्रश्नो तत्कथं जीवो नरकाद्विमुच्यते ? यथा —

अधुनेह महाभाग यथैव नरकान्नरः।
नानोग्रयातनान्नेयात्तन्मे व्याख्यातुमर्हसि॥ (६।१।६)

इमं समुत्तरितुं श्रीशुको विविधप्रायश्चित्तानुष्ठानानि विनिर्दिशति, पश्चात्सारभूतमिमं सिद्धान्तमुदीरयति —

न तथा ह्यघवान् राजन् पूयेत तप आदिभिः।
यथा कृष्णार्पितप्राणस्तत्पुरुषनिषेवया॥ (६।१।१६) इति।

अनन्तरं सुस्पष्टतया वैयासकिरिदमपि स्वीयं मतं स्थापयति—

सकृन्मनःकृष्णपदारविन्दयोर्निवेशितं तद्गुणरागि यैरिह।
न ते यमं पाशभृतश्च तद्भटान् स्वप्नेऽपि पश्यन्ति हि चीर्णनिष्कृताः॥ इति।
(६।१।१९)

---

१. द्र०—'मानवजीवन और भागवतधर्म' (हिन्दीपुस्तकम्, पृ० ११७) सत्साहित्यप्रकाशन ट्रस्ट, विपुल २८।१६ बी० जी० खेर मार्ग, बम्बई, सन् १९७१।

करुणावरुणालयस्य भगवत एषा कृपैव तस्य "पोषणशक्तिः" इति वैष्णवानां स्वीकृतः कल्पोऽत्रापि संगच्छते । तन्निदर्शनरूपेण किञ्चिदुल्लिख्यते—

(१) पापीयान् कश्चिदजामिलनामा दासीपतिर्दुष्कर्मनिरतो द्विजः, स्वमरणसमये भीत्या स्वीयं नारायणनामानं कनिष्ठं प्रियं च पुत्रं 'नारायण' इत्याजुहाव । तेन साङ्केत्येनैव भगवन्नामोच्चारणेन तस्य सद्गतिः सञ्जाता । इदं भगवतः पोषणशक्तेरेव माहात्म्यम् ।[1]

(२) वृत्रासुरकथा, तत्कृता भगवत्स्तुतिश्चापि सम्यग्रूपेण श्रीहरेरनुग्रहमूलकतां समुद्घाटयति । दिङ्मात्रमत्रोदाह्रियते—

न नाकपृष्ठं न च पारमेष्ठ्यं न सार्वभौमं न रसाधिपत्यम् ।
न योगसिद्धीरपुनर्भवं वा समञ्जस त्वा विरहय्य काङ्क्षे ॥
अजातपक्षा इव मातरं खगाः स्तन्यं यथा वत्सतराः क्षुधार्ताः ।
प्रियं प्रियेव व्युषितं विषण्णा मनोऽरविन्दाक्ष दिदृक्षते त्वाम् ॥
(श्रीमद्भा० ६।११।२५–२६)

स्कन्धेऽस्मिन्नूनविंश अध्यायाः, भगवन्नामरूपार्चासम्बन्धेन त्रिधा विभज्यन्ते, यथाहि—

(१) प्रथमादारभ्य तृतीयपर्यन्तम्—'नाम' माहात्म्यम् ।

(२) चतुर्थादारभ्य द्वादशपर्यन्तम्—'रूप' माहात्म्यम् ।

(३) त्रयोदशादारभ्योनविंशपर्यन्तम्—अर्चापद्धतिर्माहात्म्यञ्चेति पोषणाभिधानस्य चतुर्थलक्षणस्य—षष्ठस्कन्धे सङ्गतिः समुपकल्पनीया ।

**७. सप्तमः स्कन्धः (ऊतिस्कन्धः)**

'ऊति'शब्देन जीवस्य वासना गृह्यते । एतस्या अपरमभिधानमविद्येति तत्त्वविद्भिः कथ्यते । सेयमविद्या पञ्चपर्वा—अविद्याऽस्मितारागद्वेषाभिनिवेशरूपा चेति । एतानि पञ्च पर्वाणि "पञ्चपर्वात्मिकयाविद्ययैव" निहन्यन्ते, अथ च विद्याऽपि पञ्चपर्वा—विद्यातपवैराग्याराधनातत्त्वज्ञानरूपेति ।

(१) विद्या
(२) तपः
(३) वैराग्यम्
(४) आराधना
(५) तत्त्वज्ञानम्

श्रीमद्भागवतस्यास्मिन् स्कन्धे १५ अध्यायाः सन्ति । ये खलु त्रेधा विभज्यन्ते । पञ्च पञ्चक्रमेण इमे पञ्चपर्वाऽविद्यायाः सात्त्विकराजसतामसविभागेन त्रिधा विभक्तपञ्चपर्वाणि खण्डयन्तीति स्वाम्यखण्डानन्दयतिवराणां मतम् ।[2]

---

१. द्र० —६/१, २, ३ अध्यायाः ।
२. द्र० 'मानवजीवन और भागवतधर्म', पृ० १३८ ।

अस्मन्मतेऽन्यत्प्रकारेणापि विभाजनमिदं स्वीकृत्य किमपि विवेचयितुं शक्यते यत् सप्तमस्कन्धस्य प्रथमादारभ्य पञ्चमपर्यन्ताः ५ अध्याया अविद्यायाः पञ्चपर्वाणां निदर्शनरूपेणोपन्यस्ताः, यथा—

(१) प्रथमेऽध्याये—नारदयुधिष्ठिरसंवादात्मके जयविजयादिभगवत्पार्षदानां कथाप्रसङ्गे एतयोर्हृदि अविद्याऽभिधं प्रथमं पर्वं समुदेति, येन तौ सनकादिशापाद् भगवद्धामवैकुण्ठात् परिभ्रष्टौ, हिरण्याक्षहिरण्यकशिपुनामानौ दैत्यौ सम्भवतः। जीवस्याप्येवं गतिः। अविद्योदयरूपशापाद्ध्येवायं भगवत्पार्थक्यमवाप्नोतीति कथाया निष्यन्दभूतोऽर्थः।

(२) द्वितीयेऽध्याये-हिरण्यकशिपुः, हिरण्याक्षवधपर्याकुलान् स्वपरिवारजनान् विविधाभिधर्मोपदेशकथाभिः परितोषयति, परं स्वयं तु न शान्तिमवाप्नोति, न धर्मकथानुसारमाचरणं करोति। तस्याहङ्कृतिस्तं लोकपीडकरूपेणोपकल्पयति। अनेनास्मितारूपं द्वितीयं पर्वं समाम्नातम्।

(३) तृतीये—तपसा वरप्राप्तिप्रसङ्गेन तृतीयस्य रागपर्वस्य व्याख्या भवति।

(४) चतुर्थे—हिरण्यकशिपोरत्याचारम्, अविद्याया द्वेषरूपं घटकं प्रमाणयति।

(५) अनन्तरं पञ्चमेऽध्याये, अभिनिवेशपर्ववशमुपगतः स (हिरण्यकशिपुः) स्वीयसिद्धान्तस्याननुकूलम् ऋजुकं स्वतनयं प्रह्लादमपि हन्तुमुद्यतो भवतीति पञ्चस्वध्यायेषु पञ्चपर्वाऽविद्या व्याख्यायते।

एवम्, अग्रिमेषु पञ्चसु (६ अध्यायादारभ्य दशमपर्यन्तेषु) पञ्चपर्वयाऽविद्यया एतन्निराक्रियते, तद्यथा—

(१) षष्ठेऽध्याये—प्रह्लादद्वारा असुरबालकेषु विद्योपदेशः।[1] एतेनाविद्याया निरसनं भवति।

(२) सप्तमे—मातुगर्भे स्थितस्य प्रह्लादस्य कृच्छ्रसाध्यावस्थायां देवर्षिनारदमुखादुपदेशश्रवणरूपं तपः, एतेन 'अस्मिता' परिहर्तुं शक्या।

(३) अष्टमे चाध्याये—श्रीनृसिंहाद् हिरण्यकशिपुवधवर्णनेन 'सर्वमपीह नश्वरमनित्यञ्चे-त्येवंरूपो वैराग्यः। अनेन रागो नश्यति।

(४) नवमेऽपि—प्रह्लादकृतायां भगवत्स्तुतौ भगवदाराधनानिरूपणेन द्वेषो निरस्यते।

(५) दशमेऽध्याये—प्रह्लादनृसिंहसंवादेन प्रह्लादद्वारा तत्त्वज्ञानोपलब्धिः साङ्केत्येन वर्णिता ययाऽभिनिवेशो निवर्त्यत इति।

---

१. गुणेषु गुणसाम्ये च गुणव्यतिकरे तथा।
एक एव परो ह्यात्मा भगवानीश्वरोऽव्ययः॥ (श्रीमद्भा० ७।६।२१)
ज्ञानं तदेतममलं दुरवापमाह नारायणो नरसखः किल नारदाय।
एकान्तिनां भगवतस्तदकिञ्चनानां पादारविन्दरजसाऽऽप्लुतदेहिनां स्यात्॥
(श्रीमद्भा० ७।६।२८)

अन्तिमे चाध्यायपञ्चके (११–१५) स्त्रीपुंधर्मवर्णनव्याजेन जीवस्य स्वाभाविकी वासनैव विधिनिषेधपद्धत्या निराकृतेति । स्कन्धोऽयमपि नितरामन्वर्थतां भजते ।

८. अष्टमः स्कन्धः (मन्वन्तरकथास्कन्धः)

अस्मिन् मन्वन्तरस्कन्धे आरम्भादेव प्रथमेऽध्याये स्वायम्भुवादिमन्वन्तरचतुष्टयवर्णनम्, पञ्चमेऽध्याये रैवतचाक्षुषमन्वन्तरवर्णनम्, त्रयोदशे भविष्यन्मन्वन्तरसप्तकवर्णनं चतुर्दशे च मन्वादीनां पृथक् पृथक् कर्मनिरूपणमित्यादिप्रकटपद्धत्या मन्वन्तराणि समुपवर्णितानि ।

अन्येष्वध्यायेष्वपि "मन्वन्तराणि सद्धर्मं" इति लक्षणोक्त्या सद्धर्मप्रतिपादकानां भगवतो यज्ञा[1]जित[2]मोहिनी[3]वामन[4]मत्स्यादि[5]मन्वन्तरावताराणां गाथाः, गजेन्द्रमोक्षादि[6]-भगवद्धर्मप्रतिपादकोपाख्यानानि, अन्यच्चापरधर्मतत्त्वानि व्याख्यातानि ।

९. नवमः स्कन्धः (ईशानुकथास्कन्धः)

नवमस्कन्धे चतुर्विंशत्यध्यायाः । येषु द्वादशाध्यायेषु सूर्यप्रधानतयाऽन्येषु च सोमप्रधानतया भगवदवतारकुलवर्णनमस्ति ।

उदयेनैव तिमिरशैत्यजडत्वनिरसनात् कष्टनिवृत्तिरूपसुखप्रदानाच्च सूर्यस्य गरिमा निषेधमुखः । अत एतदन्वयसम्भूतस्य श्रीरामस्य चरितमपि रावणादिलोककण्टकनिरसनरूपप्रजारक्षणप्रामुख्येणैवोपवर्णितमिति निदर्शिनीभूतं तत्रैव, यथा—

"खलदवदहनः कोसलेन्द्रोऽवतान्नः ।"[7]

चन्द्रे तु प्राधान्येनाह्लादकत्वमेव । तिमिरापनोदनादिकं सर्वमानुषङ्गिकमित्येतद्वंशोत्पन्नश्रीकृष्णस्य चरितमपि भूभारहरणादिकार्यापेक्षया व्रजवल्लवीजनानन्दनिष्यन्दप्रेमासक्तेरेव प्राधान्यमावहतीति द्वादशाध्यायेषु चन्द्रवंशोद्भवराज्ञां चरितनिरूपणाद् व्यज्यते ।[8]

---

१. यज्ञावतारकथा—प्रथमेऽध्याये ।
२. अजितावतारकथा—पञ्चमेऽध्याये ।
३. मोहिन्यवतारकथा—८,९,१० अध्यायेषु ।
४. वामनावतारकथा—१८–२३ अध्यायेषु ।
५. मत्स्यावतारकथा—२४ तमेऽध्याये ।
६. गजेन्द्रमोक्षकथा—द्वितीये तृतीये चतुर्थे चाध्यायेषु ।
७. भा० ९।११।१४, अपि च, तत्रैव पञ्चमश्लोकात् २३ श्लोकपर्यन्तं वर्णनमपि द्रष्टव्यम् ।
८. अनुग्रहाय भूतानां सुपुण्यं व्यतनोद् यशः । (९।२४।६१)
स्निग्धस्मितेक्षितोदारैर्वाक्यैर्विक्रमलीलया ।
नृलोकं रमयामास मूर्त्या सर्वाङ्गरम्यया ॥
एवम्—
यस्याननं मकरकुण्डलचारुकर्णभ्राजत्कपोलसुभगं सविलासहासम् ।
नित्योत्सवं न ततृपुर्दृशिभिः पिबन्त्यो नार्यो नराश्च मुदिताः कुपिता निमेश्च ॥
(श्रीमद्भागवतम्—९।२४।६४–६५)

अपि च, चतुर्विंशत्यध्यायेषु चतुर्विंशतीति संख्यया एतत्संख्याकभगवदवताराणामपि बोधो भवति, येन 'ईशानुकथा' नितरामत्र संगच्छते ।

१०. दशमस्कन्धः (निरोधस्कन्धः)

भागवतमतानुसारेणास्याविद्याचक्रस्य वास्तविकं पर्यवसानं भगवत्कथाश्रवणमननानुध्यानजन्यभगवदनुरागेणैव सम्भवति ।

भगवत उत्तमश्लोकस्य गुणानुवादमेव भवरोगस्य परमं महौषधम्, तदपि मधुरं श्रोतृमनोऽभिराममात्मारामजनगीतञ्चेति । यथा

निवृत्ततर्षैरुपगीयमानाद् भवौषधाच्छोत्रमनोऽभिरामात् ।
क उत्तमश्लोकगुणानुवादात् पुमान् विरज्येत विना पशुघ्नात् ॥ इति ।
(१०।१।४)

अत एव सम्यग्रूपेण एतेनैव (भगवत्कथापीयूषपानेन) प्रपञ्चस्य निरोधः । यथा—

जीवस्यात्मरूपेण जाग्रत्स्वप्नसुषुप्त्यादिविरहिते तुरीये परमात्मनि सन्निवेश्य सिद्धयति ।

एक एव भगवान् नामरूपलीलाधामात्मकश्चतुर्धा भक्तजनकल्याणायाविर्भवति ।

अत्रापि पश्चाद्युगवर्ति जनानां कृते तल्लीलाकथैवावलम्बनं मुक्तेः साधनं च भवति । अतः प्रत्नाचार्यैर्दशमस्कन्धे मुख्यतया इयं लीलैव निरोधपदेन स्वीक्रियते ।[1]

आनुषङ्गिकतया धर्मग्लापकानामसुराणां लोकप्रपीडकानां दुष्टनरेशानां भगवत्कर्तृकवधोऽपि 'निरोध'पदेन स्वीक्रियते, यतः—

नैमित्तिको निरोधोऽन्यो धर्मग्लानिनिमित्ततः ।
..................हरिणा दुष्टभूभुजाम् ॥[2]

इत्यस्मिन् श्लोके महाप्रभुवल्लभाचार्या भगवतो भूभारहरणात्मकानि कर्माणि नैमित्तिकनिरोधपदवाच्यानीति स्वीकुर्वन्ति ।

एतदपि लक्षणमत्र भगवत्कृतपूतनाबकप्रलम्बधेनुकचाणूरमुष्टिकादिदैत्यानां कंसकालयवनशिशुपालदन्तवक्रजरासन्धनरकादिदुष्टनरेशानां च संहारेण सङ्गच्छते । अतो निरोधलक्षणलक्षितोऽयं स्कन्धो नितरामन्वर्थं एव ।

११. एकादशः स्कन्धः [मुक्तिस्कन्धः]

मुक्तेस्तात्पर्यमस्ति यद्भेदरूपनानात्वं परित्यज्य जीवः स्वस्वरूपे आत्मन्येव सुदृढां निष्ठां विदधातु । सज्ज्ञानेन, आत्मनः संसारबन्धनम्, देहाध्यासादिप्रपञ्चं समधिगम्य, सर्वमेनं

---

१. द्र०—श्रीवल्लभकृतसुबोधिन्या दशमस्कन्धे "नमामि हृदये०" इति श्लोकव्याख्यायां टिप्पणीकाराः (गो० विट्ठलनाथदीक्षितमहाशयाः) चौखम्बा, पृ० २, सन् १९११ ।
२. 'सुबोधिनी' १० मस्कन्धे १०३ ।

निवर्तयित्वा जगतश्च मिथ्यारूपं मनसि विभाव्य, निष्कले ब्रह्मण्येव रन्तुमिच्छेदिति स्कन्धेऽस्मिन् एतत्साधनीभूतानि तत्त्वान्याख्यातानि, यथा—

१ वसुदेवाय देवर्षिनारदस्योपदेशः—द्वितीयेऽध्याये।

२— मायायास्ततः सन्तरणोपायस्य च वर्णनम्, ब्रह्मकर्मादिनिरूपणञ्च—तृतीयेऽध्याये।

३— श्रीकृष्णोद्धवसंवादे—अवधूतोपाख्यानम्—६, ७, ८, ९ अध्यायेषु।

४—आत्मनः संसारबन्धनम्, बद्धमुक्तयोश्च साधूनां लक्षणकथनम्, भक्तिप्राप्त्युपाय-वर्णनञ्चेति (१०-११)।

५—भगवतो हंसरूपेण ब्रह्मणे ज्ञानोपदेशादयश्च।

**१२. द्वादशः स्कन्धः (आश्रयस्कन्धः)**

एतस्मिन् द्वादशतमे स्कन्धे आभासनिरोधयोः परमाश्रयस्य भगवतः स्वरूपतत्त्वमेव समुद्घाटितं भागवतकारेण। अतो विविक्तरूपेण आभासनिरोधावत्र विविच्येते, यथा—

**(१) आभासः**—एकस्मिन्नेव तत्त्वात्मके सुवर्णे कटककुण्डलमुकुटनूपुरादिनानाऽऽकार-कल्पितान्याभूषणानि तत्त्वदृष्ट्या स्वर्णात्मकान्यपि, व्यवहारदृष्ट्या पृथक् पृथङ्नामानि पृथक् पृथग-वयवभाञ्जि च भवन्ति; तथैव एकस्मिन्नेवाद्वये ब्रह्मणि देवासुरमनुष्यतिर्यञ्चां समुत्पत्तिप्रतीतिः त्रिगुणात्मवैविध्यदर्शनं चात्र नानात्वमुद्भासयति, विधिनिषेधमूलकान् नानाधर्माचारान् च प्रकटयति, तदयमेवाभास इति कथ्यते।

**(२) निरोधः**—यथाऽग्निमध्ये परिगलितरूपेण सर्वाण्याभूषणानि, स्वस्वनामरूपाणि सुवर्णत्वमेवाधिगच्छन्ति, तद्वत्सृष्टेर्नानात्वमपि ज्ञानाग्निसंदग्धीभूय निष्कलब्रह्मण्येवावतिष्ठत इत्येव 'निरोध'पदवाच्यो भवति।

**इदानीमाश्रयतत्त्वस्य व्याख्या विधीयते। तद्यथा—**

**(३) आश्रयः**[१]—आश्रयशब्दस्यापरपर्यायः 'शरणम्' इति भवति।

पूर्वोक्तानां सर्गादिनवलक्षणानां यच्छरणं यदधिष्ठानम्, तदेवाश्रयपदवाच्यं परब्रह्मेति। अयमाश्रयोऽपि द्विधा भवति—(१) साधनाश्रयः (२) फलाश्रयश्चेति।

यथा—विदेशात् स्वगृहं गन्तुकामः कश्चिद् जनो गृहमेव फलाश्रयं विजानन् साधना-श्रयत्वेन 'यात्रायानोपस्करपाथेयप्रभृतीनपि गृह्णाति, तद्वत् फलाश्रयत्वेन केवलं ब्रह्मैव परिकल्पयन् भागवतकारः साधनाश्रयत्वेन नानाधर्मार्थकथानिरूपणमत्र करोति।

वस्तुतः सर्गादिनवलक्षणलक्षितो ब्रह्मात्मरूपः श्रीकृष्ण एवात्र दशमपदार्थः। स्कन्धेऽस्मि-न्नेतस्यैव शुद्धिः क्रियते।

शुद्धेस्तात्पर्यमस्ति विविक्तरूपेण तत्त्वस्यानुसन्धानम्। ब्रह्मणि मायासंयोगात् समुत्पन्ना प्रपञ्चकल्पनैवाशुद्धिः, शुद्धिस्तु तस्मिन्नद्वयरूपेण तत्त्वान्वेषणमिति। यथा जातरूपे विविधरूप-

१. 'स्वस्वरूपलाभार्थकोपजीव्यत्वमाश्रयत्वम्' इति सुबोधिनीकाराः।

जातान्याभूषणानि, आभूषणधिया धारयन्ती काचिद्रमणी तेषु, तत्तदङ्गधारणक्रिययोत्कृष्टापकृष्टात्मिकां बुद्धिं कुरुते; परं सुवर्णकदृष्टिः कश्चित् स्वर्णकारस्तानि सर्वाण्यपि सुवर्णरूपेणैव गृह्णाति। एवमत्रापि प्रपञ्चासक्तचेता जनो गुणदोषबुद्ध्या हेयोपादेयरूपेणैव सृष्टिं विजानाति, कश्चिद्योगी एवास्यां मूलतत्त्वं ज्ञातुं प्रयतते।[1]

स्कन्धेऽस्मिन्निदमेवाश्रयतत्त्वं त्रयोदशाध्यायेषु विविधधिया विततं दृश्यते। तत्सूत्रपद्धत्याऽत्र निर्दिश्यते, यथा—

प्रथमेऽध्याये - कलियुगीयराजवंशवर्णनद्वारेण सम्पूर्णलोकस्य देशस्य चाश्रयत्वेन भगवानेवेति व्यज्यते।

द्वितीये—कलिकृतयुगयोः परस्परविपरीतयोर्युगधर्माणामाश्रयरूपेण भगवानेवास्तीति।

तृतीये—हरेर्नाम स्वमहिम्ना कलियुगीयजनानां हिताय भगवदाश्रयत्वेनैव तिष्ठतीति कथितम्।

चतुर्थे—चतुर्विधप्रलयनिरूपणेन, लयेऽपि भगवत्तत्त्वं मुखरितमिति व्यक्तम्।

पञ्चमे—भगवन्तमाश्रयरूपेण विज्ञाय नरः सर्वविधभयेन मुच्यत इति सूचितम्।

षष्ठेऽध्याये—जीवने मरणे, संग्रहविभागे, सर्वत्र भगवत्तैव कथाभिः कलिता।

एवं सप्तमाष्टमनवमदशमाध्येष्वपि विश्वाश्रयत्वेन मायाऽऽश्रयत्वेन च भगवच्छक्तिरेव व्यापृतेति निश्चीयते।

एकादशे—प्रतीकाश्रयकालविभागाश्रयरूपेण ( सूर्यव्यूहरूपेण ) च श्रीभगवानेवेति निगदितम्।

द्वादशे त्रयोदशतमे च—श्रीमद्भागवतस्य सम्पूर्णासु कथासु सर्वेषु पुराणेष्वपि च हरिरेवाश्रयधिया समुपवर्णित इति। सम्पूर्णेऽस्मिन् स्कन्धे 'आश्रय'तत्त्वस्य व्याख्यानेनाश्रयरूपमस्याभिधानं सुसङ्गतमेव।

**उपसंहारः**

अस्य सुविस्तृतसमालोचनस्य तात्पर्यमिदमेवास्ति यच्छ्रीमद्भागवतम्, (महर्षिकृष्णद्वैपायनस्य) अन्यत्सप्तदशपुराणविशिष्टम्, अन्यदेव दशलक्षणलक्षितं महापुराणमस्ति।

एतस्य लक्षणान्येतस्मिन् समीचीनरूपेण संगच्छन्ते। लक्षणविन्यासेनैव श्रीमद्भागवतस्य एतादृक् स्वरूपं सिद्ध्यति, यस्मिन्नेकोऽपि श्लोकः, एकमपि वाक्यं त्यक्तुं परिवर्तयितुं वा न

---

१. भगवत्पादवल्लभाचार्यचरणैः शुद्धेर्व्याख्या एवं कृता—"दशमोऽत्राश्रयः, तस्य विशेषेण शुद्धिः। सर्वत्रैव हि पदार्थे दश धर्माः सन्ति भगवद्रूपाः, तत्रैको ग्राह्यः, अन्ये तु त्याज्याः। तत्र ते यदि न निरूपिता भवन्ति, ग्राह्यत्याज्यविवेको न भवति, अतो यावद्दूरं गुणसम्बन्धः स त्याज्यः, भगवदाश्रये व्यभिचारापत्तेः, अनन्याश्रयभङ्गश्च। अत उत्तरोत्तरा एते धर्मा भवन्तीति यः पर्यवसानेऽवशिष्यते स ग्राह्य इति तुषादिवदाश्रयवरकत्वेनैते धर्माः प्रतिपाद्यन्ते।" —(सुबोधिनी, द्वितीयस्कन्धे)।

शक्यते। एतस्मादेव कारणाद् विगतपञ्चसहस्रवर्षेष्वप्येतस्मिन् किमपि खण्डनं समुपबृंहणं वा न जातमिति पौरस्त्यपण्डितानां निश्चितं मतम्।

प्रबन्धेऽस्मिन्नस्माभिः प्रत्नपण्डितानामेव पद्धतिः पुरस्कृता, यतस्तद्विना ग्रन्थस्यास्य तात्त्विकं स्वरूपं समुद्घाटयितुं न शक्यते। अर्वाञ्चस्त्वत्र भौतिकीं दृष्टिमवलम्ब्य केवलमस्य परमरसरूपस्य श्रीमद्भागवतस्यापि निर्माणादिविषयिणीं समालोचनामेव वितन्वन्ति। फलतः कृतश्रमा अपि तेऽत्र कमपि लाभं न प्राप्नुवन्ति। श्रीमद्भागवतोक्त्या श्रद्धाविरहितानामेतेषां श्रमोऽपि निस्तण्डुलतुषावघातश्रमसदृशं क्लेशमूलकतामेवाश्रयते, यथा—

श्रेयः स्रुतिं भक्तिमुदस्य ते विभो क्लिश्यन्ति ये केवलबोधलब्धये।
तेषामसौ क्लेशल एव शिष्यते नान्यद् यथा स्थूलतुषावघातिनाम्॥ इति।

(श्रीमद्भागवतम्—१०।१४।४)

श्रीमद्भागवते ये भागवतधर्माः समुपवर्णितास्ते सार्वजनीनाः सार्वदेशीयाः[1], किन्तु श्रद्धयैकगम्याः सन्ति।

अत्र तर्कोऽप्रतिष्ठः सिद्ध्यति। श्रद्धयैव एतद्रहस्यं वेत्तुं शक्यते। अस्तु, "श्रद्धामयोऽयं पुरुषः"[2] इति भगवद्वाक्याद् वयमप्यत्र स्वश्रद्धानिवेदनेनैव प्रबन्धस्यास्य समापनं कुर्मः, तद्यथा—

शब्दब्रह्मविवेचकं सुविमलं मन्त्रात्मकं मङ्गलं
श्रीमत्कृष्णकथात्मकं शुकमुखद्राक्षारसेनाप्लुतम्।
गोपीप्रेमतरङ्गपूरतरलं काव्यामृतं मञ्जुलं
श्रीमद्भागवतं पुराणममलं नित्यं नमस्कुर्महे॥ (विनयमिश्रस्य)



१. ये वै भागवताः प्रोक्ता उपाया ह्यात्मलब्धये।
अञ्जः पुंसामविदुषां विद्धि भागवतान् हि तान्॥
यानास्थाय नरो राजन् न प्रमाद्येत कर्हिचित्।
धावन्निमील्य वा नेत्रे न स्खलेन्न पतेदिह॥ (श्रीमद्भा० ११।२।३४-३५)

२. श्रीमद्भगवद्गीता—१७।३[?]।

# कूर्माचल [कूमायूं] सम्भवस्य गुमानिकवेः साहित्यसमीक्षणम्

श्रीतारादत्तः

शोधच्छात्रः—संस्कृतविभागीयः, काशीहिन्दूविश्वविद्यालये, वाराणसी

अस्त्युत्तरस्यां दिशि कैलासमानसरोवरादिपथे संशोभमानः पुण्यसलिलाभी रामगङ्गा-सरयूशारदागोमतीप्रभृतिनदीभिः पवित्रीक्रियमाणो ब्रह्मानन्दानुभूतये समाहितचित्तैर्विमलर्षिभिः सततं संसेव्यमानः सघनदेवदारुद्रुमादिभिरलङ्क्रियमाणो भगवतो विष्णोः कूर्मावतारेण स्मार्यमाणो विविधपावनप्रदेशैर्विभूष्यमाणो नैसर्गिकसौन्दर्यसारभूतः कूर्माचलो नाम नगेशः।

शास्त्रारण्यविहारिणोऽपि कोमलकाव्योपवनसञ्चारिणः सुकुमारमतयो विश्वेश्वरादयोऽनेके विद्वांसः कोमलकान्तकाव्याञ्जलिभिः सुरभारतीं समर्चयन्तः प्रदेशमिमं स्ववासेनालङ्कृतवन्त इति विदितचरमेव। साम्प्रतमपि राष्ट्रभाषासाहित्यसंवर्धने लब्धयशस्काः सुमित्रानन्दनपन्तादयो यत्रत्याः कविशिरोमणयोऽध्येतॄणां श्रवणपथगोचरतामनायासेनायान्त्येव। निसर्गसुन्दरेऽस्मिन्नेव प्रदेशे 'गुमानी'[1] इति नाम्ना प्रसिद्धिं गतो विविधशेमुषीसमन्वितो लोकरत्न-पन्तोऽपि १८४७ विक्रमवत्सरे बुधवासरान्वितायां पौषकृष्णद्वादश्यां तिथौ देवमञ्जर्याः सुवर्णकुक्ष्याः समुत्पन्नः। उपरड़ाग्रामवासिनः (वर्तमानपिथौरागढ़मण्डले स्थितोऽयं ग्रामः) भारद्वाजगोत्रीयस्य महाराष्ट्रियपन्त-ब्राह्मणकुलावतंसस्य पुरुषोत्तमपौत्रस्य देवनिधिपुत्रस्यास्य जन्म प्रथितवैद्यकुले काशीपुरनगरे (वर्तमाननैनीतालमण्डले)अभूत्। बाल्यकालश्चानेन पितामहेन सहोपरड़ाग्रामे काशीपुरे च व्यतीतः। कुशाग्रबुद्धिरसौ पितृव्यगृहे प्राथमिकीं शिक्षामवाप्य पश्चात् पण्डितमण्डलीमण्डनेन ज्योतिर्विदा श्रीमता हरिदत्तेन दीक्षित इति श्रूयते।[2] चतुर्विंशतिवर्षपर्यन्तं ब्रह्मचर्यं चरन्नसौ शास्त्राण्यधिजगाम।

गुमानिकवेः परिचयप्रसङ्गे वृत्तमेकं कूर्माचले प्रथितं स्मृतिपथमवतरति। तत् किल—गुरौ वसतोऽस्य महानुभावस्य स्वयंपाकित्वेन पाकसमये रसवत्यां ज्वलदङ्गालसम्पर्काद् यज्ञोपवीतं ननु सन्दग्धम्। तत्प्रायश्चित्तभूतं मौनमास्थाय रसायां स्वर्लोकसोपानभूतायां भागीरथ्यामेव स्नात्वाऽसौ 'निखिलपापपरिशोधनानुष्ठानमाचरिष्ये' इति मनसि सन्धाय तीर्थस्थलेषु भ्रामं भ्रामं शूकरक्षेत्रे (सोरो इति प्रसिद्धे) गङ्गातीरस्थजनस्थाने जगाम। तीर्थाभिगमनियमानुसारं यज्ञोपवीतपरिवर्तनादिकं विधायापक्वान्नभक्षणेन वर्णलक्षगायत्रीजपानुष्ठानं स्वीचकार। चतुर्षु वर्षेषु तदनुष्ठानं यथाविधि परिसमाप्य ततो नियमेन श्रीमद्राघवेन्द्रचरणानामभिन्नतेजोराशि-पुञ्जीभूतं मानवकल्याणाय भुवि प्रकटीभूतं मर्कटरूपेण संस्थितं हनूमन्तं प्रसादयितुं दूर्वारसमेव

१. 'गुमानी' इति नाम पितरौ सुतं प्रति वात्सल्यातिशयं द्योतयति।

२. गुमानीकाव्यसंग्रहः, देवीदत्तपाण्डेयसम्पादितः, भूमिका पृ० १।

पायं पायं जपपरो बभूव[1]। मासत्रयानन्तरमेवाद्भुतामेकां घटनां मध्यन्दिने प्रत्यक्षीचकार, यदेकः प्रौढः कपिः स्वदक्षिणहस्तं जापकशिरसि दत्वा मानववाण्यां प्रोवाच—'कपिरहं कविस्त्वम्' इति क्षणानन्तरमेवान्तर्दधे च। तदनन्तरमेवास्य वाणी काव्यमयी जाता। इत्थं व्रतोद्यापनानन्तरमेव गुमानो पक्वान्नं भक्षयाञ्चकार। ततश्च मातुराज्ञया गृहस्थाश्रमगुपगतः।[2]

गुमानिकविना राजपरिषत्स्वेव सादरं जीवनं यापितम्। सुदर्शनसाहगुमानसिंहदेवकर्णसिंहवनेसिंहफतेहप्रकाशादीनां टिहरीकाशीपुरपटियालाऽलवरनहाणनरेशानां राज्याश्रितोऽसावासीत् कविवरः। कदाचिट्टिहरीनरेशगुमानसिंहस्य परिषदि समागतं शास्त्रार्थसमुत्सुकं वैदेशिकविद्वांसमसौ तज्जिज्ञासानुरोधेन पद्मपुरःसरं स्वाभिधानपरिचयं प्रददत् प्रोवाच[3]—

कौर्मध्यमो ह्रस्वतृतीयकेन स्वरेण दीर्घप्रथमेन युक्तः।
पौरन्तिमस्तोऽक्षरमस्तु वर्णो दीर्घद्वितीयेन ममाभिधानम्॥

महतायासेन 'गुमानी' इति नामावगतिं प्राप्तः शास्त्रार्थोद्यतो विद्वान् मध्यस्थेन राज्ञा 'टिहरी'इति नामसंगतिकारणं पृष्टोऽशक्तः सन् कवयितुं पराबभूव। गुमानिस्तु कविस्तत्काल एव कारणमुपस्थापयामास।[4]

काशीपुरे कूर्माचलाधिपतेर्गुमानसिंहदेवस्य सभायामेकदा सगोत्रीयेण सुखादत्तपन्तेन सह विवादे यदा मुरादाबादनगरवास्तव्यः कूर्माचलीयः शास्त्री टीकारामशर्मा मध्यस्थत्वेनाभिनिवेशवशात् सुखादत्तपन्तपक्षं समर्थयाञ्चक्रे, तदा यथार्थप्रियः परिहासपटुर्गुमानी सत्वरमेवमुपजहास[5]—

चन्दनकर्दमकलहे भेको मध्यस्थतापन्नः।
ब्रूते पंकनिमग्नः कर्दमसाम्यं न चन्दनं लभते॥

१९०३ वैक्रमे षष्ठपञ्चाशद्वर्षावस्थायां लोकयात्रामतिक्रम्य स्वर्गमारुरोहेति नासौ कविर्दीर्घायुष्यमन्वभजत्।

**कृतयः**—गुमानिकविर्यद्यपि संस्कृतहिन्दी-कूर्माचलीयनेपाल्यादिविविधासु भाषासु लक्षाधिकानि पद्यानि कवयाञ्चकारेति प्रसिद्धिः, तथाप्येतद्विरचितानि कानिचिन्मुक्तककाव्यान्येवोपलब्धानि। यथा[6]—

---

१. शूकरक्षेत्रे (एटामण्डले) गुमानिगुफाऽद्यापि कवेस्तपश्चर्यां स्मारयति।
२. गुमानिकवेर्वंशावलिरद्यापि वरीवर्ति। ३. गुमानिकाव्यसंग्रहः, भूमिका पृ० ५।
४. सुरगंगतटी रसखानमही धनकोशभरी यह नाम रह्यो,
पद तीन बनाय रच्यौ बहुविस्तर वेग नहीं जब जात कह्यौ।
इन तीन पदों के बसान बस्यो अक्षर एक ही एक लह्यौ,
जनराज सुदर्शनसाह पुरी टिहरो इस कारण नाम रह्यो। (गु०का०सं०,पृ० ५ भूमिका)
५. गुमानिकाव्यसंग्रहः, पृ० ३।
६. गुमानिकविविरचितोपलब्धकाव्यानि १९५३ वैक्रमे 'गुमानिकाव्यसंग्रह'नामके पुस्तके संगृह्य स्व पण्डितदेवीदत्तपाण्डेयेन प्रकाशितानि। एतदतिरिक्तान्यपि स्फुटप्रबन्धपद्यान्यप्रकाशितानीति श्रूयते।

१. रामनामपञ्चाशिका (५५ पद्यात्मिका)
२. रामनामविज्ञप्तिसारः (३० पद्यात्मकः)
३. गङ्गाशतकम् (१०१ पद्यात्मकम्)
४. जगन्नाथाष्टकम् (९ श्लोकात्मकम्)
५. रामाष्टपदी
६. पञ्चपञ्चाशिका (वेदान्तसिद्धान्तप्रतिपादिका ५५ पद्यात्मिका)
७. भक्तिविज्ञप्तिसारः (१०१ श्लोकात्मको रामभक्तिविषयकः)
८. भक्तिविज्ञप्तिसारः (१२६ श्लोकात्मको भगवद्गुणानुवादकः)
९. दण्डकादीनि (गणेशादिदेवाराधनात्मकानि २६ दीर्घवृत्तानि)
१०. नीतिशतकम् (१०० श्लोकात्मकम्)
११. ज्ञानभैषज्यमञ्जरी (८० श्लोकात्मिका)
१२. समस्यापूर्तयः (६४ पद्यात्मिका)
१३. सद्रञ्जनाष्टकम् (९ श्लोकात्मकम्)
१४. द्यूतवर्णनम् (गंजफाक्रीडापद्धतिर्वा) (१८ श्लोकनिबद्धा)
१५. अंगरेजराज्यवर्णनम् (१३ पद्यात्मकम्)
१६. लाटद्वयप्रकरणम् (३२ श्लोकात्मकम्)

एतदतिरिक्तं कविना स्फुटपद्येषु विविधवृत्तेष्वाशीर्वादात्मकाः श्लोकाः, चतुःशारिकावर्णनम्, सज्जनदुर्जनादिवर्णनम्, तमालपत्रताम्बूलवीटिकादिवर्णनम्, अवधूतवैराग्युदासीननाथनानकसाईं-आदिवर्णनेन तात्कालिकसामाजिकसांस्कृतिकस्थितेर्यथातथं चित्रणं कृतम्। कालिकाष्टकरामसहस्रगणदण्डकयोरप्युल्लेखो गुमानिकाव्यसंग्रहेऽस्ति, किन्तु नोभयोरप्युपलब्धिः। गुमानिविरचितानि हिन्दीनेपालीकूर्माचलीयादिभाषाणामपि पद्यानि संग्रहे संकलितानि।

धर्मशास्त्रे तिथिकालाशौचनिर्णयात्मको गुमानिगुटकेति नाम्ना प्रथितो 'निर्णयसारः' इति ग्रन्थोऽद्यावध्यप्रकाशित एव।[1]

राज्याश्रितत्वात् पटियालाऽलवरनहाणाधिपतीनां कर्णसिंहतेनसिंहफतेहसहानां प्रशस्तौ लेखनीं व्यापारयित्वाऽसौ क्रमेण सप्तपञ्चत्रयसर्गात्मकानि प्रबन्धकाव्यानि रचयाञ्चकारेति श्रूयते।

## गुमानिकवेः पाण्डित्यप्रकर्षः

गुमानिकविर्मुक्तककाव्येष्वेव लेखनीं व्यापारयामास। न च प्रबन्धकाव्यानामायासबाहुल्यात् प्रतिभादौर्बल्यान्मुक्तकेष्वेव कवेः प्रवृत्तिरित्याकलनीयम्; एकेनापि मुक्तकशतकेनामरुककवेः कीर्तेर्दिगन्तेषूल्लसितत्वात्। कविश्च 'मुक्तकेषु प्रबन्धेष्विव रसबन्धाभिनिवेशिनः कवयो दृश्यन्ते। यथा ह्यमरुकस्य कवेर्मुक्तकाः शृङ्गाररसस्यन्दिनः प्रबन्धायमानाः प्रसिद्धा एव' इति

१. प्रणतसमर्थितकामं नत्वा रामं विचार्य सद्ग्रन्थान्।
दर्शयति सर्वसारं कविर्गुमानी श्रुतेर्द्रुमान्॥ (निर्णयसारस्याद्यं पद्यम्)

ध्वनिप्रस्थानपरमाचार्याणामानन्दवर्धनसहृदसमीक्षकधुरीणानामपि प्रशंसापदवीं सम्प्राप्तः।[1] मुक्तककाव्यानि स्वल्पान्यपि गुमानिविरचितानि तस्य बहुशास्त्रज्ञतां विविधभाषाभिज्ञतां च प्रतिपादयितुं प्रभवन्तीति नात्रातिशयोक्तिः। विदग्धोऽपि स्निग्धः प्रौढोऽप्यप्रौढचरितोऽसौ कविः चञ्चलस्वभावादेकत्रानवस्थानाच्च प्रबन्धकाव्यप्रणयने नोमुन्खीबभूवेति मुक्तकेष्वेव सारभूतान् मनोहारिणश्च भावानभिव्यज्याद्भुव्यवैदुष्यं प्रकटयामास।

सोऽयं प्रासादिकः कविरनन्यसाधारणप्रतिभासमन्वितो रसिकजनमनोरञ्जनाय न केवलं संस्कृतहिन्दीकौर्माचलीनेपालीभाषाः समाश्रित्य लघु-लघुप्रकरणबद्धाः कविता एव कवयाञ्चकार, अपितु संगीतादिललितकलानिपुणतामायुर्वेदज्ञतां दर्शनशास्त्राभिज्ञतामपि प्रदर्शयामास। ध्रुवपदेषु विरचिता रामाष्टपदी[2] कवेः शास्त्रीयसंगीतज्ञानं द्योतयति। चित्रकलानुरक्तस्य गुमानिनो निर्मितानि चित्राण्यनवधानमानसत्वात् कालान्तराले निमग्नानि। श्रूयते च तत्कालीनगढ़वालप्रदेशीयचित्रकरेण मौलारामतोमरेणास्य प्रतिस्पर्धिताऽऽसीदिति। गुमानिकवेर्विरचिता ज्ञानभैषज्यमञ्जरी कवौ दर्शनायुर्वेदयोर्गंभीरज्ञानसामानाधिकरण्ये प्रकटयति। एवमेव वेदान्तसिद्धान्तपोषिका 'पञ्चपञ्चाशिका' अपि कवेर्दर्शनप्ररूढतां निर्दिशति। कविरेकस्मिन्नेव पद्ये क्रमशो हिन्दीकौर्माचलीनेपालीसंस्कृतमिति भाषाचतुष्टयमुपाददद् विविधभाषाप्रयोगनैपुण्यं प्रस्तौति।[3]

## काव्यवैशिष्ट्यम्

भाषा—गुमानिकवेर्भाषा वैदर्भीरीतिसमन्विता प्रसादमयी प्रतिभाति। यद्यपि गौडीपाञ्चाल्यादिरीतीनामुदाहरणान्यप्यवेष्टुं शक्यतेऽस्य काव्येषु, तथापि सर्वत्रैव प्रसादगुणोपलब्धिर्झटित्येव सहृदयहृदयं समाकर्षतो लोकोत्तरमानन्दमावहति। समसामयिकशब्दानामुपयोगोऽप्यनायासेनैव प्रसङ्गानुरूपमवलोक्यते। तद्यथा लाटद्वयप्रकरणे—

शतेन स्मृता 'कम्पिनी' योधमुख्यै-
स्तदीयोऽधिनाथः 'सुबेदार' संज्ञः।
ततोऽर्वाग् 'जमादार' नामा ततोऽन्यो
'हवल्दार' संज्ञोऽप्यमल्दारयुक्तः॥ (श्लोकः ८)

---

१. शान्तं निष्कलमेकं नित्यं गतमायम्। त्रिगुणातीतमगोचरमवक्तमनपायम्॥ १।
बहुविधरूपविलासं सकलगुणावासम्। कुन्दकुसुमितहासं नीलघनाभासम्॥ २।
(रामाष्टपदी)

२. ध्वन्यालोकः, तृतीयोद्द्योते सप्तमकारिकाया वृत्तिः।

३. बाजै लोग त्रिलोकिनाथ शिव की पूजा करैं तो करैं,
क्वै-क्वै भक्त गणेश का जगत मैं बाजा हुनी तौ हुनी।
राम्रो ध्यान भवानि का चरण मैं गर्च्छन् कसै लै गरुन्,
धन्यो मातुलधामनीह रमते रामे गुमानी कविः॥

स्थलविशेषं विहाय सर्वत्रैव भाषा दीर्घसमासरहिता सरसाऽक्लिष्टा शब्दार्थचित्ररहिता नितरां स्वाभाविकतामापादयति । शब्दचमत्कारचाकचिक्यप्रदर्शने नास्त्यभिनिवेशः कवेः । भावेष्वेव वैविध्यं परिदृश्यते, न भाषायाम् ।

### छन्दोविधानम्

'अपि माषं मसं कुर्याच्छन्दो भङ्गं न कारयेत्', 'छन्दः पादौ तु वेदस्य' इत्युक्ती लोके वेदे च छन्दसां महत्त्वं वा वर्णयतः । गुमानिकविः सर्वथावधानमानसश्छन्दसां यथायोगं प्रयोगे । अनुष्टुब्-वृत्तादारभ्य दण्डकान्तानां दीर्घदीर्घवृत्तानां प्रयोगो गुमानिकविना कृतः । तत्रानुष्टु-वार्योपेन्द्रेन्द्रवज्रोपजातिवंशस्थवसन्ततिलकामालिनीशालिनीभुजङ्गप्रयातपुष्पिताग्रपृथिवीहरिणी — मन्दाक्रान्ताशार्दूलविक्रीडितदोहासोरठाछप्पययादिवृत्तानां यथायोगोपयोगे सत्यपि कवेरार्यावृत्तेऽ-भिनिवेशः सविशेषः स्पष्टं परिलक्ष्यते ।

### अलङ्काराः

काव्यशोभाधायकानामलङ्काराणामुपयोगित्वं काव्ये निखिलाऽलङ्कारिकसम्मतमिति सुदृढः सिद्धान्तः । किन्तु काव्यात्मभूतं रसतत्त्वं गुणीकृत्यानायासेनालङ्कारणां प्रयोगो नितरां वैरस्यमावहतीति निश्चप्रचम् । जयदेवादयस्त्वालङ्कारिका अलङ्काराराहित्ये काव्यत्वमेव न स्वीचक्रुरनुष्णाग्निवत् । कविर्गुमानी यद्यपि न बलादलङ्काराणां मोहमुपगतस्तानुपयुञ्जते, तथाप्यनायासेनालङ्काराणां सन्निवेशो तत्काव्येषु नयनगोचरतामवतरति । स्वभावोक्तिप्रियोऽसौ न मनागपि वक्रोक्त्यातिशयोक्त्यादिषु बद्धादरः । अनुप्रासयमकश्लेषोपमास्वभावोक्तिदृष्टान्तार्थान्तर-न्यासादयः शब्दार्थालङ्कारा ये गुमानिकाव्येषु परिस्फुरन्ति ते सुतरां स्वारस्यमावहन्ति ।

'वर्णसाम्यमनुप्रासः' इति लक्षणलक्षितस्य 'रसाद्यनुगतत्वेन प्रकृष्टो न्यासः' इत्यालङ्कारिक-व्युत्पादितस्यानुप्रासस्यान्वर्थाभिधानतां सम्प्राप्तमुदाहरणमिदं सहृदयैः स्वमेवाऽऽकलनीयम्—

रम्याङ्गो रमणीसखो रतिपतिप्रख्यो रसज्ञो रसी
राजीवच्छदलोचनो रुचिमयो रागी रणद्भूषणः ।
राकेन्दुप्रतिमाननो रतिकरो राजन्यवर्यो रथी
रूढो रुक्मधनुरुमापतिसखो रक्षोहरो रक्षकः ॥

(रामनामपञ्चाशिका, श्लोकः—३)

अनेकार्थतायुक्तशब्दसमन्विता श्लेषोदाहृतिरपि सुतरां चमत्कृत्य प्रसादयति हृदयमानसान्—

सकलसुरोदयहेतुः[1] कबन्धशास्ता[2] वनौकसां नेता ।
सफलीकृतपराशः[3] प्रिये प्रचेता[4] भवेद्रामः ॥

(रामचित्रपद्यावली, श्लोकः—२५)

---

१. सकलानां सुराणां देवानां मदिराणां वा उत्पत्तिहेतुभूतः ।
२. कबन्धानां जलानां पक्षे वनवासिनाम् ।
३. सफीकृता पराशा पक्षे पश्चिमदिशा, पक्षे परेषामाशा अभिलाषो येन सः ।
४. प्रचेता वरुणः, पक्षे प्रकृष्टं चित्तं यस्य सः सुमना प्रसन्नचित्त इति यावत् ।

उपमानोपमेयतद्विशेषणसाधारणधर्मादीनां भिन्नत्वेऽप्यौपम्यप्रतिपादनार्थमुपमानोपमेयवाक्ययोः पृथगुपादानरूपबिम्बप्रतिबिम्बभावे दृष्टान्तालङ्कारः, 'दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनम्'[1] इति तल्लक्षणलक्षितत्वात् । लक्षणमिदं प्रकृतोदाहरणे रुचिरं संगच्छते—

श्रवणेन यात्यविद्या मननिदिध्यासनानुतापेन ।
अपि च कपित्थमहौषधयुतेन तक्रेण सङ्ग्रहणी ।।
(ज्ञानभैषज्यमञ्जरी, श्लोकः-१०)

सहृदयसंवेद्ययोः स्वक्रियारूपयोरर्थस्य निरूपणं 'स्वभावस्योक्तिर्यत्रेति व्युत्पत्त्या' 'स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनम्'[2] इति लक्षणेन च यत्र दरीदृश्यते, तत्रैव स्वभावोक्त्यलङ्कारः शोभामादधाति । गुमानिना वैराग्युदासीननाथनानकादिसम्प्रदायपथजुषां स्वभावोक्त्या वर्णनं कृतम् । तद्यथा नानकपन्थिनो वर्णनं द्रष्टव्यम्—

कण्ठे सूत्रे चूडामात्रं किञ्चिन्मण्डितमुण्डे
क्रूरामनवच्छिन्नामसकृद् वाचं विभ्रत्तुण्डे ।
भिक्षामाशु न दत्ते योऽस्मिन् नेत्रे विभ्रत्तुण्डे
नानकपन्थी सूत्रे साही खड़ा बजावै दण्डे ।। (नानकपन्थीवर्णनम्-५)

**रसनिरूपणम्**

शृङ्गारी चेत् कविः काव्ये सर्वं रसमयं जगत् ।
स एव वीतरागश्चेन्नीरसं सर्वमेव तत् ।।[3]

इत्युक्तदिशा रसोऽपि कवेरेव वशवर्ती । तदधीनमेव तत्काव्येषु शृङ्गारशान्तादिरूपेण तत्स्थितिः । रसतत्त्वं च 'रसो वै सः' इति श्रुतेरारभ्य भरतानान्दवर्धनाभिनवगुप्तमम्मटविश्वनाथपण्डितराजादिभिर्बहुभिरालङ्कारिकै रसज्ञैर्निरूपितम् । काव्यश्रवणसमनन्तरमेव रसास्वादनसमुद्भूतो विगलितवेद्यान्तरानन्द एव काव्यप्रयोजनेषु सकलप्रयोजनमौलिभूतं प्रयोजनमिति समीक्षकाणां मतम् ।[4] काव्यात्मत्वेनावस्थानाद् रसस्य काव्यप्रणेतारोऽप्युपहासभयात् सरसकाव्यनिर्माणायैव प्रयतन्ते ।

रसिकशिरोमणिरपि गुमानी न शृङ्गारप्रियः, न वा वीररौद्रबीभत्सभयानकेष्वनुरक्तः । करुणरसोऽप्यस्य काव्येषु नैव साक्षात्क्रियते । मधुसूदनादिसम्मते भक्तिरसेऽथवा 'रतिर्देवादिविषया व्यभिचारी तथाञ्चितः । भावः प्रोक्तः ।'[5]— इति भावध्वनौ भक्तेरन्तर्भावे तत्रैव कविरसौ स्वनिरतिशयानुरक्तिं भक्तिं च प्रदर्शयति । शान्तहास्ययो रुचिरोदाहरणानि गुमानिकाव्येषु दृश्यन्ते । यद्यपि द्वित्राः पञ्चषा वा श्लोका अनेन शिवसूर्यकृष्णसरस्वतीलक्ष्मीगणेश-

---

१. काव्यप्रकाशः, दशमोल्लासः, कारिका-१०२ ।
२. साहित्यदर्पणः, दशमपरिच्छेदः, कारिका-९२ ।
३. अग्निपुराणम्, ३३९।११ । ४. काव्यप्रकाशः, प्रथमोल्लासः, द्वितीयकारिकाया वृत्तिः ।
५. काव्यप्रकाशः, चतुर्थोल्लासः, कारिका-३५-३६ वृत्तिः ।

हनूमतादिदेवानां गुणगणानुवादकीर्तनाय विरचिताः, गङ्गाशतकेन गङ्गाया महिमानमप्यसौ गायति, तथापि भक्तप्रवरस्यास्य कवे रामे- रतिरेवेतरकाव्येषु बाहुल्येन व्यज्यते। निरतिशय-भक्तेर्दिङ्मात्रोदाहरणम्—

हरे जनकजापते द्युमणिबिम्बकोटिद्युते
भवार्णवजगद्गुरो रघुकुलावतंस प्रभो।
त्वयातिविधुरस्य मे सकरुणं वचः श्रूयतां
निवेद्य विपदं सुखी भवति सेवकः स्वामिनः॥

(रामनामविज्ञप्तिसारः–१)

एवमेव पञ्चपञ्चाशिकादिषु शान्तरसस्य सद्रञ्जनाष्टकादिषु हास्यरसमयरामणीयकं रूपं सहृदयहृदयाह्लादनायालम्।

गुमानी मुक्तककाव्यानां कवयितेति प्राक् प्रसाधितम्। प्रकरणानुरोधेनेदानीं मुक्तकानां परम्पराऽप्यवेक्षणीयाः।

**मुक्तककाव्यपरम्परा**

प्रबन्धमुक्तकमिति भेदद्वयमपि काव्यस्य समानरूपेण सहृदयहृदयश्लाघ्यम्। प्रबन्धकाव्यं गद्यपद्यमिश्रभेदेन, गद्यं कथाऽऽख्यायिकया, पद्यं च खण्डमहाकाव्यभेदेन विभज्यते। मुक्तकं पुनः काव्यं पद्यमयत्वमेकविधमेव। तत्र खण्डमहाकाव्यादिप्रबन्धकाव्येषु प्रकरणादिवशाच्छन्दसां पौर्वापर्यमपरिहार्यमित्यर्थोऽपि प्रकरणादिकमपेक्षते, किन्तु मुक्तकेषु नास्ति छन्दसां प्रकरणादीनां वा पौर्वापर्यनियमः, स्वतः पूर्णार्थप्रतिपादकत्वात् तेषाम्। 'मुक्तकेषु चतुष्पादसमन्वितेनैकेन छन्दसा नीतितत्त्वम्, धर्मकल्पना व्यवहारोपदेशः प्राकृतिकं चित्रणं द्वयो वा कोऽपि प्रसङ्ग उपनिबध्यते।'[1]

वैदिककालादेवारभ्यते मुक्तककाव्यस्य सुदीर्घा परम्परा। ऋग्वेदे उषापर्जन्यवरुणेन्द्रादि-देवान् प्रति ऋषीणां भक्तिरसभरिता वाणी चात्र निदर्शनम्। ततश्च थेरगाथादिषु मुक्तकं काव्यात्मकत्वेन परिणमद् दृश्यते। गाथाभिरेताभिरेव प्रभावितो हालकविः प्राकृते 'गाथासत्तसई' व्यलिखन्निव प्रतीयते। प्राकृतकविना सातवाहनहालेन संकलिते 'गाथासत्तसई' ग्रन्थे मुक्तकानां शृङ्गाररसेनापूरितं साहित्यिकसौष्ठवसमन्वितं काव्यात्मकं स्वरूपं परिलक्ष्यते। हालकवेः पश्चाद् भर्तृहरिः सुतरां मुक्तकसाहित्ये विशिष्यते। नीतिवैराग्यशृङ्गारात्मकं तद्विरचितं शतकत्रयं ब्रह्मानन्दतत्सहोदरयोरास्वादनमैकाधिकरण्येनासंशयं कारयितुमिव प्रभवति।

मुक्तककाव्यपरम्परायां मौक्तिकमणिरेव संशोभमानोऽमरुककविः सर्वोत्कृष्टमप्रतिमं स्थानमाश्रयते। शृङ्गाररसष्यन्दि प्रबन्धायमानं तद्विरचितं मुक्तककाव्यशतकं पारेप्रबन्धशतं सहृदयरसिकानावर्जयत् समुल्लसति चेति समीक्षकशिरोमणीनां मतिः। विविधविभावानुभावादि-संवलितं नायकनायिकाभेदोपभेदगर्भितमनेकप्रणयचित्रपल्लवितं तदीयं शतकमिदं वात्स्यायन-

---

१. अमरुकशतकम्, भूमिका पृ० ३२, डॉ० कमलेशदत्तत्रिपाठिसम्पादितम्।

शास्त्रमनुकुर्वंद् रसबन्धाभिनिवेशो कवेः साफल्यातिशयं द्योतयति । अमरुकोपबृंहिता मुक्तककाव्य-परम्परा दिनानुदिनं समृद्धिमेवाभजत् । एकादशशताब्दौ महाकविविल्हणेन चौरपञ्चाशिका अमरुकमनुहरन्नेव विरचितेति तदध्ययनेन स्पष्टतामायाति । गोवर्धनकविविरचिताऽऽर्यासप्तशती परिष्कृतालङ्कृतभाषायां निबद्धा रसिकपरिषत्सु सविशेषं समाद्रियते । सुभाषितसंग्रहेषु विभिन्न-कविसङ्कलितेषु मुक्तकानां हास्यशृङ्गारनीतिभक्त्यादिभिरापूरितान्युदाहरणानि सहस्रशः सहृदयान् प्रसादयितुं प्रवर्तन्ते । इत्थं क्षेमेन्द्रादिभिः संवर्धितेऽविच्छिन्ने मुक्तकवाङ्मयेऽतिशय-पाण्डित्याभिमानी निखिलकाव्यशास्त्रादिमर्मज्ञः पण्डितराजोऽपि प्रखरपाण्डित्यं कवित्वशक्तिं च प्रदर्शयामास ।[1] अपराजेयाभिमानमभिव्यञ्जयन्ती सिंहिनीमुखादवतारितोक्तिरियमाकलनीया—

घीरध्वनिभिरलं नीरदमेव मासिको गर्भः ।
उन्मदवारणबुद्ध्या मध्येजठरं समुच्छलति ॥

अस्यामेव परम्परायां गुमानिकवेरुद्भवो वैशिष्ट्यास्पदम् । कविरसौ रसराजप्रधानानि मुक्तकान्यपहाय नीतिसमस्यापूर्तिहास्यशान्तिभक्त्यादिप्रधानान्येव कवयाञ्चकार । संस्कृतकविभिः समुपेक्षितानि समसामयिकसामाजिकस्थितिपरिचायकानि मुक्तकान्यप्यसौ क्षेमेन्द्रमनुकुर्वन् लिलेख । एतत्कवेर्विरचितानि काव्यानि समीक्षणसौविध्यायैवं विभज्यन्ते ।

१. भक्तिदर्शनायुर्वेदप्रधानानि मुक्तकानि

रामारविन्दचरणयोर्निरतिशयरतिरेव गुमानिकाव्यप्रयोजनम् । इदमेव कारणं यदसौ शृङ्गाररसान्वितं लौकिकं वैषयिकानन्दं तिरस्कृत्य भक्तिरसं च समाश्रित्य परमानन्दाय प्रयतते । गुमानिमते भक्तिरस एव सकलसहृदयानन्दानां सारभूतो त्रिविधदुःखोन्मूलने समर्थो निरतिशय-सुखोपलब्धिरूपश्च विद्यते । लौकिकस्तु वैषयिकानन्दः क्षणमेव क्षुद्रमानन्दमाददाति सहृद-येभ्योः, अत एव समुपेक्षणीयः । भक्तिरससमास्वादनेनैव जराजन्ममरणादिभ्यो मुच्यन्ते जनाः, नागच्छन्ति पुनः संसरणायेह जगतीतले ।

गुमानी रामनामपञ्चाशिका, रामनामविज्ञप्तिसारः, गङ्गाशतकम्, जगन्नाथाष्टकम्, रामाष्टपदी, भक्तिविज्ञप्तिसारः, गणेशादिदेवाराधकदण्डकादीनि, भक्तविज्ञप्तिसार इति भक्ति-ग्रन्थान् विरच्य देवविषयिणीं रतिमेव वर्णयाम्बभूव । भक्तिरसप्रवणचित्तस्यास्य कवेरुपर्युक्त-काव्येषु रामाराधकान्येवाधिकानि काव्यानि । पञ्चपञ्चाशिकाया रकारारब्धानां रामाभिधानाना-मनुप्रासालङ्कृतं प्रासादिकं वर्णनमतिशयकाव्यसौष्ठवमपि बिभर्ति । तद्यथा—

रङ्गस्थो रचनाकरो रमयिता रिक्थप्रदो राजितो
रीतिज्ञो रिपुनाशनो रथिवरो रुद्धेन्द्रियो रोषजित् ।
राज्यस्थो रहितव्यथो रमणकृद् रामायणख्यापितो
नाम्ना रेफमुखात्मनां रघुपते पञ्चाशिका मुक्तिका । (श्लोकः-३)

---

१. हिन्दीभाषामपि सूरतुलसीरहीमविहारीप्रभृतयः कवयो मुक्तककाव्यरचने निपुणमतयो दरीदृश्यन्ते ।

रामनामविज्ञप्तिसारे कविर्भगवत्प्रपत्तये कृतश्रमः सततं रामस्य चरणावेव ध्यायं ध्यायं तदीयमहिमानं गायं गायमज्ञानान्धकारे निमग्नां दोषनिकरान्वेषिणीं बुद्धिं भक्तौ निवेषयन् भक्तजनार्तिहरं भगवन्तं तदीयवात्सल्यानुगं भक्तकोटिशतोद्धारं स्मारयन् स्वोद्धारायापि दैन्यातिशयं दर्शयति । यथा—

इदं हि महदद्भुतं त्वयि कृपाकरेऽपि स्थिते
दुनोति विषवन्मनो विषयभोगचिन्ताभरः ।
न किन्तु तदसम्भवादिति वचोऽपि संगच्छते
क्व चण्डकिरणो रविः क्व च मृदुस्तुषारोच्चयः ॥ २० ।

भवतु भवभयघ्नो वाचमाकर्ण्य दीनां
रघुपतिरतितुष्टः सर्वदः सर्वदेति ।
सुचिरमनुविविच्य त्रिंशता पद्यराजे-
रिधमकृत गुमानी नामविज्ञप्तिसारम् ॥ ३० ।

'गङ्गाशतकम्' इति नाम्ना विदितग्रन्थे गुमानी आर्याछन्दोभिर्गङ्गाया महिमानं पौनःपुन्येन गायति । काव्येऽस्मिन् गङ्गायाः पुराणप्रोक्तं माहात्म्यमुद्घाटयन् तद्वारिसेवनफलस्याध्वरादेरपि व्यतिरेकमभिदधद् जगतीतले तदागमनकारणं पुराणकृदाधारेण व्याकुर्वन् शिवशिरस्यच्युतचरणयोश्च तत्स्थितेराध्यात्मिकं कारणं निरूपयन् महन्माहात्म्यायास्तत्स्तुतौ मन्दमतित्वात् त्रपापारवश्यं प्रकटयन् रामैकभक्तिमतः स्वस्योद्धाराय सविनयं प्रार्थयते कविप्रवरः । यथा—

सत्त्वगुणोपहितस्य त्वं किल परमात्मनो हरेः प्रपदात् ।
उदितासि सत्यमेतत् प्रमाणमिह तेऽद्भुतो महिमा ॥ ४ ।

जगतां पतिरपि यत्त्वां शिरसा दध्रे शिवः सबहुमानम् ।
स्पृहयति जगति जनोऽन्यः सेवितुमिह देवि किं चित्रम् ॥ ५ ।

रामैकभक्त्युरच्छदमामुच्य ज्ञानखड्गमुद्यम्य ।
युद्धयामि मृत्युना सह सुरनदि मे देहि साहाय्यम् ॥ ५८ ।

रामाष्टपदी—जगन्नाथाष्टकयोरपि कविर्भक्तिभरकोमलसुललितकाव्याञ्जलिना ध्रुपदभुंजगप्रवातवृत्ताभ्यां रामजगन्नाथपदेभ्यः प्रणतिं निवेदयति । यथा जगन्नाथाष्टके—

किमन्यैस्तपोभिर्वृतैरध्वरैर्वा किमेकाग्रतासाध्यनिष्ठैश्च योगे ।
भजध्वं जगन्नाथपादारविन्दं ह्रुवा नित्यमित्याह वाक्यं गुमानी ॥ ९ ।

भक्तिविज्ञप्तिसारनामको गुमानिग्रन्थश्चित्रपदावलिभिरुपेतो 'रामचित्रपदावली' इत्यपरनाम्ना प्रथितः श्लिष्टैः पदैर्गुम्फितः कवेरलङ्कारचातुर्यं पाण्डित्योत्कर्षं च विदधाति । स्वान्तःसुखाय विरचितापि कृतिरियं सर्वजनहितायेति तदीयाशीर्वादात्मकश्लोकैरनुमीयते । रामायणीयवृत्तानामुपादानमत्र कविः कौशलेन करोति श्लिष्टविशेषणमाहात्म्यात् । यथा—

सम्मानितगुरुवाक्यो[1] विरोचनस्यात्मने धृतस्नेहः ।
मार्गणनिर्जितवसुधः[2] स नोऽवताद् वामनो रामः ॥ ११ ।

ताराधिपतिसपत्नस्ताराधिपतिः[3] [4]स्वयं च तत्त्वेन ।
कुमुदस्फुटं वितन्वन्[5] रामो भूयात् सुधासूतिः[6] ॥ २९ ।

अलङ्कारेणालङ्कारगुणछन्दरसादिसमन्वितया कवितया च भक्तेः साम्यं सहृदयहृदयं बुद्धिं च सहैवाह्लादयति चमत्करोति च, यथा—

लुप्तोपमाभवघ्नी[7] ज्ञानातिशयोक्तिस्तु प्रतीपसमा[8] ।
[9]दीपकदीप्तिरिवोच्चैर्विहिततमोऽपह्नुतिर्भक्तिः[10] ॥ १२५ ।

छन्दोऽन्विता[11] रसाप्ता[12] सदलङ्कारा [13]विरामभावनिता ।
गुणहारिणी[14] सुधीभिः सुभगा भक्तिः[15] सुकवितेव[16] ॥ १२६ ।

भक्तिविज्ञप्तिसारेऽपि कविभंगवत्प्रपत्तये स्वीयं दैन्यमज्ञानपारवश्यान्निखिलदुष्कर्मकर्तृत्वम्, मर्यादापुरुषोत्तमस्य दाशरथिरामस्य करुणावरुणालयत्वाद् भक्तजनोद्धारकर्तृत्वं च व्याचक्षते। कवेरात्मनिवेदनं नेदृशमन्यत्र दृश्यते—

जानामि नार्चनविधिं जगदर्चितस्य नैव स्तुतिं तव सदागमसंस्तुतस्य ।
गीर्वाणनभ्यचरणस्य न च प्रणामं नान्यं प्रयामि शरणं तु निराकृतोऽपि ॥
न प्रापितं सुतपसा कृशतां शरीरं दानैर्न च क्षितिसुरा धनिनः प्रणीताः ।
सन्तर्पिता मखभुजो न मखप्रयोगैरेकागतिस्त्वमसि मे बत दुर्गतस्य ॥

(श्लोकः १५, १६)

---

१. गुरुर्बृहस्पतिरुपदेष्टा च । २. मार्गणं बाणं याचनं च ।
३. ताराधिपतिः बालिः बृहस्पतिश्च ।
४. तारः प्रणवः वा तारासीतारूपा महाविद्या, पक्षे रोहिणी तस्याधिपतिः स्वामी ।
५. पृथिव्या हर्षं कैरवं च । ६. अमृतोत्पादकश्चन्द्रः ।
७. अनुपमा पक्षे लुप्तोपमा लुप्ता उपमा यस्याः सा अतुल्या वा उपमानोपमेयवाचकशब्दानामन्यतमेन लुप्तोपमालङ्कारमेकः ।
८. प्रतीपमुपमानस्य उपमेयत्वकल्पनमिति अलङ्कारभेदः ।
९. एकक्रियाया बहुषु कारकेषु वा एककारकस्य बहुषु कारकेषु प्रवृत्तिदीपकम् ।
१०. प्रकृतं यन्निषिध्यान्यसाध्यते सा त्वपह्नुतिः ।
११. वृत्तबन्धेन इच्छया वा अन्विता ।
१२. रसैः शृङ्गारादिभिर्वा काम्यभूतेन प्रीतिरसेनाप्ता ।
१३. विश्रामत्वं पक्षे वैराग्यं वा विशिष्टं रामत्वम् ।
१४. सत्त्वादिगुणानां हारिणो पक्षे सद्गुणसमुदायवती ।
१५. उत्तमैश्वर्यवती सुन्दरी वा । १६. श्लोकाविमौ काव्यस्वरूपं प्रति कवेर्दृष्टिं द्योतयतः।

महोपनिषदर्थसज्जनिततत्त्वविद्योतिनी गुमानिकृता पञ्चपञ्चाशिकाऽऽत्मबोधैषिणां नितान्तमुपकारिणी कृतधियां च मनोहारिणी सकलोपनिषदां महातात्पर्यं पञ्चपञ्चाशत्पद्यैर्निरूपयति। एक एवात्माऽविद्ययोपहितो बहुधा विभाव्यते, जीवानामानन्त्यं मायोपहितत्वाद् घटाकाशादिवत्। ब्रह्म एव मायोपहितं सदभिन्ननिमित्तोपादानकारणतया जागतिकप्रपञ्चकारणम्, ईश्वरजीवभेदयोरौपाधिकत्वम्, जाग्रदाद्यवस्थात्रयस्य मिथ्यात्वम्, ज्ञानाग्निकर्मणां दाहे प्रारब्धे भोगे च ब्रह्मण्यवस्थानम्, शरीरस्य क्षणिकत्वम्, महावाक्यानामपरोक्षानुभूतिरेव मुक्तिकारणमिति वेदान्तसिद्धान्तानां पञ्चपञ्चाशिकायां यथातथं निरूपणं कवेर्दुर्बोधदार्शनिकज्ञानस्य निदर्शनम्। दिङ्मात्रोदाहरणमत्र—

ब्रह्मणि कारणभूते मुहुर्मुहुः प्रोद्भवन्ति लीयन्ते।
बहवो गुणवति जीवाश्चलाम्भसीवोर्मयः सरसि॥ १७।
रूपाभिधानभूतं भेदोपाधिं निरस्य तत्कालम्।
ब्रह्मत्वमेति जीवः कनकत्वं कुण्डलादिव॥ १८।

गुमानिकवेर्ज्ञानभैषज्यमञ्जरी संस्कृतसाहित्येऽद्वितीयं स्थानं धत्ते। कृतिरीदृशी न केनापि शेमुषीजुषा व्यरचि निखिलवाङ्मये। अशीतिश्लोकेषु निबद्धेऽस्मिन् ग्रन्थे पद्यानां पूर्वार्द्धपादयोराध्यात्मिककल्मषप्रशमस्योत्तरार्द्धयोश्च शारीरिकरोगहानस्योपायास्तत्त्वज्ञानायुर्वेदयोः सम्मता निगदिताः। वातज्वर-पित्तज्वर-कफज्वर-विषज्वर-अतिसार-जीर्णज्वर-अर्शरोग-संग्रहणी-अजीर्ण-क्रमिरोग-रक्तपित्त-क्षय-नासारुधिरप्रवाह-कासरोग-छिक्का-श्वास-स्वरभेद-अरुचि-छर्दिरोग-अपस्मार-कामला-आमवात-शूलरोग-उदावर्त-मूत्रकृच्छ्र-प्रमेह-शोथ व्रणरोग-अम्लपित्त-उपदंश-कुष्ठरोग-कुनख-तारुण्यपिटकविपादिका-इन्द्रलुप्त-अरुंषिका-कण्डूरोग-चर्मकीलरोग–मस्तकरोग–नक्तान्ध्य-नेत्रपुष्प-बाधिर्य-कर्णरोग-नासिकारोग-कर्णप्रवाह-स्तम्भ-पीनस-ओष्ठरोग-दन्तरोग-मुखरोग-प्रमदरोग-गर्भस्राव-प्रसवरोग–स्तन्यवृद्धि–बालस्तन्यापान-बालरोग–चित्रकुष्ठ-पलित-वाजीकरण–शुक्रस्तम्भ-स्त्रीवशीकरण–लिङ्गवृद्धि-गर्भनिवारण-भगसंकोच-कुचवृद्धि-निद्रा-निद्रानिवारण–रोमोत्पत्ति-रोमनिवारण-केशवृद्धि-सर्पविष-वृश्चिकविष-स्थावर-जङ्गमविष-विषमद-इति शारीरिकरोगाणामौषधिनिरूपणं कविर्यथासंख्यं मोह-भवताप-संसारदुःख-संसृति-हृदयग्रन्थि-संसारप्रवाह-महत्तत्त्व-अविद्या-आत्मबोधाभाव-दुरित-भवकृच्छ-संसार-संसृतिचक्र-संसार-अहंमति-अर्थसन्देह–दुर्दमपाप-मिथ्यादृष्टि-अहंकृति-भ्रम-भवतृष्णा-भवदोष-क्लेशभय-जन्मग्रहण–विषयरस-दुष्कृतदुःख–प्रमाददोष-शोक-भवक्लेश-पाप-हृदयसंशय-जाड्यदोष-दुर्वृत्त-विकर्मदोष-पापताप-आत्ममौढ्य-वाग्विवाद–जाड्यदोष–शोक-काम-क्रोध-कुमति-दुर्मति-दुःख-प्रज्ञामान्द्य-मृगतृष्णा-लोभ-हिंसा-भवपीनस-मद-पाप-व्यामोह-नास्तिकता-अदृढबोध–अबोध–नर्वाद्धि–शास्त्रानभ्यास-योग-विप्लव-अवशीभूतचित्त-पाप-सिद्ध्यलाभ-यतिव्रताभाव-बुद्ध्यवशीकरण-छल-दुर्मखता-अविद्यानिवृत्यभाव–बुद्धिविनाश-अशिव-कर्मश्लेष-प्रकृतिवृद्धि-स्वाज्ञान-दुर्नय-बाह्याभ्यन्तरमल-भयेत्यात्मसाक्षात्कार-प्रतिबन्धककारणैस्तदुपशमहेतुभिश्च सह क्रमेणैकैकस्मिन् श्लोके करोति। यथा—

संसारे कफज्वरे च

शमयति शमः समेतः सन्तुष्ट्या सन्ततं भवक्लेशम्।
क्वाथः कलिद्रुमोत्थः कफज्वरं सौपकुल्यतुल्यम्॥ ४।

अविद्यायां संग्रहिण्यां च—

श्रवणेन यात्यविद्या मननिदिध्यासनानुतापेन ।
अपि च कपित्थमहौषधयुतेन तक्रेण संग्रहणी ॥ १० ।

भ्रमे अपस्मारे च—

न मृषा यद्गुरुवाश्यं प्रजायते सावधारणं भ्रमजित् ।
सत्यं च यत् सतैलं लसुनमपस्मारविध्वंसि ॥ २२ ।

पापे पलिते च—

नित्यनिमित्तजकर्माचरणान्नापैत्यघं कथङ्कारम् ।
भृङ्गच्छतिलगिलनात् कथमिव न पलायते पलितम् ॥ ६२ ।

**३. नीतयः, लोकोक्तिगर्भिता। समस्यापूर्तयश्च**

व्यवहारज्ञानं काव्यस्य प्रयोजनेष्वन्यतमम् । व्यवहारज्ञानोपपादनमुररीकृत्यैव काव्यकर्तृभिर्नीतिग्रन्था निर्मिताः । सुभाषितग्रन्थेषु प्रभूतान्युदाहरणानि नीतिकाव्यानां दृश्यन्ते। कवेर्गुमानिनः 'नीतिशतकम्'[1] 'हितोपदेशशतकम्' नामकं नीतिकाव्ये न केवलं भर्तृहरेर्नीतिशतकवत् सामान्यमुखेन नीतीः प्रकटीकरोति अपि तु प्रसङ्गानुकूलैः पौराणिकाख्यानैस्ताः सविशेषं समर्थयत् तस्मादपि व्यतिरिच्यते । अत्र क्रमेण श्लोकानां प्रथमचरणत्रयेषु पौराणिकाख्यानानि चतुर्थचरणे च तदाधृतं नीतिनवनीतमर्थान्तरन्यासेनोपपादयति कविः । नीतिशतके कविः क्षेमेन्द्रमेव सर्वथानुकरोति, न भर्तृहरिम् । तदुक्तं श्रीबलदेवोपाध्यायेन[2]—गुमानिकवेरुपदेशशतककाव्यं शतेनार्याभिर्निबद्धं क्षेमेन्द्रस्य चारुचर्यया प्रभावितं नीतिकाव्यमस्ति, यत्राद्यं पादत्रयं पद्यानां प्रख्यातपौराणिकाख्यानाङ्कितम्, तुरीयश्च पादस्तज्जन्योपदेशाभिव्यञ्जकः। कविता शतके प्रसादमयी । अनया शैल्या प्रभावितो दक्षिणामूर्तिकविः 'लोकोक्तिमुक्तावलीम्' व्यरचयत् । कवेर्नीतिशास्त्रनैपुण्यप्रतिपादका द्वित्राः श्लोका द्रष्टव्याः—

त्यज पार्थैः सह रणमिति विदुरेणोक्तोऽम्बिकासुतः सततम् ।
तदमत्वा क्षयमापत् 'कर्तव्यं भाषितं सुहृदाम्' ॥ १५ ।
आदिशल्लक्ष्मणहेतोर्मारुतिमानेतुमौषधी रामः ।
ता आनयत् सुदूरात् 'धुर्यः कार्ये नियोक्तव्यः' ॥ ३९ ।
असुरोहितमुपदिष्टः प्रह्लादो नारदेन गर्भस्थः ।
तत्त्वविदां प्रवरोऽभूत् 'हितोपदेशान् सदा शृणुयात्' ॥ ९९ ।

---

१. शतकमिदं गुमानिकाव्यसंग्रहे १८९७ ई० वर्षे अल्मोडातः पण्डितदेवीदत्तपाण्डेयेन सङ्कलितम्, काव्यमालाया द्वितीयगुच्छकेऽपि स्वातन्त्र्येण प्रकाशितम्, किन्तु वाराणसेयचन्द्रावतीश्यामासंस्कृतविद्यालयस्य भू० पू० व्याकरणसाहित्याध्यापकेन श्रीमता नन्दनझामहोदयेन गुमानिकवित्वमात्मन्यारोप्य निजनाम्ना १९३६ ई० वर्षे लक्ष्मणमुद्रणालयात् (काशीतः) मुद्रापितमित्याश्चर्यास्पदमहो नन्दनस्य कौशलम् ।

२. संस्कृतसाहित्य का इतिहास—पृष्ठ २९७, प० बलदेवोपाध्यायः ।

शतकमिदं प्रायः सर्वैरेव समीक्षकैरैतिहासिकैश्च समादृतमिति नैतन्महत्त्वे मनागपि संशयावकाशः।[१] वरदाचारिमते 'गुमानिर्वेकटधारिविरचितौ उपदेशशतक-सुभाषितकौस्तुभ-ग्रन्थौ जनान् जीवने सदाचरणशिक्षणायालम्'।

समस्यापूर्तीनामपि परम्परा प्राचीनैव। राज्ञां विनोदनाय पुरा तदाश्रिताः कवयस्तदनुरोधवशवर्तिनो भूत्वा कामपि समस्यामाश्रित्य कवयन्ति स्म। भोजप्रबन्धे मनोहार्युदाहरणानि समस्यापूर्तीनाम्। रहीमनामको हिन्दीकविरप्येवंविधानि संस्कृतहिन्दीमाश्रितानि पद्यानि व्यलिखत्। गुमानीकविर्हिन्दी-कौर्माचली-नेपालीभाषाणां लोकोक्तीः समाश्रित्य बहूनि पद्यानि कवयाञ्चकार, यत्राद्यं पादत्रयं संस्कृते तुरीयश्च पादो हिन्द्यादिषु समुल्लसति। प्रयोगोऽयं न सर्वथा नावीन्यं विदधाति, संस्कृतप्राकृतयोः पालिप्राकृतयोर्वा मिश्रणस्य प्राचीनसाहित्ये मध्यकालीनेऽपि काव्ये संस्कृतहिन्द्यादिमिश्रणस्यैकैकस्मिन् पद्ये दर्शनात्। लोकोक्तिसमन्वित-समस्यापूर्त्यात्मकपद्यैर्गुमानिकवेर्विविधभाषाविलासाभिरुचिर्लोकोक्तिज्ञानं जीवनस्य यथार्थानुभवश्च व्यज्यते।

कवेः समस्यापूर्तौ नैपुण्यमवेक्षणीयम्

पीयूषार्थं मथ्यमानाद् महाब्धेर्लेभे लक्ष्मीं लोकवन्द्यां मुकुन्दः।
कालप्रख्यं कालकूटं कपाली 'जो किस्मत् में है लिखा सो मिले है'॥ १२।

'भाग्यं फलति सर्वत्र न विद्या न च पौरुषम्' इत्युक्तिः संस्कृतेऽपि प्रथितैव। अन्यदप्युदाहरणमवलोकनीयम्—

यावद्बाणः कृष्णेनाजौ न ध्वस्तो रणसंवेगी
तावत्त्रातुं नग्ना माता तामूचे हरिसंवेगी।
अद्य श्वो वा हन्तव्योऽयं पुत्रस्ते जगदुद्वेगी
'बकरी अपने बच्चे कारण कवलौ खैर मनायेगी'॥ २०।

एवमेव कौर्माचली-नेपाली-भाषयोर्लोकोक्तयोऽपि कविना स्ववाग्विलासेन विभूषिताः, अत एव ग्रियर्सन्महोदयोऽपि व्याहरति[२]—

He composed principally in Sanskrit, but he is never the less best known for a number of curious verses in each of which first three line are in Sanskrit, the fourth is in Kumauni or Hindi. There are very popular in northern India.

---

१. The Upadeśaśataka and subhașita Kaustubha seek to instruct people in good aspects of life and were composed respectively by Gumani.

—History of Sanskrit Lit. P. 962.

२. The Indian Antiquary, vol. IX, Part IV. Page 109.

३. समसामयिकस्थितिपरिचायकानि काव्यानि—

विभिन्नरुचिर्देशाटनप्रियो गुमानी। आसेतुहिमालयपर्यन्तमसौ परिबभ्रामेति तदीय-काव्यालोचनेनानुमीयते। देशकालादेर्यादृशं चित्रणं गुमानिकाव्येषु दृश्यते, न तादृशमन्यत्र। तत्समक्षमेव कूर्माचले आंग्लानामाधिपत्यमभूत्। श्रीहर्षसदृशाः कवयोऽपि सम्मुखमेव राष्ट्रं यवनाक्रान्तं पश्यन्तोऽपि दमयन्त्या नखशिखवर्णन एव भूयो भूयः सगर्वमानन्दिताः, न दैशिकपारतन्त्र्यस्य मनागपि चिन्ता तेषां चित्तेऽधिरूढा। अन्येऽपि बहवः संस्कृतकवयो राष्ट्रियपारतन्त्र्यवेलायां तूष्णीं स्थिता वैदेशिकशासकानां गुणगणानुवाद एव वैदुष्यं प्रदर्शन्तो न किञ्चिदपि राष्ट्रियचिन्तनं चक्रुः। गुमानिकविस्तु परतन्त्रतामसहमान आंग्लशासकान् यथाशक्ति लेखनीं व्यापारयित्वा भृशं भर्त्सयामास। अंगरेजराज्यवर्णनेऽसौ तेषां स्वरूपम्, वेशभूषाम्, शासन-पद्धतिम्, तत्कृतात्याचारादिकं वर्णयाम्बभूव। तेषां वेदविरोधितया, वर्णाश्रमधर्महीनतया, यावनी-आंगरेजीलिपिज्ञेषु बहुमानतया चेखिद्यते स्म गुमानिकवेश्चित्तम्। कलिना सह फिरङ्गिणां साम्यं दर्शयन्नसौ राष्ट्रभक्तावनुरक्तो व्याजहार—

कलिः फिल फिरंगिणा सकलिना फिरङ्गी जनो
नभा इव तडित्वरा सनभसा तडित्वानिव।
विभाति सुतरामहो कथयते गुमानी कवि-
र्मिथः फलविधायको भवति योग्ययोः संगमः॥ ५।

दूरस्थद्वीपवासी 'अंगरेजः' जलधिपथेनास्मिन् देश आगत्य विजित्य च विशालं राज्यं बुभुजे। तस्य दुर्गविन्यासपूर्वशिविररचना, बादशाहाज्ञया शासनसञ्चालनं नीतिनिरूपणं च सर्वमपि यथातथं वर्णयति कविः।—यथा—

सिन्धोरुत्तरतस्त्रियोजनमिते गाङ्गे तटे पत्तनं
कल्कत्ताधिदमस्ति यत्र वरदा काली करालानना।
तत्राष्टौ दृढमन्त्रकौशलविदो गौराङ्गनामन्त्रिणो
निश्चिन्वन्ति नयानयं प्रकृतिषु स्वं बादशाहाज्ञया॥ ६।

लाटद्वयप्रकरणे कविरङ्गरेजशासकानां सैन्यसङ्घटनं यथातथं वर्णयाञ्चक्रे। सन्तरी-हवाल्दार-जमादार-सुवेदार-मेजर-कर्नल-जर्नलक्रमेण सर्वे सैनिका अधिकारिणश्च तोपादिशस्त्रास्त्रैः समन्विता युद्धाभ्यासनिरताः कविनाऽत्र दर्शिताः। न्यायालयेषु विभिन्नप्रशासनिकपदेषु च नियुक्ताः पदाधिकारिणस्तेषामुपाधयः कार्यपद्धतिश्चापि सम्यङ्निरूपिता लाटद्वयप्रकरणे—

मण्डलेष्वधिकृतः 'पटवारी' क्षेत्रमानलिखनव्यवहारी।
ग्रामपो भवति 'मालगुजारः' तत्करेण करदः कृषिकारः॥ २८॥
'जज्जोऽपि' 'लाटस्य' निदेशवर्ती विवादिलोकव्यवहारदर्शी।
तस्यानुगाः 'नाजिररोबकारी' 'नवी मुसद्दी' 'चपरासि'संज्ञाः॥ २९।

हिन्दुराज्ञां पारस्परिककलह एव पारतन्त्र्यकारणमिति मन्वानः कविस्तानपि निनिन्द । गुमानिनः समये देशेऽस्मिन् विभिन्नधर्मसम्प्रदायावलम्बिनोऽवधूतवैराग्युदासीननानकपन्थिनः साम्प्रदायिककलहेषु, राजानश्च सुरासुन्दरीं सेवमाना द्यूतशतरंजादिक्रीडासु निमग्ना बभूवुः । दस्युधूर्तचोराणां भयेन भीतचित्ता जनता दैन्यमुपगता । कविनानेनैवंविधायाः समसामयिक-सामाजिकराजनैतिकसांस्कृतिकस्थितेः समीचीनं वर्णनं कृतम् । कदाचिद्-गुमानिनः काले कूर्माचले जना दुर्भिक्षपीडिता अभ्यासन्निति तदीयकौर्माचलीभाषानिबद्धानां पद्यानामवेक्षणात् प्रतिभाति । सुभिक्षे, दुर्भिक्षे च जनानां कालयापनं कथमभूदिति गुमानी यथातथं वर्णितवान् । काशीपुरे गुमानिनोऽनुरागातिशयः, काश्या सहासौ तत्साम्यमभिवदति काशीपुरवर्णने ।[1]

४. स्फुटकाव्यानि

अपारे काव्यसंसारे कविरेकः प्रजापतिः ।
यथास्मै रोचते विश्वं यथेदं परिकल्प्यते ।[2]

यस्मिन् काले देशे च कवेर्यादृशा भावा हृद्यवतिष्ठन्ते, तादृशा एव काव्येषु निबध्यन्ते । रसिकप्रवरस्यास्य कवेः काव्ये वस्तुविधाने वैविध्यमस्ति । परिहासप्रियः कदाचिदसौ द्यूत-वर्णनम्, चतुःशारिका(चौपड़)वर्णनम्, शतरञ्जवर्णनम्, ताम्बूलवीटिका-तमालपत्रादिमाहात्म्यं लिखति, कदाचिच्च सज्जनप्रशंसनेन दुर्जनं दूषयति, पुनः परमानन्दमुकुन्दचिन्तने समाहितचित्तो भगवन्तं राघवेन्द्रं ध्यायति । द्यूतादिविद्याया रामणीयकं निरूपणं कवेस्तद्विषयकज्ञानं द्योतयति । द्यूतचतुःशारिकाशतरंजविद्याया विधिरद्यावधि गुमानिनं विहाय न केनाप्युद्घाटिता संस्कृत-वाङ्मये । शतरञ्जविद्यानिरूपणात्मकम् 'सद्रञ्जनाष्टकम्' काव्यं कथाकारप्रेमचन्द्रस्य 'शतरंज के खिलाड़ी'नामिकां कथां संस्मारयति । पद्यमिदमास्वादनीयम्—

साहः किस्तमवापितो न चलितुं शक्तो वजीरादिभि-
र्नं स्वीयैर्यंवधीयते यदि तदा मा तं विदुस्तद्विदः ॥
मात्सा पञ्चविधा वजीरजनिता नागाद्रथात् संभवा
वाहोत्था भटजा यथोत्तरमतिश्लाघ्याजयस्तद्विधो ॥ ८ ।

(सद्रञ्जनाष्टकम्)

परिहासप्रियस्य गुमानिनो लेखिनी एकस्मिन्नेव श्लोके तमालपत्रस्य महिमानं भिन्न-ध्वनिना तन्निन्दां च विदधाति—

---

१. यहाँ ढेला नदी उत वहतः गङ्गा निकट में ।
यहाँ भोला भोटेश्वर रहत विश्वेश्वर वहाँ ।
यहाँ सण्डे दण्डे कर धरत फिरत साड उतही,
फरक क्या है काशीपुर शहर काशीनगर का ॥ ५ ।

२. अग्निपुराणम्—३३९, १० ।

वातश्लेष्मरदामयघ्नममृतप्रायं प्रियं भोगिनां
श्लिष्टैरप्यनिवारितं व्रतदिने भोज्यावसानोचितम् ।
अङ्गुष्ठेन शनैः शनैः करतले सम्मर्द्दितं चूर्णयुद्
भुक्तं यैर्न तमालपत्रमबुधैर्धिक् जन्म तेषां भुवि ॥ १ ।

**उपसंहारः**

विविधशास्त्रमर्मज्ञो गुमानी कूर्माचले गृहे गृहे भूयसीं प्रसिद्धिं प्राप्तोऽपि संस्कृतसाहित्ये उपेक्षितप्रायो दृश्यते । राज्याश्रितोऽप्यसौ न राज्ञां स्तुतौ प्रावर्तत । देशकालादिकमुपेक्ष्य चेदनेनापि कविना काव्यं कृतं स्यात्, तर्हि नूनमसावपीतरकविवत् प्रतिष्ठापदवीमभजत् । स्वाभिमानी गुमानी नैतत् स्वीचकार मनसाऽपि । अस्तु, 'कालो ह्ययं निरवधिर्विपुला च पृथिवी' इति भणित्यनुसारं भारतीयैरुपेक्षितोऽपि कविरयं ग्रियर्सनसदृशैः पाश्चात्यसमीक्षकैर्भृशं प्रशंसितः ।[1]

● ● ●

---

१. He (Gumani) was a prolific auther both in Sanskrit and in Hindi. His works are still greatly admired in the land of his birth but his reputation in the plains of India, which as we have seen extend to Tirhut some five hundred miles away, depends so for I am aware an the short verses.

The Indian Antiquary. vol–XXXVIII. Page 177.

# आदिकवेर्महाकविभारवेश्च नायकसङ्घटना

श्रीशशिधरशर्मा, वाचस्पतिः

प्राध्यापकः—पञ्जाबविश्वविद्यालयस्य

**रामायणमहाभारतयोरुपजीव्यबृहत्काव्यत्वम्**

महर्षेर्वाल्मीकेर्वेदव्यासस्य च कृतिरत्ने रामायणं महाभारतञ्च नवानां नित्यनवानां रसानां सागरौ, ययो रसो न कदापि सामाप्नुते, देशस्य कालस्य च सीमानं प्रलङ्घ्य समग्रं जगदाप्याययति, आकण्ठं मज्जयति च। इमे काव्यरत्ने भारतस्य हृदयीभूते, ततोऽप्यधिकञ्च सुवर्णद्वीप-(Sumātrā)-यवद्वीप (Jāwā)-वरुणद्वीप (Bornio)-मलयद्वीपा (Malāyā )-दीनाम्। आभ्यां भारतस्याध्यात्मिकगरिम्णो यः प्रदीपोऽवादीप्यत, तस्य प्रभाऽद्याप्युद्दीप्ता तदैवोद्दीपिष्यते च। आभ्यां रससागराभ्यां रसराशिं सङ्गृह्णाना न जाने कियन्तः श्यामलाः कोमलाश्च जलदाः समये समये समुदतिष्ठन्, न जाने कियतश्च शीकरासारानवर्षन् यैस्त्रितापसन्तप्ताया धरित्र्यास्तापो नाशितः, सरसतां च सा प्रापिता। भासकालिदासभारविमाघभवभूतिक्षेमेन्द्रहर्षैः सर्वं रामायणान्महाभारतादुभाभ्यामपि वा स्वकृतिमल्लिकानामुपादानान्युपात्तानि, रसश्च प्रवृष्टः। न कथानकान्येव, भावाभङ्ग्यश्चाप्यचायिष्यत। अत एव रसज्ञचकोरैः सततं चीयमानां वल्मीकभवमुनीन्द्रसम्भवां कथां चन्द्रिकात्वेन पर्याचिन्वन् चिन्तनशीलाः। तथा चोक्तम्—

कवीन्दुं नौमि वाल्मीकं यस्य रामायणीं कथाम्।
चन्द्रिकामिव चिन्वन्ति चकोरा इव साधवः॥[1]

महाभारतमपि रामायणतुल्यमेव कवीनां नवनवप्रतिभोल्लासकम्। यथोक्तम्—

इतिहासोत्तमादस्माज्जायन्ते कविबुद्धयः।
पञ्चभ्य इव भूतेभ्यो लोकसंविधयस्त्रयः॥[2]

अपि च—

इदं कविवरैः सर्वैराख्यानमुपजीव्यते।
उदयप्रेप्सुभिर्भृत्यैरभिजात इवेश्वरः॥[3]

कथं न स्यात्, यतः—

यथा समुद्रो भगवान् यथा मेरुर्महागिरिः।
उभौ ख्यातौ रत्ननिधी तथा भारतमुच्यते॥[4]

---

१. (i) शार्ङ्गधरपद्धतिः १७२; (ii) सुभाषितरत्नभाण्डागारम्, प्र० २–१।
२. महाभारते, आदिपर्वणि २,३८५।
३. तदेव–२,३८९। ४. तदेव–६२,४८।

**संस्कृतकवीनां मध्ये भारविस्तत्काव्यकथास्रोतश्च**

संस्कृतेषु महाकविषु कालक्रमेणैव काव्यगुणैरपि कालिदासादनन्तरं महाकवेर्भारवेर्नाम रसिकरसनोपरि प्रतिष्ठते। 'एकश्चन्द्रस्तमो हन्ति न च ताराः सहस्रशः' इत्यनुसरन्त्या एकया **'किरातार्जुनीयम्'** इत्याख्यया कृत्यैव भारविरमरत्वमयासीत्। तत्र वीरवरवरेणार्जुनेन कौरवैः कुनयेन मुषितस्य राज्यस्य लब्धये देवेशितुर्महादेवस्य च यथोत्तरं समाराधनं तत्कृतायां पराक्रमप्रकर्षपरीक्षायां समुत्तरणञ्च रमणीयमवर्णिषाताम्। इदं काव्यमात्मनः स्वयमुपमानम्। पञ्चमहाकाव्यानां सुरसरस्वत्याः टीकाकारो मल्लिनाथ एनन्नारिकेलफलनीकाशमाह, यत् खलु विभक्तञ्चेद् विरतिविहीनमास्वादं प्रसूते—

नारिकेलफलसम्मितं वचो भारवेः सपदि तद् विभज्यते।
स्वादयन्तु रसगर्भनिर्भरं रसिका यथेप्सितम् ॥[1]

महाकवी भारवी भगवतः कृष्णद्वैपायनस्य ऋणं नापेक्षते वर्णनम्। सम्पूर्णं कथानकमेव महाभारते समाश्रितम्।[2] महाभारतस्य लघुकथानकं कविना परिष्कृतैः प्रसारिभिश्च कलास्रोतोभिर्मञ्जु समुपबृंहितम्।

**रामायणप्रभावस्यालक्षितत्वे हेतुस्तस्यापरिहरणीयत्वञ्च**

एवञ्च कथायाः पात्राणाञ्च कात्स्न्येन श्रीमन्महाभारताधारिततया संस्कृतसाहित्येतिहासकृतः समीक्षकाश्च तेन सहैव तस्य साम्यवैषम्यादिसमीक्षणे व्यापृतास्तत्र रामायणीयप्रभावं न प्राभवँश्चिन्तयितुमपि। भावुकानां धुरि संभावितो भारविः कथं नु नामाक्षमिष्येतापेक्षितुं क्षमातलस्यादिमं कविम्, यदर्थमुक्तम्—

छन्दोविचित्रैर्निहितैः क्रमेण पदैः समन्तान्मसृणीकृतान्तः।
निषेव्यते वर्णमहाटवीषु यदेष दिव्यैरपि काव्यमार्गः॥

यश्चापहरणीयश्रयणः कविकर्मप्रवृत्तानाम्, यतः—

भास्वद्वंशवतंसकीर्तिरमणीरङ्गप्रसङ्गस्वनद्
वादित्रप्रथमध्वनिर्विजयते वल्मीकजन्मा कविः।
पीत्वा यद्वदनेन्दुमण्डलगलत्काव्यामृताब्धेः किम-
प्याकल्पं कविनूतनाम्बुदमयी कादम्बिनी नृत्यति॥

कविवरेण भारविणेति। इदन्तु साध्ववधारणीयं मत्सुविस्तरतरं श्रीमदादिकवेः काव्यं सागरसङ्काशम्। तदपेक्ष्य प्रतनुतरपरिमाणञ्च भारवेर्मानससमानम्। यत्सहस्रांशोऽपि न रामायणस्य किरातार्जुनीयमिति पूर्वत्र भूम्ना यद्वर्णितं तदपरत्र तनिम्नैवेति। तनोस्तनिमन्यपि भाववैभवन्तु रामायणीयं भारवेर्भारती सम्यगगोप्सीदेव। दिङ्मात्रमुदाहरामः।

---

१. घ० प० उपक्रमश्लोकः—६।

**समीक्षणस्याधारो धर्मः**

वाल्मीकेर्मुख्यस्वरो धर्मस्य। श्रीरामो मूर्तिमान् धर्मः। 'रामो विग्रहवान् धर्मः'[1]। आदिकविर्मुहुर्मुहुरमुं धर्मज्ञः[2], धर्मनित्यः[3], धर्मात्मा[4], धर्मवत्सलः[5], धर्मभृतां वरः[6] इत्यादिभिर्विशेषणैर्विभूषयति। धर्महेतोरेव रघूद्वहेन प्राज्यमपि राज्यं निःसङ्गं कथं तृणवदत्याजीति च्छाययेव सदानुगतया तदेकगतिकया सीतयैव किमपि चारुतरमचित्रि—

धर्मोपदेशात् त्यजतः स्वराज्यं
मां चाप्यरण्यं नयतः पदातेः।
नासीद्व्यथा यस्य न भीर्न शोकः[7] ॥ इति।

धर्माधारा सचराचरा त्रिलोकी धर्मनाशो नश्यतीत्यभ्यमन्यत मान्यानामग्रणीरादिकविः। यथाह—

ततो धर्मे विनष्टे तु त्रैलोक्यं सचराचरम्।
सदेवर्षिगणं सर्वं विनश्येत्तु न संशयः ॥[8]

एवञ्चोचितमेव यत् स रामं धर्मनिष्ठया हिमालयेन तुलनीयमकलयत्—'स्थितः स्वधर्मे हिमवानिवाचलः'[9] इति।

अतः खलु निसर्गप्राप्तसर्गमिदं यद् भारविः श्रीमद्रामायणमहाभारतोभयसारधृतहृदयो महाभारतादिव रामायणादपि गवेषणाप्राक्षिकं माक्षिकरसातिशायिनं रसं स्वैरं समग्रहीदिति।

**स्थूलसूक्ष्मप्रभावविवेकः**

द्विविधः खल्वनुभावः श्रीमदादिकविगव्या उल्लालसीति महाकविभारवेः कृतौ। नायकसङ्घटनायाः संवादः स एकः। पदपदार्थप्रभृतेश्चापरः। स चान्तरङ्गतया प्रतीयमानोऽपि परमार्थविचारे पुनः स्थैर्यवानेव, आपातदर्शिनामपि स्फुटीभवितुमर्हत्वात्। अन्यत्र विशिष्याश्लिष्टोऽप्यसावस्माभिः। पूर्वः पुनः सूक्ष्मग्राहिणामेव विषय इति सूक्ष्मः। तस्मात् कृतितल्लजयोर्नायकसङ्घटनात्मकः स एवात्र मुख्यभावेन भावनाविषयीक्रियते।

वीरवारवरोऽर्जुनः किरातार्जुनीयस्य नायक इति काव्यरत्नस्य नाम्नैव स्फुटीक्रियते। तत एवाह मल्लिनाथः—'नेता मध्यमपाण्डवः'[10] इति। स च महाभारतचित्रितानां पात्राणां मुख्यं रत्नमित्यत्र च कस्य वा विसंवादः? तथापि सूक्ष्मेक्षिकया प्रतीयते यत् किरातार्जुनीयेऽर्जुनं नेतृपदं नयता श्रीमद्रामायणनायकस्य भगवतो रामचन्द्रस्य गुणानां विशिष्यैव च विशिष्टानां सन्निवेशो विशिष्यावध्यातम्, किरातार्जुनीयस्य नायकोऽपि तारस्वरेणोद्घोषयति यदरिनिकरेणाति-

१. वा०.रा० ३–३७।१३; ४।३८।१३ इत्यादिः। २. तदेव १–१–१२।
३. तदेव – २।३७।१९। ४. तदेव —२।२८।२; २।९७।२७; २।१११।२७ इत्यादि।
५. तदेव—२।२८।१। ६. तदेव—२।३७।१४। ७. तदेव —५।३६।२९।
८. तदेव—७।१०६।१०। ९. तदेव—२।११२।३०।
१०. द्रष्टव्याः म० भा० वनपर्वान्तर्गतकैरातपर्वणः ३८–४१ अध्यायाः।

क्रमः कियानप्यधिक्रियताम्, मानधनाः स्वधर्मं द्रढीयो धारयन्त्येव—'स्वधर्ममनुरुन्धन्ते नातिक्रमम्'[१] इति ।

महाभारतीयाद् धर्मात् किरातार्जुनीये प्रदर्शिते भेदः

ननु धर्ममहत्त्वं महाभारतेऽप्यनून् । सर्वासु स्थितिषु धर्मस्यापरिहरणीयत्वस्यास्थानात् ।[२] तत्कथमुच्यते भारविनिर्दशिते धर्मे रामायणीयस्य विशिष्य प्रभाव इति ? उच्यते, न खलु महाभारते धर्मस्य महिमानं हीनताङ्गतं प्रतिपादयाम, परन्तु धर्मस्य यादृशं रूपं महाभारते प्रदर्शितम्, न तद्रामायणे तादृशम् । शठं प्रति शाठ्यं धर्मः खलु पदे पदे निर्दशितो भगवता महाभारतकृता, न तथा रामायणे ।

ऋजुनाऽनृजुना वा मार्गेण पापाचारोऽपचरणीय इति क्व रामायणे विहायैकलं बालि-वधस्थलम् ? तत्रापि च मृगाणां यथाकथञ्चित् कृतायां मृगयायां शास्त्रोक्तमदोषत्वं राघवेन्द्रेण हेतूकृतम् ।[३] नानृजुधर्ममार्गो वाल्मीकेः क्वचनापि प्रतिपादनं गतः । एवमेव किरातार्जुनीयेऽपि सुष्ठु प्रतिष्ठापितम् । धर्मः खलु पाण्डुनन्दनानां सामान्यो विशेषः । स्वयं तत्रभवान् भगवान् कृष्णद्वैपायनो धर्मराजं प्रत्यवोचत—यद्यपि तव शत्रवो मध्ये धर्मपत्नीप्रधर्षणसाहसादीनि दुष्कर्माण्यनुष्ठाय धर्ममार्गाद् भ्रष्टा जाताः, तथापि त्वं धर्मात् पदमपि नाऽचलः सर्वास्तदीया अपकृतीः सोढवांश्च । तेन त्वया स्पष्टं प्रकटितं यद् धर्मगुणेष्वेव तवोत्कृष्टः प्रेमा, न सम्प-दादिष्विति—

पथश्च्युतायां समितौ रिपूणां धर्म्यां दधानेन धुरं चिराय ।
त्वया विपत्स्वप्यविपत्तिरम्यमाविष्कृतं प्रेम परं गुणेषु ॥[४]

धर्म्यां धुरमिति वदता वंशपरम्पराप्राप्तो धर्मरक्षणभारोऽपरिहरणीयतया वोढव्य एवेति सूचितं कविना । अग्रेतना ध्वनयश्च सुस्फुटाः । एवञ्च सिद्धं यद्रामायणमिव किरातार्जुनीयेऽपि महदेव महत्त्वं धर्मस्येति ।

---

१. किरा० ११।७८ ।

२. न जातु कामान्न भयान्न लोभाद्
धर्मं त्यजेज्जीवितस्यापि हेतोः ।
धर्मो नित्यः सुखदुःखे त्वनित्ये
जीवो नित्यो हेतुरस्य त्वनित्यः ॥
किञ्च—
ऊर्ध्वबाहुर्विरौम्येष न च कश्चिच्छृणोति मे ।
धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते ॥

३. वागुराभिश्च पाशैश्च विविधैर्नराः ।
प्रतिच्छन्नाश्च दृश्याश्च गृह्णन्ति सुबहून् मृगान् ॥ (वा० रा०)
यान्ति राजर्षयश्चात्र मृगयां धर्मकोविदाः ।
तस्मात्त्वं निहतो युद्धे मया बाणेनवानर ॥ (वा० रा० ४।१८।३८–४०)

४. किरातार्जुनीयम्—३।१५ ।

धर्मरक्षकत्वम्

किञ्च, न धर्मस्यानुष्ठातृत्वमात्रं तद्रक्षणेऽनुक्षणं सक्षणत्वमपि श्रीमद्रामभद्रसुभद्राहृदयेशयोः समानो विशेषः। श्रीरामचन्द्रो धर्मस्य रक्षक इति साम्रेडनमुक्तं रामायणे—'रक्षिता स्वस्य धर्मस्य।[1] धर्मस्य परिरक्षिता'[2], 'कर्मण्यः स्वधर्मस्यापि रक्षिता'[3], 'कुलोचितमतिः क्षात्रं स्वधर्मं वहु मन्यते'[4] इत्यादिना।

किञ्च—

अर्जुनस्यापि भुवनविदितो घोषः—'वयं वर्णाश्रमरक्षणोचिताः'[5] इति।

धर्मविरोधि श्रेयोऽपि स नोररीकर्तुमर्हः—'कथं वा दीयतामर्वाङ् मुनिता धर्मरोधिनी'[6] इति।

पात्रान्तरेषु, किं वहुना परिपन्थिपात्रेऽपि धर्ममनुरुध्यत एव किरातार्जुनीयकारः—

वसूनि वाञ्छन्न वशी न मन्युना
स्वधर्म इत्येव निवृत्तकारणः।
गुरूपदिष्टेन रिपौ सुतेऽपि वा
निहन्ति दण्डेन स धर्मविप्लवम्॥[7] इति।

तथा च वल्मीकभवस्येव भारवेरपि महान् धर्मरक्षणे निर्भरः।

परुषत्वात्यन्ताभावादि

रामायणकारेण भगवान् रामोऽवर्ण्यत—

स च नित्यं प्रशान्तात्मा मृदुपूर्वं च भाषते।
उच्यमानोऽपि परुषं नोत्तरं प्रतिपद्यते॥
बुद्धिमान् मधुराभाषी पूर्वभाषी प्रियंवदः[8]॥

किरातार्जुनीयस्य नायकेऽपीमे गुणा आशिखं परिपूर्णाः। अत एव च्छद्मवेष इन्द्रो यद्यपि तं पर्यदूदुषत्—

यः करोति वधोदर्का निःश्रेयसकरीः क्रियाः।
ग्लानिदोषच्छिदः स्वच्छाः स मूढः पङ्कयत्यपः॥[9] इति।
परवानर्थसंसिद्धौ नीचवृत्तिरपत्रपः।
अविधेयेन्द्रियः पुंसां गौरिवैति विधेयताम्[10]॥ इति।

---

१. वा० रा०—१।१।१४।
२. वा० रा०—१।१।१३।
३. वा० रा०—२।३५।३५।
४. वा० रा०—२।१।१६।
५. किराता०—१४।२१।
६. किराता०—११-७६।
७. किराता०—१-१२।
८. वा० रा०—२।१।१०;१३।
९. किराता०—११।१९।
१०. तदेव—११।३३।

अत्र 'त्वमपि तादृशमाचरन् मूढः नीचवृत्तिरपत्रपः' गौरिवेत्यादि व्यङ्ग्यमायापरं सुस्फुटम् । अर्जुनस्तु तमनुमन्यमानोऽपि प्रतिवचनेऽपि मधुधारापरं व्यकिरत्—

इदमीदृग्गुणोपेतं लब्धावसरसाधनम् ।
व्याकुर्यात् कः प्रियं वाक्यं यो वक्ता नेदृशाशयः ॥
न ज्ञातं तात यत्नस्य पौर्वापर्यममुष्य ते ।
शासितुं येन मां धर्मं मुनिभिस्तुल्यमिच्छसि ॥[1] इति ।

परुषपरुषाणि कैतवकिरातोदीरितानि च यथा —

अन्यदीयविशिखे न केवलं निःस्पृहास्य भवितव्यमाहृते ।
निघ्नतः परिनिर्वर्हितं मृगं व्रीडितव्यमपि ते सचेतसः ॥[2] इत्यादीनि ।

नाल्पमप्यभूवँस्तस्योत्तेजकानि । तदीयप्रत्युदीरितानां दिक् तत्रापि तादृश्येव । यथा—

समस्य सम्पादयता गुणैरिमां त्वया समारोपितभारभारतीम् ।
प्रगल्भमात्मा धुरि धर्मवाग्मिनां वनेचरेणापि सताधिरोपितः[3] ॥ इति ।

कविताकामिनीविलासः कालिदासः प्रतिपदमादिकवेरनुगोऽप्यत्र शैल्यां भिद्यते । रघूक्तं स स्वयं प्रगल्भत्वेन विशेषयामास—'इति प्रगल्भं रघुणा समीरितम्'[4] इति ।

सीतायाश्च परतः पत्युः कामचरत्वशङ्कां प्रौढं परिहरन्त्या अपि पूर्वं वाचिकं श्रीमदादिकविगवीमेवाश्रयीकुरुते । तद्यथा—

वाच्यस्त्वया मद्वचनात् स राजा वह्नौ विशुद्धामपि यत्समक्षम् ।
मां लोकवादश्रवणादहासीः श्रुतस्य तत् किं सदृशं कुलस्य[5] ॥

त्वया तु नरशार्दूल रोषमेवानुवर्तता ।
लघुनेव मनुष्येण स्त्रीत्वमेव पुरस्कृतम् ॥
अपदेशो मे जनकान्नोत्पत्तिर्वसुधातलात् ।
मम वृत्तं च वृत्तज्ञ बहु ते न पुरस्कृतम् ॥
न प्रमाणीकृतः पाणिर्बाल्ये मम निपीडितः ।
मम भक्तिश्च शीलं च सर्वं ते पृष्ठतः कृतम् ॥ इति ।

अत्र महान् द्वयोरभिव्यक्तौ भेद इति श्रीरामसम्बोधनवचनयोरिवकारस्य च लघुनेवेत्यत्र प्रयुक्तस्य मननेन झगिति प्रकाशते !

तथा च भारविरत्र विषये वल्मीकभुवो निकटतरः ।[6] महाभारते द्रौपदी च यदा तदा प्रणिभर्त्संयति धर्मराजम्; किरातार्जुनीयोपक्रमेऽपि[7] । परन्त्वत्र शालीनताऽधिका । एतदभिव्यक्ती-

---

१. किरा०—११।४१-४२ । २. तदेव—१३।४६ ।
३. तदेव—१४।६ । ४. रघु०—३।४७ ।
५. तदेव—१४।६१ । ६. वा० रा० ६।११६।१४; १६ । ७. किराता० १४।१ ।

नामौचित्यानौचित्ये नात्र विवेक्तव्ये । स्वरूपसारूप्यन्तु वाल्मीकिभाव्ययोः । भारविरत्र सविशेषमवदधौ । तस्यैव वचः—

ततः किरातस्य वचोभिरुद्धतैः पराहतः शैल इवार्णवाम्बुभिः ।
जहौ न धैर्यं कुपितोऽपि पाण्डवः सुदुर्ग्रहान्तःकरणा हि साधवः ॥ इति ।

अन्यत्रापि यदि वाल्मीकेः—

न वेत्ति रामः परुषाणि भाषितुम्[1] ।
न रामः कर्कशस्तात नाविद्वान्नाजितेन्द्रियः ।
अनृतं न श्रुतं चैव नैव त्वं वक्तुमर्हसि ॥[2]

तर्हि भारवेर्नतृनीकाशानां नररत्नानामपि—

अयातपूर्वा परिवादगोचरं
सतां हि वाणी गुणमेव भाषते ॥[3]

अर्जुनस्य वैदुष्यं गभीरार्थेन प्रवृत्तिनिवृत्तिवर्त्मनोर्दुर्लभमञ्जुविवेचनचुञ्चुना तस्य संवादेन ससुषममाविष्क्रियते । किञ्चातः परं जितेन्द्रियत्वं यत्स्वर्गसुन्दरीवर्गो मोघमनोमवचेष्टस्तेन मग्नाशीकृत्य स्वर्गं प्रतिनिवर्तितः—

मनोभिः सोद्वेगैः प्रणयविहतिध्वस्तरुचयः ।
सगन्धर्वा धाम त्रिदशवनिताः स्वं प्रति ययुः ॥[4] इति ।

अनृतासहत्वे त्विदमेव वक्तव्यं यत्किरातार्जुनीयस्य प्रवृत्तिरेव तस्मात् । यदाह नायकोऽनृताभियोगिनं कूटकिरातस्य दूतम्—

अभूतमासज्य विरुद्धमीहितं
बलादलभ्यं तव लिप्सते नृपः ।
विजानतोऽपि ह्यनयस्य रौद्रतां
भवत्यपाये परिमोहिनी मतिः ॥[5] इति ।

अत्रेदमवधेयं यदसत्यानीत्यसहिष्णुत्वादयो वरेण्या गुणगणा महाभारते तत्रभवतो ज्येष्ठपाण्डवस्य विशेषाः (युधिष्ठिरस्य) । मध्यमपाण्डवं नायकीकृत्य तत्र तेषामसामान्यः सन्निवेशः कृतस्तु किरातार्जुनीये । अपि चाकर्कशत्वादिगुणान्तराण्यपि पृथक् पृथङ् नायकान्तरेष्वपि सन्ति चेत्, सन्तु नाम । गणशस्तु तेषामेकनायके स्थितिर्वाल्मीकेर्नायके तदनुसृत्य सङ्घटिते भारवीये एव वेति प्रतिपाद्यम् । अनुमाता अपि चान्यत्र न वितत्य निर्दर्शिताः, निर्दर्शिता अपि वा न किरातार्जुनीयस्य धोरण्येति ।

---

१. वा० रा०—२।१२।१०८ । २. वा० रा०—३।३७।१२ ।
३. किराता०—१४।११ । ४. तदेव—१०।६३ ।
५. किराता०—१४।१९ ।

श्रीरामस्य सम्बन्धे उक्तम्--

सर्वलोकप्रियः साधुरदीनात्मा विचक्षणः ।
सर्वदाभिगतः सद्भिः समुद्र इव सिन्धुभिः ॥[1]

अर्जुनोऽपि सर्वलोकप्रियः । यस्मात्तस्य गुणैः--

अङ्गान्यभिन्नमपि तत्त्वविदां मुनीनां
रोमाञ्चमञ्चिततरां बिभराम्बभूव ॥[2]

मुनीनां रामगुणानुरमणमसकृद्रामायणे च वर्णितम्--

'राघवं हि सततमनुगतास्तापसाश्चार्षचरिते धृतगुणाः' इत्यादिना ।[3]

किं बहुना, तिर्यञ्चोऽप्यर्जुनगुणैर्वशीचक्रिरे--

रञ्जयाञ्चकार विरजाः स मृगान्
कमिवेशते रमयितुं न गुणाः ॥[4]

कूटवेषाभ्यां देवेन्द्रमहादेवाभ्यां संवादे तस्य साधुत्वं सुव्यक्तं विचक्षणत्वञ्च । अदीनात्मत्वे तस्य किमिव वक्तव्यं यः परमात्मानमप्याह्वयते स्म । 'सर्वदाभिगतः सद्भिः' सद्भिरेवेत्यर्थः । एतच्चार्जुनेऽपि स्फुटं योऽमन्यत—'प्रकृत्यमित्रा हि सतामसाधवः'[5] इति ।

किञ्च,

असन्मैत्री हि दोषाय कूलच्छायेव सेविता[6] ।

आज्ञानुवृत्तिः—

तस्मात् सामान्यासामान्यानां रामभद्रगुणानां सुभद्रापतौ सन्निधानेऽवहितः किरातार्जुनीयकार इत्यवदातम् ।

आज्ञापालनं खलु वाल्मीकिना चित्रितस्य रामचरित्रचित्रस्य परमगरिमसम्भृतोंऽशः । पितुराज्ञापालनहेतोरखण्डसाम्राज्यं काष्ठखण्डमिव परिहाय चतुर्दशसमानामरण्यवासं स्वीकृत्य रामेण य आदर्शः स्थापितः, स ननु विश्वस्मिन्ननुपमः । न च पित्रापि साऽऽज्ञा साक्षाददीयत रामाय, कैकेयीमुखतस्तु तस्य पारवश्यमौनरूपां सम्मतिमवगतवान् हर्षप्रश्रयोत्साहैः, स तामेवं शिरसि चकार---

अहं हि वचनाद्राज्ञः पतेयमपि पावके ।
भक्षयेयं विषं तीक्ष्णं पतेयमपि चार्णवे ॥[7]

---

१. वा० रा०--१।१।१५-१६ । २. किराता०—१५।५३ ।
३. वा० रा०—२।११६।२६ । ४. किरा०—६।२४ । तुलनीयम्—'पदं हि सर्वत्र गुणैर्विधीयते'—रघु० ३.६३ । समानमुभयोर्मूलमित्यवधातव्यम् ।
५. तदेव—१४।२१ ।
६. तदेव—११।५५ । ७. तदेव—२।१८;२८-२९ ।

आर्जुनं चरितमप्युपक्रमादपवर्गान्तमाज्ञानुवर्तित्वस्यानुकरणीयमुदाहरणम् । तस्य जीवितं धर्मराजस्य सेवायां समर्पितमतिष्ठत् । आरम्भे स उत्तरकुरुदेशानवजित्य ततः प्रचुरं हेमरूप्य-राशिमुपाहरन् दरीदृश्यते—

विजित्य यः प्राज्यमयच्छदुत्तरान् कुरूनकुप्यं वसु वासवोपमः ।[1] इति ।

वनवासावधौ तु वल्कलवस्त्राण्यपि दर्शं दर्शं न दुःखमकार्षीत् । यदाह द्रौपदी—

स वल्कवासांसि तवाधुना हरन्
करोति मन्युं न कथं धनञ्जयः ॥[2]

भीमोऽपि क्षुभ्यति । अर्जुनस्तु निर्विकार एव सदा समवाप्यते ।

वदन्ति यत्स्वजनैर्योगे नरकमपि स्वर्गायते, विप्रयोगे च स्वर्गोऽपि नरकायते । भारविरप्याह—

शून्यमाकीर्णतामेति तुल्यं व्यसनमुत्सवैः ।
विप्रलम्भोऽपि लाभाय सति प्रियसमागमे ॥[3]

व्यतिरेके च,

तदा रम्याण्यरम्याणि प्रियाः शल्यं तदासवः ।
तदैकाकी सबन्धुः सन्निष्टेन रहितो यदा ॥[4] इति ।

एवं स्थितौ, वनवसतेर्विच्छायेषु क्षणेषु छायातुल्यस्य दाक्षिण्यविग्रहस्यानुजस्य लक्ष्मणस्य तादृश्याः प्राणेभ्योऽपि गरीयस्या जनकतनयायाश्चानुगमनेन श्रीमद्रामभद्रः, तादृशानां चतुर्णा-मनुजानां कृष्णायाश्च सन्निधानेन पुण्यश्लोको युधिष्ठिरश्च कियदाशश्वासेति निमीलितनयनमा-लोचनीयम् । अर्जुनस्तु प्राणप्रियाननुजान् हृदयेप्सितां द्रौपदीञ्च विहाय पणीकृतप्रायः कीर्तितेन्द्रिय इन्द्रकीले इन्द्रमाराधयितुं गतो भगवतः कृष्णद्वैपायनस्य तपोदृष्टिर्धर्मराजस्यानन्यविश्वासश्च तस्मिन्नेव हि वंशोद्धारिणीमर्हतामवाधारयताम् । आदिष्टमात्रः स इन्द्रकीलं प्रति प्रतिष्ठमानो विकृतेर्लेखयाप्यनुल्लिखितः—

न वनं गन्तुकामस्य त्यजतश्च वसुन्धराम् ।
सर्वलोकातिगस्येव लक्ष्यते चित्तविक्रिया ॥[5]

इति प्राचेतसीयामुक्ति सहसैव मानसपटलेऽङ्कयति ।

इदञ्च प्रणिभालनीयम्—रामोऽज्ञासीद् यत्पितुर्वनवासनस्याज्ञानौचित्यपूर्णा कैकेयीस्नेह-मूढतामूलिकैव । स लक्ष्मणमगादीत्—

इदं व्यसनमालोक्य राज्ञश्च मतिविभ्रमम् ।
काम एवार्थधर्माभ्यां गरीयानिति मे मतिः ॥
को ह्यविद्वानपि पुमान् प्रमदायाः कृते त्यजेत् ।
छन्दानुवर्तिनं पुत्रं तातो मामिव लक्ष्मण ॥[6]

---

१. किराता० १।३६ । २. तदेव—३।८ । ३. ११।२७ । ४. तदेव—११।२८ ।
५. वा० रा०—२।१९।३३ । ६. वा० रा०—२।५३।९-१० ।

परन्तु, गुरुनृपपितॄणां क्रोधात् कामात् प्रमादाद्यथाकथञ्चिद् वा कृत आदेश आनृण्यहेतोरनुसरणीय एव। तथा च दशरथास्यादेशो न समुल्लङ्घनार्हः। तदादेशविरुद्धं मातापि चेदादिशति, तदा साऽप्युपेक्षणीया, यतो हि मातुरपि पितैव गतिर्धर्मश्च। तस्यैव कण्ठरवः—

गुरुश्च राजा च पिता च वृद्धः
क्रोधात् प्रहर्षादथवापि कामात्।
यद्व्यादिशेत् कार्यमवेक्ष्य धर्मं
कस्तं न कुर्यादनृशंसवृत्तिः॥
न तेन शक्नोमि पितुः प्रतिज्ञा-
मिमां न कर्तुं सकलां यथावत्।
स ह्यावयोस्तात गुरुर्नियोगे
देव्याश्च भर्ता स गतिश्च धर्मः[1]॥ इति।

एवमर्जुनोऽप्यबोधि यद् गर्हिते द्यूतकर्मणि प्रवृत्त्य राज्यं सोदरान् धर्मपत्नीञ्च पणीकृत्यानुचितमकारि युधिष्ठिरेण, परन्तु तदर्थं तमदूष्य भवितव्यतामात्रं तद्वचनं स सन्तोषमपुषत्—

दुरक्षान्दीव्यता राज्ञा राज्यमात्मा वयं वधूः।
नीतानि पणतां नूनमीदृशी भवितव्यता॥[2]

भवितव्यतामूलकत्वं यदुक्तमर्जुनेन तस्यापि मूलं रामायण एव। वनप्रव्राजनक्षुभितं लक्ष्मणं राघवेन्द्रो दशरथः कैकेयी वा न दूषणीयौ, दैवमूलकत्वात्, तस्य च दुर्वारत्वादखिलस्येत्येव प्राबोधयत्—

न लक्ष्मणास्मिन् मम राज्यविघ्ने
माता यवीयस्यभिशङ्कितव्या।
दैवाभिपन्ना न पिता कथञ्चि-
ज्जानासि दैवं हि तथा प्रभावम्॥[3]

यदचिन्त्यं तु तद्दैवं भूतेष्वपि न हन्यते।
व्यक्तं मयि च तस्यां च पतितो हि विपर्ययः॥[4]

तदेवमस्मिन्नपि विषये भारविरादिकविसरणिमनुसरतीति निर्गलितम्।

**मर्यादा**

मर्यादाविषये रामभद्रादपरश्चिन्तयितुमपि न शक्यः कश्चन श्रुतदृष्टकल्पितेषु। अत एव 'शङ्करः' इति गिरिजाजानाविव 'मर्यादापुरुषोत्तमः' इतीदं पदं रामभद्रं नियमेनावगमयन्नान्यत्र कुत्रापि पदं कुरुते। वैयक्तिकीनां लौकिकीनां राष्ट्रियाणां पारिवारिकीणां सर्वासामेव च मर्यादानां यादृशी प्रतिष्ठा सुचरितसारे तच्चरिते प्रचरिता, न तादृशी कुत्रापीतरगा तस्य ह्यासीद्दर्शनम्—

---

१. तदेव—२।२१;५९-६०। २. किराता०—११।४७।
३. वा० रा०—२।२२।३०। ४. तदेव—२।२२।२०।

निर्मर्यादस्तु पुरुषः पापाचारसमन्वितः ।
मानं न लभते सत्सु भिन्नचारित्रदर्शनः[1] ॥ इति ।

दर्शन इव जीवनेऽपि मर्यादाया आर्यः श्रीरामभद्र कीदृशोऽभूदकम्प आश्रय इति कृतापचारोऽपि मारीचो रावणे तद्गुणगणं विवृण्वन् मुक्तकण्ठमकीर्तयत् 'नामर्यादः कथञ्चन' इति ।

न लुब्धो न च दुःशीलो न च क्षत्रियपांसनः ।[2]

अभद्रवचनापरिचितोऽपि रामभद्र उन्मर्यादश्च रावणं कीदृक्परुषं निर्भर्त्संयति—

भिन्नमर्याद निर्लज्ज चारित्रेष्वनवस्थित ।
दर्पान्मृत्युमुपादाय शूरोऽहमिति मन्यसे ॥[3]

वालिनश्चातुलबलशालिनम्—

न हि लोकविरुद्धस्य लोकवृत्तादपेयुषः ।
दण्डादन्यत्र पश्यामि निग्रहं हरियूथप ॥[4]

तस्य स्थितेः प्रयोजनमेवोन्मर्यादानां निग्रहो बभूव—

वयं तु भरतादेशावधिं कृत्वा हरीश्वर ।
त्वद्विधान् भिन्नमर्यादान्निग्रहीतुं व्यवस्थिताः ॥[5]

तथा च रामभद्रो मर्यादां सर्वभावेनादेयां तदुल्लङ्घिनश्चावश्यदण्डनीयतामादित ।

अर्जुनश्च मर्यादाविषये परिमितैरेव पदैर्थन्निजगाद, तदपरिमितं कालं यावदनौपम्येन भ्राजिष्णुः । तद्यथा—

स्थित्यतिक्रान्तिभीरूणि स्वच्छान्याकुलितान्यपि ।
तोयानि तोयराशीनां मनांसि च मनस्विनाम् ॥[6]

मनस्विनि मर्यादाया अत्यागः सत्पथानुसरणम्, समुद्रे च वेलाया अनतिक्रमणम् । मनस्विनि सङ्क्षोभः परकृतापकारादि, अकालुष्यं चाविकारः । एवं समुद्रे सङ्क्षोभो वात्यादिना तरङ्गमालाकुलत्वम् । अकालुष्यं चापङ्किलत्वम् । उभयेषां धर्मभेदेऽप्येकशब्दप्रतिपादनेनाभेदाध्यवसानात् परस्परं बिम्बप्रतिबिम्बभावाच्च समानधर्मत्वमित्यर्जुनस्य 'मर्यादा'विषयकाणां विचाराणामद्भुतमेवेदं भङ्गिवक्रिम्ण निरूपणं रघुपतेर्मर्यादाभावनामन्यूनमनुविधत्ते । वात्याप्रताडितास्तरङ्गभङ्गसङ्कुला अपि निसर्गनिष्पङ्काः स्वच्छाः सागराणामापो यथा वेलां नातिवर्तन्ते, तथैव स्वभावपावनानि सतां चेतांसि परापकृतिशतेऽपि मर्यादातिक्रमणाद् बिभ्यतीति भाव इति मर्यादाविषये गाढीभूतं कमपि कवितुर्निर्भरं गमयति । महाभारते तु धर्मराजचरिते सत्यस्य विशिष्टा प्रतिष्ठा । यद्यपि पर्यन्ते सत्यमपि हि तत्र मर्यादायामेवान्तर्गच्छति, तथापि सामान्यविशेषविषयकभेदमादाय प्रकृतोपपत्तिः ।

---

१. वा० रा० २–१०–९ । २. वा० रा० ३–३७–८ । ३. वा० रा० ६–१०३–१४ ।
४. वा० रा० ४–१८–२१ । ५. वा० रा० ४–१८–२५ । ६. किरातार्जुनीयम्–११।५४ ।

**अपवादभीरुता**

श्रीरामस्यापवादभीरुता जनकजाया वह्निशुद्धिघटनायाः स्फुटा—

पश्यतस्तां तु रामस्य समीपे हृदयप्रियाम् ।
जनवादभयाद् राज्ञो बभूव हृदयं द्विधा ॥[1]

तच्च हृद्द्वैधं स्वमुखेनैवोक्तम्—

बालिशो बत पापात्मा मूर्खो दशरथात्मजः ।
इति वक्ष्यति मां लोको जानकीमविशोध्य हि ॥[2]

स्वयं जनकतनयाप्यज्ञानाद् यद् रामभद्रेण सर्वगुणभद्रापि सा केवलमपवादभयेनोज्झिता । चरमपरित्यागसमये सौमित्रिमुखेन रामभद्रं सैव समदिशत्—

जानासि च यथा शुद्धा सीता तत्त्वेन राघव ।
भक्त्या परमया युक्ता हिता च तव नित्यशः ॥
अहं त्यक्ता च ते वीर अयशोभीरुणा वने ।
यच्च ते वचनीयं स्यादपवादः समुत्थितः ॥[3] इति ।

रामायणे लोकापवादस्यातङ्क इव कश्चन लक्ष्यते । इदञ्चातिस्फुटमतिष्ठत्, तदानीं सत्यम्, तथापि न केनाप्यवारि वारयितुम् । यथा तत्रैव तत्रभवतः प्राचेतसस्य चोक्तिः—

अपवादात् परित्यक्ता ममाश्रमसमीपतः ।
लोकापवादभीतस्य तव राम महाव्रत ॥[4]

किञ्च,

तस्मादियं नरवरात्मज शुद्धभावा
दिव्येन दृष्टिविषयेण मया प्रविष्टा ।
लोकापवादकलुषीकृतचेतसा या
त्यक्ता त्वया प्रियतमा विदितापि शुद्धा ॥[5]

अत्र 'विदितापि शुद्धा' इत्येतानि पदानि निगदव्याख्याताभिप्रायाणि । श्रीमद्रामभद्रोऽपि तत्रैव प्रत्यभाषत—

एवमेतन्महाभाग यथा वदसि धर्मवित् ।
लोकापवादो बलवान् येन त्यक्ता हि मैथिली ॥[6]

वैदेह्या निष्कल्मषत्वमपि स सर्वतोभावेनाऽवदधारेति सुव्यक्तम्—

परित्यक्ता मया सीता ।
सेयं लोकभयाद् ब्रह्मन्नपापेत्यभिजानता ॥[7] इति ।

---

१. वा० रा०—६।११५।११ २. वा० रा०—६।११८।१४ ।
३. वा० रा०—७।४८।१२; ४. तदेव—७।९६।१६-१७ । ५. तदेव—७।९६।२४ ।
६. तदेव—७।९७।२।३ । ७. तदेव—७।९७।४ ।

अहो ! कीदृशमिदं लोकापवादभयं यद्रावणवधानन्तरं सर्वसुरासुरमुनिमनुजानां संपश्यतां वह्निविशुद्धाऽपि सीतापतिना निष्करुणेनेव निर्धूता ।

वस्तुतस्त्वपवादाद् भेतव्यताभावं श्रीमद्रामायणस्यारम्भादेव दृढारूढं पश्यामः । महाराज-दशरथः कैकेय्या हठेन श्रीरामभद्रप्रव्राजनात्मना तस्या महानपवादः प्रवर्तेत—इति पौनः-पुन्येन तां बोधयति स्म । तद्यथा—

अकीर्तिरतुला लोके ध्रुवं परिभविष्यति ।
अपवादो हि ते देवि महाँल्लोके भविष्यति ॥[१] इति ।

बत चित्रम्, यत् कैकेय्यपि राजानमपवादभयाद् वित्रासयति राघवं प्रव्राजयितुम्—

यदा समेता बहवस्त्वया राजर्षयः सह ।
कथयिष्यन्ति धर्मज्ञ तत्र किं प्रतिवक्ष्यसि ॥[२] इति ।

किञ्च, 'लोकतोऽपि हि ते रक्ष्यः परिवादः शुभानने' ।

एतस्मादायातं यद्रामायणकाले साधवो न तथान्यस्मात् कस्मादपि बिभ्यति स्म, यथा लोकापवादात् । तत्त्वतो लोकापवाद एव मूलस्तम्भो रामायणस्य तत्रभवतो दाशरथेरण्य-लङ्कयोरयनात्मनः ।

अथ, सर्वथैव विस्तरस्यानवसरेऽपि कतिपयैरेव पदैरपवादस्यानुलङ्घनीयत्वं किरातार्जु-नीयस्य कृती कृतिकारः सुप्रौढं न्यबध्नादेव । तथाहि तिष्ठत्स्वपि दिग्जैत्रेषु भ्रातृषु धर्मराजः कृष्णाकेशाकर्षणपर्यवसितिकां यां दुर्दशायाश्चरमावस्थां जोषं प्रसेहे, तस्य हेतुं स्फुटयन्नर्जुनो निर्जरराजमब्रूत—

सोढवान्नो दशामन्त्यां ज्यायानेव गुणप्रियः ।
सुलभो हि द्विषां भङ्गो दुर्लभा सत्स्ववाच्यता ॥[३]

तथा च भारविररिपराभवादपि सतां सदस्यवाच्यतां दुर्लभतरां वदन् स्पृहणीयतरतां तस्याः, अवहितपरिहेयताञ्चापवादस्य निर्भरमवादीधरत् ।

अपवादाद्यो न बिभेति तमसद्वृत्तं दुर्दैवतुल्यं पश्यति कविः—

अपवादादभीतस्य समस्य गुणदोषयोः ।
असद्वृत्तेरहो वृत्तं दुर्विभाव्यं विधेरिव ॥[४]

**कालिदासादेरन्तरम्**

कालिदासस्तु लोकापवादमात्रेण पतिव्रताप्रियतमापरित्यागसदृशं दारुणमनुष्ठातुं नानुजानीत इति—

मां लोकवादश्रवणादहासीः श्रुतस्य तत्किं सदृशं कुलस्य ।

जानक्या वाचिकेनैवावोचि ।

---

१. वा० रा०—२।१३।१४ । २. तदेव—२।१२।४० ।
३. किराता०—११।५३ । ४. तदेव—११।५६;

आदिकवेरपवादविषयिणी स्वगवी धृतैवोर्व्वम् । कालिदासः परं तत्पक्षादपि गभीरं क्षोभमुज्जगार—

उत्खातलोकत्रयकण्टकेऽपि सत्यप्रतिज्ञेऽप्यविकत्थनेऽपि ।
त्वां प्रत्यकस्मात् कलुषप्रवृत्तावस्त्येव मन्युर्भरताग्रजे मे ॥[1]

अतो वाल्मीकिरामायणाद्भिन्नोऽत्र रघुकारः । अग्रे भवभूतिनापि सोऽनुसृत एव कियदपि—

सर्वथा व्यवहर्तव्ये कुतो ह्यवचनीयता ।
यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः ॥[2]

इति वदता ।

महाभारतेऽपि जयद्रथगृहीतापि कृष्णा पाण्डवैः प्रसह्य सगौरवं प्रत्यात्ता—लोकापवादमचिन्तयद्भिः । तस्माद् भारवेर्लोकापवादातिभीरुता रामायणस्यैवानुहारः, न महाभारतस्येत्यूह्यम् ।

ननु कविकुलगुरोरपि तुल्याभिप्रायकं वर्णनमुमाशैशवप्रस्तावे—

महीभृतः पुत्रवतोऽपि दृष्टिस्तस्मिन्नपत्ये न जगाम तृप्तिम् ।
अनन्तपुष्पस्य मधोर्हि चूते द्विरेफमाला सविशेषसङ्गा ॥[3]

इत्यादिसदृशमिति ।

सत्यम्, समानस्रोतस्कतया तूभयोरविरोधः कालिदासादीनां वाल्मीकिमूलता खलु प्रागेवावादि । भारवेर्वाल्मीकमवाधमर्णभावमत्र निश्चिचाषामः, न पुनरितरेषां कवीश्वराणां तथाभावमभावं निनीषामः । एकस्यैव तरोर्बीजराशिरनेकैरनेकत्रोप्तः फलेग्रहितामापद्यमानो न शक्यो निग्रहीतुम् । तद्वदेवेदम् । तर्हि कालिदासमूलकमेवेदम्, न प्राचेतसमूलकमित्यपि न युक्तं वक्तुम् । महतो भावविसरस्य साक्षाद्वाल्मीकसम्भवप्रभवत्वे सिद्धे संदिग्धानामपि संदिग्धाधिकरणन्यायेन तथैव प्रतिपत्तव्यत्वात् । एवैव दिक् तुल्यरूपेषु स्थलान्तरेष्वप्यूहनीया ।

**नायकस्य भ्रातृषु प्रेष्ठता**

दशसु दिशास्वरुद्धरथत्वादन्वर्थसुगृहीतनामधेयस्य महाराजदशरथस्य चतुर्षु पुत्रेषु सर्वभावेन तुल्यगुणगणचणेषु रामः प्रियतमो वंशवैजयन्तीतुल्यश्चतुराननवत्परममान्यश्चासीत् । वाल्मीकेर्मधुवाहिकेषु वर्णेषु—

तेषां केतुरिव ज्येष्ठो रामो रतिकरः पितुः ।
बभूव भूयो भूतानां स्वयंभूरिव सम्मतः ॥
सर्वे वेदविदः शूराः सर्वे लोकहिते रताः ।
सर्वे ज्ञानोपसम्पन्नाः सर्वे समुदिता गुणैः ॥
तेषामपि महातेजा रामः सत्यपराक्रमः ।
इष्टः सर्वस्य लोकस्य शशाङ्क इव निर्मलः ॥[4]

---

१. रघु०—१४।७३ । २. उ० रा० च०—१।५ ।
३. कुमार०—१।२७ । ४. वा० रा०—१।१८।२४-२७ ।

रामस्य विशिष्टा प्रेमास्पदता स्वक्रतुगुप्तिहेतो रामं याचमानाय विश्वामित्राय दशरथस्य राममेकमपहाय सर्वमपि दातुं सन्नाहेन विशदीभवतितराम् । दशरथस्यैव वचसि—

चतुर्णामात्मजानां हि प्रीतिः परमिका मम ।
ज्येष्ठे धर्मप्रधाने च न रामं नेतुमर्हसि ॥[1]

अपि च,

विप्रयुक्तो हि रामेण मुहूर्त्तमपि नोत्सहे ।
जीवितुं मुनिशार्दूल न रामं नेतुमर्हसि ॥[2]

पाण्डवेष्वप्यर्जुन एव धर्मसूनोर्युधिष्ठिरस्य लोकानाञ्च वाल्लभ्यमलभत । पाण्डवानां विजयसाधनात्मनो महीयसः कर्मणः सम्पादनाय धर्मात्मजेन पराशरात्मजेन च तस्यैव चयनमत्र प्रबलं प्रमाणम् । अर्जुनः स्वयं छलस्थविरममरेश्वरमभ्यदत्त तत्प्रतिज्ञापूरणेप्सुः सुकृतसूनुः (युधिष्ठिरः) शत्रुशमनकामनया भ्रातॄनन्यानवहाय तस्यैवाऽस्मरत्, यथा पिपासितो वसुमतीगतं सर्वमपि वसुविहाय सलिलस्य स्मरति—

यथाप्रतिज्ञं द्विषतां युधि प्रतिचिकीर्षया ।
ममैवाध्येति नृपतिस्तृष्यन्निव जलाञ्जलेः ॥[3]

तृष्यन्निव जलाञ्जलेरित्युपमा च विवक्षितार्थसमर्पणे समर्था रामायणे नैकैः पद्यैः प्रोक्तमर्थं पदत्रयेणैव चेतसि प्रतिष्ठापयति । वस्तुतस्तूपमापीयम्—'पिपासित इवोदकम्' इति रामायणीयोपमामूलिकैव । जलाञ्जलेरितीदृशो न्यासस्तु शाब्दिकीमार्थिकीञ्च सुषमां समेधयतितमां भारवेः । एवञ्चांशेऽस्मिन् भारवेरादिकवेरधमर्णभावो विवादबाह्य एव ।

एवञ्च स्पष्टं यद्भारविः स्वनायकं रामायणीयनायकस्य गुणैर्विशिष्याचीक्लृपत् ।

**रामायणे मैत्रीप्रकर्षः**

नायकसङ्घटनापरिहाणेऽपि, प्राचेतसो यान् सांस्कृतिकबिन्दून् प्रकृष्यापुषत्, तांस्तेनैव प्रकर्षेण भारविः स्वकाव्यरत्ने संन्यवीविशत् । तद्यथादिकविश्रीरामचरिते मैत्र्यादर्शस्य परां काष्ठां प्रादर्शयत् । स चादर्शः—

आढ्यो वापि दरिद्रो वा दुःखितः सुखितोऽपि वा ।
निर्दोषश्च सदोषश्च वयस्यः परमा गतिः ॥[4] इति ।

मित्रकार्यहेतोः श्रीरामो निगूढो बालिवधसदृशं कृत्यमप्यन्वतिष्ठत् । रामो मैत्रीं कथमाद्रियतेत्यस्यैकमद्भुतं चित्रम्—

लङ्कायां सेनासंनिवेशादनन्तरं मुख्यैः स्वसेनानायकैः सह सुवेलशिखरिणो द्वियोजनमण्डलं शिखरमारुह्य लङ्कां निरीक्षमाणे राघवे गोपुरशृङ्गस्थं राक्षसेन्द्रं दृष्ट्वा सहसा समिद्धक्रोधः सुग्रीव उत्प्लुत्य रावणमुपसद्य तमाह्वयमानस्तेन बाहुनियुद्धग्रस्तः क्षतीर्ददान आददानश्चाथाऽकस्मा-

---

१. वा० रा०—१।२०।८।११ । २. तदेव—१।२०।८–९ ।
३. किराता० ११।७४ । ४. वा० रा०—४।८।८ ।

दुत्पत्य पवनप्लवन: श्रीरामानीकं प्राविशत् । तच्छरीरे क्षताङ्कान् वीक्ष्य तं परिष्वज्य सुमित्राजाताग्रजोऽब्रवीत्—

असम्मन्त्र्य मया सार्धं तदिदं साहसं कृतम् ।
एवं साहसयुक्तानि न कुर्वन्ति जनेश्वरा: ॥[1]
इदानीं मा कृथा वीर एवंविधमरिन्दम ।
त्वयि किञ्चित् समापन्ने किं कार्यं सीतया मम ॥
भरतेन महाबाहो लक्ष्मणेन यवीयसा ।
शत्रुघ्नेन च शत्रुघ्न स्वशरीरेण वा पुन: ॥[2]

तथैवाग्रे च—

त्वयि चानागते पूर्वमिति मे निश्चिता मति: ।
जानतश्चापि ते वीर्यं महेन्द्रवरुणोपम ॥
हत्वाहं रावणं युद्धे सपुत्रबलवाहनम् ।
अभिषिच्य च लङ्कायां विभीषणमथापि च ॥
भरते राज्यमारोप्य त्यक्ष्ये देहं महाबल ।[3]

मित्रे सतोऽपि दोषानुपेक्षापथे करोति वाल्मीकि: । अत एव विभीषणं शङ्कमानेषु सेनानायकेषु सोऽब्रवीत्—

मित्रभावेन सम्प्राप्तं न त्यजेयं कथञ्चन ।
दोषो यद्यपि तस्य स्यात् सतामेतदगर्हितम् ॥[4]

**भारवेर्मैत्रीनिर्भर:**

यद्यपि रामायणं रामायणमेव । नवनवै: प्रसङ्गैरादिकवि: स्वविवक्षितं नवीकरोति, नेदृशं भारवौ, तथापि भारवे: काव्येऽपि मैत्र्यामपूर्वा उद्गारा आविष्कृता: । किरातेन्द्रदूतोऽर्जुनं प्रति ब्रूते स्म—लाभ: सम्पदो वा मित्रप्राप्ते: पुरत: सुतुच्छा एव, यत: 'पुण्यप्राप्यं मित्रम्, दु:खलभ्याश्च सम्पद:' । मित्रं रक्षति, संपदश्च रक्षणीया भवन्ति-रक्ष्यमाणाश्चापि कष्टेनैव ता रक्ष्यन्ते । मित्रमन्तपर्यन्तं शोभनमेव भवति, सम्पदामन्तस्तु न जातु शोभन: । का तेन तासां तुलना ?

लभ्यमेकं सुकृतेन दुर्लभा रक्षितारमसुरक्ष्यभूतय: ।
स्वन्तमन्तविरसा जिगीषतां मित्रलाभमनुलाभसम्पद: ॥[5]

भारवेर्मते धनमतिचलम्, प्रबला अरय: समर्जितां धरणिमपि हरन्ति, अचलगिरिवदचलं तु मित्रमेव स न कथमप्यवहेलनामर्हति—

---

१. वा० रा०—६।४१।२ । २. तदेव—६।४१।४-५ ।
३. तदेव—६।४१।६-८ । ४. तदेव—६।१८।३ । ५. किराता०—१३।५२ ।

चञ्चलं वसु नितान्तमुन्नता मेदिनीमपि हरन्त्यरातयः ।
भूधरस्थिरमुपेयमागतं मावमंस्त सुहृदं महीपतिम् ॥[1]

मित्रेणार्थिते भारविः सम्पूर्णां पृथिवीमपि समर्ज्य दातव्यां मन्यते—

त्वद्विधं सुहृदमेत्य सोऽर्थिनं किं न यच्छति विजित्य मेदिनीम् ।[2] इति ।

**रामायणीय एव प्रभाव इत्यत्र विनिगमकम्**

ननु रामायणप्रभावोऽयमित्यत्र किं मानम्, स्वातन्त्र्येणात्मीयाया अपि तस्य तथा भावनायाः सम्भवात् ? तन्न, भारविणा स्वयं दत्तोत्तरत्वात् । कैतवकिरातस्य दूतोह्यभाषत—

तत्तदीयविशिखातिसर्जनादस्तु वां गुरु यदृच्छयागतम् ।
राघवप्लावगराजयोरिव प्रेमयुक्तमितरेतराश्रयम् ॥[3]

'पूर्वोक्तैर्हेतुभिर्भवान् प्रतियच्छतु किरातराजस्य शरम्, येन युवयो रामसुग्रीवयोरिवान्योन्यविषयिणी प्रीतिर्दृढात्मनोपनता लब्धाश्रया भवेत्' । अत्र मैत्रीनिमित्ते राघवसुग्रीवयोर्मैत्र्या उपमानभावेन ग्रहणात्, प्रकृतायाः किरातार्जुनीयकृतः प्रेरणायाः स्रोतः श्रीमद्रामायणमेवेत्यसंशयं सिद्ध्यति । एतच्चोदाहृतानां निदर्शनान्तराणामप्युपोद्बलकायते—'सम्भावितैकदेशेन देयं यदभियुज्यते' इति न्यायात् ।[4]

**प्राधान्येन व्यपदेशाः**

इदमत्र सविनीति पुनरपि विनिवेद्यं यद्यदोच्यते यद्रामायणीयः प्रभाव इति तदा नायं भावो यन्महाभारते मूलत एवाभावस्तादृशभावस्येति । अनन्तपारस्य विश्वविस्मापकमण्डनस्य भारतीयसंस्कृतिव्योम्नः सूर्याचन्द्रमसौ खलु वाल्मीकिव्यासयोः काव्यरत्ने रामायणमहाभारताख्ये समानमुभयोस्तात्पर्यतः प्रतिपाद्यम् । समानो द्वयोः प्रकाशः । अथापि तत्र तत्र विषयेऽवान्तरभेदो नैव शक्यो विनिवारयितुम् । ऋजुत्वनृजुमार्गकृतो धर्मस्योभयोर्भेद आपातदर्शनेऽपि स्फुरति । एवं मर्यादाविषयेऽपि शक्यं वक्तुम् । साकल्येन पुनः किरातार्जुनीयनेतुर्गुणानां संवादो रामायणीयेनैव नेत्रा महाभारतीयं नेतारमपेक्ष्य तत्रोक्ताः—

न रामः कर्कशस्तात नाविद्वान्नाजितेन्द्रियः ।
अनृतं न श्रुतं चैव नैव त्वं वक्तुमर्हसि ॥[5]

इतीमे गुणा महाभारतस्य नेतरि ज्येष्ठपाण्डवे (युधिष्ठिरे) सम्भवन्ति नूनम्, परन्तु—

धनुर्वेदविदां श्रेष्ठो लोकेऽतिरथसम्मतः ।
अभियाता प्रहर्ता च सेनानयविशारदः ॥
अप्रधृष्यश्च सङ्ग्रामे क्रुद्धैरपि सुरासुरैः ।[6]

---

१. किरा०—१३।५३ । २. तदेव—१३।५९ ।
३. तदेव—१३।५७ । ४. विक्रमोर्वशीयम्—५।३३ ।
५. वा० रा० ३।३७।१२ । ६. वा० रा० २।१।२९–३० ।

इत्यादीनां वर्णनानां मध्यमपाण्डवेऽर्जुने एव सामञ्जस्यात्। धर्मविषयेषु हि धर्मसूनोर्मूर्धाभिषिक्ता मार्मिकता। अर्जुने पुनरिन्द्रसूनुत्वाच्छौर्यकर्मणः, नरांशतया दिव्यावदानान्तराणाञ्च वर्णनान्यपि सङ्गच्छन्तेतराम्। क्वचित् पुनः समानमूलानामितरेषां कवीश्वराणां कृतिष्वपि यदि तादृशानि वीतवैसादृश्यानि वर्णनानि लभ्यन्ते, न तत्र किमपि चित्रम्।

भारवेः परिशीलनेन पुनरिदं स्फुटति यत्तेन साक्षाद्रामायणादेव समचायि सामग्री, न कव्यन्तरद्वारा। तस्य हि रामायणमहाभारतयोः पारङ्गमता तदीयकृतिरत्नेनैवावगमितेति वा न पुनः स्मारणीयम्।

**पदावलेः सादृश्यम्**

क्वचित् क्वचिच्च शब्दशय्याया अपि रामायणीयाया अत्र सादृश्यं दरीदृश्यते। '...... (लोक) नाथमनाथवत्'[1] इति श्रीमद्रामायणे, '....(एभि) विनाथैरिव (भाग्य) नाथैः'[2] इति च किरातार्जुनीये, '...सनातने वर्त्मनि सन्निविष्टाम्'[3] इति पूर्वत्र, '...सनातनं प्रयातु वद तेन वर्त्मना'[4], इति च परत्र, 'लोको हि सर्वो विहितो विधात्रेति'[5], लोको ब्रवीत्तेनकृतं विधान[6]मिति वैकत्र, 'लोकं विधात्रा विहितस्येति'[7] चाऽपरत्र। भूयः खलु शक्यमेवमुदाहर्तुम्।

यत्र चानुसन्धानवाहिन्यां प्रवाहमध्यपतिताः पदपदार्थगतं सकृदपि सादृश्यं तुम्बीफलमिव सबहुमानमवलम्बन्ते गवेषकास्तत्र स्थूलसूक्ष्मबहिरङ्गान्तरङ्गशब्दार्थोदयादिगतमसकृद् दृश्यमानं तत्समुपेक्ष्यमाणन्तु गजनिमीलिकालीलायितमेवावलम्बेत।

इदमवश्यं यत् श्रीमदादिकवेश्चित्रणक्षेत्रमतिविततम्, यतः 'यन्न भारते, तन्न भारते' इत्यत्रेव यन्न रामायणे तन्न भारते इत्यत्रापि सहृदयाः सुधियः सहमताः। अतस्तत्रोन्मुक्तं प्रसृतुं भाववारांनिधिः समासादयति पूर्णमवसरम्। एतद्विपरीतं भारवेः काव्यक्षेत्रं नितान्तं सङ्कुचितम्। महाभारतादुपात्तस्य नेतुश्चरितस्य लघीयस एकदेशस्य चित्रणं तस्यावधिः। अथापि यदि भारविः स्वचित्रमियद्रञ्जकं प्रेरकञ्च निर्मातुमपारयत् तत्र तेषां वर्णनां माहात्म्यमविस्मरणीयम्, यान् स आदिकवेरुपादित।

● ● ●

१. वा० रा०—२०।४२।१८०।
२. किराता० ३।४७।
३. वा० रा० ५।५।२४।
४. किराता० १३।४२।
५. वा० रा० ४।२४।४१।
६. तदेव—४।२४।४२।
७. किराता० ३।४१।

# भवभूतेः सामाजिकं चित्रणम्

डॉ० इन्द्रदेवद्विवेदी 'इन्द्रः', विद्यावारिधिः, साहित्यवेदान्ताचार्यः, एम्० ए०
साहित्यविभागाध्यक्षः, श्रीरामानन्दपीठः संस्कृतमहाविद्यालयः, वाराणसी।

मनुष्यस्य सर्वाणि कार्याणि समाजे भवन्ति। अस्माकं सर्वं कृत्यं समाजे गतिशीलतां ददाति। अस्माकं सर्वे व्यवहारा दार्शनिकसिद्धान्तेन प्रभाविता भवन्ति। जीवनस्य सफलतामाप्तुं समाजेन सह सामञ्जस्यमप्यावश्यकमस्ति। समाजोऽयं सर्वदा गतिशीलो भवति। अस्मिन् नित्यं परिवर्तनं जायते। समयेन सह संसारे नवीना समस्योत्थिता जायते। तस्याः समाधानं दार्शनिकदृष्ट्या कवयो महाजनाश्च कुर्वन्ति। व्यक्तिसमाजयोः सम्बन्धमपि दर्शनेन प्रभावितं भवति। सामाजिका रीतयस्तत्समाजस्य दर्शनज्ञानेन ज्ञातुं समर्था वयम्। विभिन्नसंस्कृतीनां सम्पर्केणापि समाजे परिवर्तनं जायते। विचारधारया सह समाजस्य गतिर्भवति। यत्र दार्शनिकः सिद्धान्तो गतिशीलो न भवति, तत्र समाजस्य परिवर्तनमपि शीघ्रतया न जायते। इत्थं च ज्ञायते यद् दार्शनिकदृष्ट्या समाजस्याध्ययनमप्यावश्यकमस्ति[1]।

सर्वे कवयः सामयिकेन समाजेन प्रभाविता भवन्ति। कुशलाः कवयो यस्यातीतस्येतिवृत्तस्य कथानकं कुर्वन्ति, तस्यातीतसमाजस्यैव चित्रणं प्रस्तुतकरणे संलग्ना जायन्ते, किन्तु तच्चित्रणेऽपि कविसामयिकस्य समाजस्य प्रभावो दृष्टिगोचरो जायते। यतो हि भविष्यतश्चातीतस्य वा कल्पनाया आधारो वर्तमान एवास्ति। कविर्वर्तमानमूलाधारेऽतीतस्य भविष्यतश्च भवनं निर्माति। अत एव काव्यावलोकनकाले तत्कविसमाजस्यैव विवेचनं क्रियते।

**व्यक्तिसमाजसम्बन्धः**

व्यक्तिसमाजयोरविच्छिन्नः सम्बन्धोऽस्ति। मनुष्य एकः सामाजिकः प्राणी विद्यते। अस्माकं सर्वेषां गुणानां प्रकाशनं समाजे जायते। अत एव व्यक्तिः कस्यापि समाजस्य सदस्यरूपेणैव ज्ञातुमर्हति। यो जनः समाजे स्थातुं न वाञ्छति, तथा स्वात्मनिर्भरं ज्ञात्वा समाजेन सह सम्बन्धं कर्तुं नेहते, सोऽवश्यमेव जन्तुर्देवो वा विद्यते। स्वप्नलोके स्थितमेकाकिजीवनं दयनीयं तथाऽन्धं भवति। मनुष्यो जन्म गृह्णाति, तथा मृत्युपर्यन्तं स समाजेन सह संबद्धस्तिष्ठति। समाजस्य सहायतां विना स जीवितुं नार्हति। समाजे तस्य नैतिकस्य जीवनस्य विकासो जायते। अत एव महर्षयोऽपि समाजेन सह सम्बद्धाः सन्ति। सभ्यता तथा संस्कृतिः ये मानवप्रकृतेर्द्योतके स्तः, तेऽपि सामाजिक्याविव। समाजेन सह व्यक्तिः सुचारु तथा सुश्रृङ्खलितं जीवनं यापयति। व्यक्तिं विना समाजस्यापि कल्पना भवितुं नार्हति। अत एव सिद्ध्यति यद् व्यक्तिसमाजयोरन्योन्याश्रयः सम्बन्धोऽस्ति।

---

१. भवभूतेर्दार्शनिकी दृष्टिः—पृ० ८२।

भवभूतिरपि समाजस्यावश्यकतां स्वीकरोति। समाजेन सर्वं साधनमधिगम्य व्यक्तिरुन्नतिं करोति। समाजशब्दस्य व्यापकोऽर्थोऽस्ति। समाजस्यान्तर्गतं मानवसमाजस्तथाऽन्यजीवसमुदायः प्रकृतिरप्यायान्ति। व्यक्तिसमाजयोर्मध्ये स्वार्थगतं वैभिन्यं न विद्यते। भवभूतेरनुसारेण केचिज्जना व्यक्तेः स्वतन्त्रमस्तित्वं स्वीकृत्य समाजस्य महत्त्वं न मन्यन्ते। परशुरामः स्वाभिमानमग्रेकृत्य कस्यापि चिन्तां न करोति। तस्यायं सिद्धान्तः 'व्यक्तिवादी' इति कथयितुं शक्यते। तस्यानुसारेण समाजो व्यक्तिं प्रति नियन्त्रणं करोति। परशुरामस्य स्वाच्छन्द्यवैचित्र्यं दृष्ट्वा राम आश्चर्यचकितो भवति[1]। धनुर्भङ्गं प्रति परशुरामः स्वकीयां शान्तिमेव हेतुर्मन्यते। स कथयति यत् प्रशमस्यास्यायं भयङ्करः परिणामो यत् सामाजिकाः क्षत्रियाः, पुनराधिपत्यं प्राप्तवन्तः, धनूंषि च धारयन्ति। भुजमदेनोन्मत्तानां तेषां चरितानि श्रवणपथमायान्ति[2]। सः स्वीकरोति यदहमरण्यवासी नगरवासिनां व्यवहारेभ्योऽनभिज्ञोऽस्मि[3]।

भवभूते रामादीनि पात्राणि समाजस्य प्राधान्यं स्वीकुर्वन्ति। तेषामनुसारेण कश्चनापि स्वतन्त्रो नास्ति, तेषां जीवनं समाजाय विद्यते। व्यक्तिसमाजयोरङ्गाङ्गिभावसम्बन्धोऽस्ति। यथाङ्गस्यास्तित्वमङ्गिनं विना न भवितुमर्हति, तथैव पुरुषस्यापि समाजं विना न कुत्रापि कल्पनां कर्त्तुं शक्यते। व्यक्तिः केवलं समाजाश्रितैव न भवति, किन्तु स्वकीयं व्यक्तित्वमपि समाजे विलापयति। स्वतन्त्रो जनः स्वस्यैव शत्रुर्भवति। व्यवहारं तथाऽऽचरणं प्रति नियन्त्रणाय समाजस्यावश्यकता जायते। समाजस्य नियमोल्लङ्घनेन दण्डार्हताऽऽयाति। समाज एकं शरीरम्। निखिलस्यापि समाजस्यैक एवात्मा। स चाङ्गिभूतस्तिष्ठति। तत्र यः सर्वस्यापि मनः सदा विद्यते।

**रीतयः**

समाजेऽतिथिसत्कारस्य विशिष्टं महत्त्वमासीद्भवभूतिकाले। फलपुष्पाभ्यामर्घ्येणातिथिसत्कारः क्रियते स्म[4]। समाजे कश्मला किंवदन्ती त्वरितमेव विस्तारमेति।

यशसि निरवकाशं विश्वतश्चीयमाने
कथमपि वचनीयं प्राप्य यत्किञ्चिदेव।
कृतविततिरकस्मात् प्राकृतैरुत्तमानां
विरमति न कथञ्चित् कश्मला किंवदन्ती॥[5]

वार्धक्येन सर्वेषां शक्तिरपचीयते। सर्वविधशक्तिबाधिकेयं वृद्धावस्था। जटायुपः पक्षौ त्रुटितौ तथा स स्वल्पेनैवोत्पतनेन श्रमस्यानुभवं करोति।[6] अग्नौ स्वशरीरहवनस्यापि प्रथा श्रूयते। शरभङ्गः स्वशरीरं रामस्योपस्थितौ हव्यवाहे समाक्षिप्तवान्।[7] आत्मदाहोऽपि भवति

---

१. महावीरचरितम्—१।१६। २. तदेव—१।१९। ३. तदेव—१।५०-५१।
४. उ० रा० १।१-२। ५. महावीर० ३।४।
६. तदेव—५।४।४। ७. तदेव—५।८-९।

स्म ।[1] युगान्तरवृद्धत्वमधिगत्यापि शूर्पणखाल्पवयस्कं रामं वररूपेण कामयत इति मर्यादोल्लंघनमपि दृश्यते ।

अनेकयुगजीविन्यास्त्रेता यस्यास्त्रयोदशी ।
सा क्षीरकण्टकं वत्सं वृषयन्ती न लज्जिता ॥[2]

अत एव निर्मर्यादां कामुकीं लक्ष्मणो दण्डेन शास्ति । स तस्याः कर्णनाशोष्ठकर्त्तनेन दशाननमपि तिरस्करोति ।[3] रावणः सद्वंशजातोऽपि दुर्मत्या सीताहरणरूपं निन्द्यं कर्म कर्त्तुं चेष्टते ।[4]

मन्त्रसाधनकाले देवानां कृते किञ्चित् समर्पणाय संकल्पः क्रियते । तस्मिन् संकल्पे जीवहिंसापि सम्मिलितास्ति । अघोरघण्टो मालतीमाधवे चामुण्डां कथयति शस्त्रमुद्यम्य 'संकल्पितं दानं गृह्णात्विति ।' विवाहकाले नानाविधानि कृत्यानि भवन्ति । कर्णमधुरं वेदमन्त्रोच्चारणं क्रियते । मङ्गलाय सर्वे नानाविधाः चेष्टाः सम्पादयन्ति । नगरदेवस्थानं गत्वा देवानां पूजनमप्यावश्यकमस्ति ।[5] गुरुजना आशीर्वादं दत्वा मङ्गलकामनां कुर्वन्ति । कामन्दिकी मालत्या विवाहकाले आशीर्वादं ददाति—

विधाता भद्रं नो वितरतु मनोज्ञाय विधये
विधेयासुर्देवाः परमरमणीयां परिणतिम् ।
कृतार्था भूयासं प्रियसुहृदपत्योपनयतः
प्रयत्नः कृत्स्नोऽयं फलतु शिवतातिश्च भवतु ॥

अभीप्सिते विवाहे कन्याया या शोभा जायते, तस्या अपि चित्रणं भवभूतिना कृतम् ।[7] नेत्रस्पन्दनस्य शुभाशुभज्ञानस्य सर्वत्र प्रचलनमासीत् । स्त्रियो वामाक्षिस्पन्दनेन शुभमामनन्ति ।[8] विनोदस्यानेकानि साधनान्यासन् । शिष्टसमाजे काव्यशास्त्रनाटकादिभिर्विनोदा अनुभूयन्ते स्म । ग्रहणस्य वर्णनमपि भवभूतिना कृतम् ।[9]

राजगृहे चत्वरस्थानं भवति स्म । यत्र राज्ञः पट्टाभिषेकसमये रात्रिंदिवं समुत्सवः संजायते । द्वादशवार्षिकस्य क्षत्रस्यानुष्ठानं भवति स्म । कन्यापक्षवरपक्षयोर्मध्ये कश्चित् तिष्ठति । यस्य सहयोगेन विवाहकार्यं सम्पद्यते स्म ।

जनकानां रघूणां च सम्बन्धः कस्य न प्रियः ।
यत्र दाता ग्रहीता च स्वयं कुशिकनन्दनः ॥[10] इति ।

तदानीं किल प्रेतप्रथाऽपि प्रचलिताऽऽसीत् । प्रेतानां बहवो भेदा वर्णिता भवभूतिसाहित्ये ।[11]

---

१. म० च०—१०।१६ । २. तदेव—५।११ । ३. तदेव—५।१२ ।
४. तदेव—५।१२ । ५. मा० मा० ५।१२ । ६. तदेव—६।७ ।
७. मा० मा० ६।६ । ८. तदेव—१।९ । ९. तदेव—९।३९ ।
१०. उ० रामच० १।१७ । ११. मा० मा० ५।१३ ।

'कलमानन्दं लातीति कला' इति व्युत्पत्त्या कलाया मुख्यं प्रयोजनमानन्दाभिव्यक्तिरस्ति। केचित् 'कला कलार्थम्' इति सिद्धान्तं स्वीकुर्वन्ति। तेषां मते कलायाः प्रयोजनं जीवनसम्बन्धि नास्ति, किन्तु कलायां वृद्धिरेव कलायाः प्रयोजनमस्ति। तथापि जीवनं विहाय वयं किञ्चिदपि वस्तु चिन्तयितुमेव न समर्थाः। सर्वेषां चिन्त्यविषयाणां प्रभावोऽस्माकं जीवन आपतति। अतः 'कला जीवनाय' इति सिद्धान्त एवाभिमतो भवितुमर्हति। भवभूतेर्नाटकान्यपि विद्वत्परिषदां विनोदनायैवाभिनीतानि सन्ति।

केषाञ्चिन्मते तु कला जीवनतः पलायनाय भवति। केचिदात्मलाभाय कलाया उत्पत्ति स्वीकुर्वन्ति। 'कला' आनन्दाय भवतीति तु व्युत्पत्त्यार्थं गृहीत्वा केचित्स्वकीयं मतमभिव्यञ्जयन्ति। "कला सेवायै जायते" इत्यपि केचित् प्रतिपादयन्ति। केषाञ्चिन्मते तु मानवमनसि सर्जनस्यादम्या प्रवृत्तिर्भवति, तस्याः पूर्तय एव कलायाः सर्जनं जायते। भवभूतेरनुसारेणात्मनः कलैवामृता वाणीदेवी विद्यते, या कविभिः प्रार्थ्यत उपलब्धुम्। तद्यथा—

इदं कविभ्यः पूर्वेभ्यो नमोवाचं प्रशास्महे।
वन्देमहि च तां देवीममृतामात्मनः कलाम्॥[1] इति।

कलाया द्वौ भेदौ स्तः—उपयोगिनीकला, ललितकला च। ललितकलायाश्च पञ्चभेदाः सन्ति।

१. वास्तुकला,
२. मूर्तिकला,
३. चित्रकला,
४. सङ्गीतकला,
५. काव्यकला च।

वास्तुकलायां मन्दिरगृहादीनां निर्माणमायाति। भवभूतिसाहित्ये कालप्रियानाथस्य मन्दिरम्, राजप्रासादम्, नाट्यगृहमित्यादीनां निर्माणं वर्णितमस्ति। मूर्तिकलाया उदाहरणानि चामुण्डायाः स्तुतिप्रकरणे, स्वर्णबिन्दोः शिववर्णने चोपलभ्यन्ते। चित्रकलाया विकासो भवभूतिसाहित्ये दृश्यते। भित्तौ चित्रितानि चित्राणि संस्कृतसाहित्यस्यानुपमेयानि निधिस्वरूपाणि सन्त्युत्तररामचरिते। एषु चित्रेषु भावप्रदर्शनमपि तूलिकया चित्रितमनुमीयते। मालतीमाधवे तु माधवस्य प्रतिच्छन्दकं मालतीपार्श्वे विद्यते। सङ्गीतकलाया विकासोऽपि ज्ञायते। सङ्गीतकलाया वर्णनमुपलभ्यते।[2]

काव्यकलाया विकासस्तु भवभूतेर्नाटकत्रयमेव विद्यते।

**नारी**

महाकविना भवभूतिमहोदयेन नारीणां कन्या, पत्नी, मातेति त्रिविधोऽपि रूपश्चित्रितः। सामाजिक्यां परिस्थितौ नारीणां विभिन्ना व्यवहारा जायन्ते। भवभूतिर्नारीव्यवहाराणां परि-

---

१. उ० रामचरितम्—१।१। २. महा० च० १।१।

चित्रणे दत्तचित्तोऽस्ति। कन्याः साधारण्या भवन्ति। ताः सर्वैरपि याचितुं शक्यन्ते। अत एव सीतां राक्षसोऽपि रावणः कामयितुं शक्नोति।

साधारण्यान्निरातङ्कः कन्यामन्योऽपि याचते।
किं पुनर्जगतां जेता प्रपौत्रः परमेष्ठिनः[1]॥ इति।

समाजे स्त्रीणां स्थानमुत्तमं न प्रतीयते। अन्धविश्वासहेतुनैव सीतायाः परित्यागो जातः। साधुत्वेऽपि स्त्रीणां कृतेऽपवादः प्रचलति स्म तदानीम्।

सर्वथा व्यवहर्तव्यं कुतो ह्यवचनीयता।
यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः[2]॥ इति।

अपवादस्य प्रसृतिर्जनानां जिह्वासु नर्तयन्तीव सर्वत्र शीघ्रमेव जायते।

स्त्रियोऽलङ्कारप्रिया आसन्। सीताऽप्यलङ्कारादिविभूषणविभूषिताऽऽसीत्। विवाहकाले तु तदावश्यकमासीत्। रामः सीतायाः करेण सहाभूषणस्यापि स्मरणं करोति।[3]

वृद्धानां स्त्रीणां पुत्रवधूदर्शनस्याभिलाषा भवति स्म। पुत्राणां पुत्रीणाञ्च विवाहकरणस्योत्कण्ठा सर्वेषां हृदि वर्तते। विवाहादिकर्म आनन्दस्य काल आसीत्। तस्य स्मरणेन रामोऽतीतकालं प्रति सस्नेहो जायते, तथा तत्कालं प्रति स्वकीयामाशक्तिं द्योतयति। तथा च निभालितम्—

जीवत्सु तातपादेषु नूतने दारसंग्रहे।
मातृभिश्चिन्त्यमानानां ते हि नो दिवसा गताः[4]॥ इति।

पतिव्रता स्त्री ग्नितुल्या पूजनीया पवित्रा च मन्यते। अग्निरपि तां परिशोधने समर्था न गण्यते। जनकः स्वकीयां दुहितरं प्रति निर्दिश्य कथयति यदग्निर्नार्हति मत्प्रसूतिपरिशोधने। समाजे दुर्जनादतिरिक्त एको वर्गः सज्जनानामप्यासीत्। ते च सज्जनाः स्त्रीणां सम्मानं वाञ्छन्ति स्म। जनसमाजे स्त्रीणां गमनं सर्वत्रासीत्। तपोवनेऽपि विद्यामधिगन्तुं सा स्वतन्त्ररूपेण भ्रमितुं समर्था। आवरणस्य प्रथाया संकेतोऽपि भवभूतिसाहित्ये दृश्यते।[5] स्त्रियोऽपि ब्रह्मविद्याया विषये निपुणा भवितुमर्हन्ति। वेदादिविषये तासामप्यधिकारो दृश्यते। वाल्मीकिसदृशस्य महर्षेः पार्श्वे मुनयः स्त्रियश्चाध्ययनं कुर्वन्ति स्म ब्रह्मविद्यायाः।

पत्नी पत्युः सहधर्मचारिणी विद्यते। सा गृहकार्येषु परामर्शदात्री भवति। मन्दोदरी रावणाय परामर्शं ददाति। सा सुखदुःखयोर्भोगविलासयोश्च पुरुषेण सह वसति। तस्या आवश्यकता धर्मकार्येष्वपि जायते। उक्तञ्च—

नियोजय यथाधर्मं प्रियां त्वं धर्मचारिणीम्।
हिरण्मयाः प्रतिकृतेः पुण्यां प्रकृतिमध्वरे॥ इति।

---

१. म० च०—१।३१। २. उ० रामचरितम्—१।५।
३. उ० रामचरितम्—१।१२। ४. तदेव—१।१९। ५. म० च० १।२६–२७।

भवभूतेर्नारीपात्रेषु क्रूरा नार्योऽपि सन्ति । कपालकुण्डला शूर्पणखा चोदाहरणे स्तः। किन्तु नायं भवभूतेरादर्शः । भगवती वसुन्धरा सर्वदैव सीतायाः कल्याणकारिणी विद्यते । नारी पशून् पक्षिणः प्रत्यपि सन्तानसदृशं स्नेहं करोति ।

संस्कृतसाहित्ये नारीचरित्रस्य महत्त्वमप्यधिकं न प्रदत्तं विद्यते; किन्तु महाकविनानेन कामन्दक्याश्चरित्रस्य यन्महत्त्वं प्रकरणेऽस्मिन्नङ्कितम्, तदन्यत्र दुष्प्राप्यमस्ति । भवभूतिकाले तनयाया उत्पत्तिर्जुगुप्सायोग्यासीत् ।[1] इत्थञ्च भवभूतेर्नार्यो भारतीयसंस्कृतेः सभ्यतायाश्च पूरकाः सन्ति ।

**समाजे पारस्परिकसम्बन्धः**

समाजे पूज्यानां व्यतिक्रमे जाते सति प्रायश्चित्तमत्यावश्यकमस्ति । जामदग्न्यो वसिष्ठ-विश्वामित्रौ प्रति व्यतिक्रमहेतुना तपश्चरितुं वाञ्छति । गुरुमघोरघण्टं माधवेन हतं ज्ञात्वा कपालकुण्डला माधवं प्रति सशपथं कथयति, यदस्य प्रतीकारं मयाऽवश्यमेव कर्त्तव्यम् । काले काले च सामाजिकोत्सवा आयोज्यन्ते स्म । तस्मिन्नुत्सवे जनसमुदाय एकत्रो भवति स्म । सुदूरदेशाज्जनाः समागत्य मनोरञ्जनं कुर्वन्ति स्म कालप्रियानाथस्य यात्रायाम् । भवभूते-स्त्रयाणां नाटकानामभिनयप्रदर्शनं तत्रैव सञ्जातम् । उत्सवायोजनं प्रचारस्यामूल्यं साधन-मासीत् । अस्मिन् काले नवीनया कलाकृत्या जनानामनुरञ्जनं विधानाय नूतनाः कलाकाराः सचेष्टा जायन्ते स्म । तमालपत्ररसेन तालीपत्रे पत्रलेखनस्यापि प्रथाऽऽसीत् । परशुरामेणो-ल्लिखितं पत्रं रावणमन्त्रिणे माल्यवते प्राप्यते । देवपूजाया महत्त्वं सर्वातिशायि विद्यते । विश्वा-मित्रो नित्यक्रियया निर्वृत्तो भूत्वैव रामेण सहायोध्यां मिलितुं यतते; किन्तु देवपूजायां विघ्नं न वाञ्छति ।

**पुरीं यथा स्थितौ यातं विलम्बेथां च मान्तरा ।**
**अरुन्धतीसहचरं ज्योतिर्वा सम्प्रतीक्षते**[2] ।। इति ।

यदा वाल्मीकिपार्श्वाद्, अन्तेवासिमी रामायणं पुस्तकमादाय भरतं प्रति गम्यते, तदा कुशोऽपि तद्रक्षणाय गच्छति । अनेन ज्ञायते यद् चौरादिबाधा अपि जायन्ते स्म ।

नीवारेणोदनस्य पाको जायते, तथा कर्कन्धुफलमिश्रस्य शाकस्य प्रयोगो जायते स्म । ओदनान्निःसृतं मण्डं मृगादयः खादन्ति स्म, तथा घृतस्य प्रयोगोऽप्योदने भवति । महर्षयः कूर्चवन्तो जायन्ते स्म । ते सस्त्रीका आसन् ।

**विज्ञानम्**

भवभूतेर्वैज्ञानिकं ज्ञानमतीव सूक्ष्मतरं विद्यते । पुष्पकविमानस्योपयोग आधुनिकानां वैज्ञानिकानामपि कृते विस्मयकरोऽस्ति । पुष्पकयानं कुबेराद् रावणेनानीतमस्ति । विभीषणस्तद्-यानं रामायोपहरति । रामः पुष्पकमारुह्यैवायोध्यामायाति । दण्डकारण्यं प्रति गमनेऽपि पुष्प-कस्य प्रयोगो जायते । पुनश्च तद्यानमारुह्य रामो वाल्मीकेराश्रमं गच्छति, तथाऽयोध्यां प्रति निवर्तते । विमानयानं मनोरथस्यानुसारेण गच्छति, विरमत्यवतरति च । विभीषणः पुष्पकयानस्य

---

१. मा० मा० ७।१; २. महावीरचरितम्—७।१८ ।

विषये कथयति यदयं विमानराजोऽप्रतिहतगतिः, इच्छानुसारगमनशीलः, यथादेशस्थाष्णुस्तथा मनोरथस्यानुकूलश्च विद्यते ।

असंरुद्धगतेरिष्टप्रवृत्तेर्वशवर्तिनः ।
मनोरथस्यानुगुणं सर्वदा यस्य चेष्टितम्[1] ॥ इति ।

वाल्मीकीये रामायणेऽपि विमानस्यास्य वर्णनमस्ति । तथा ह्युक्तम्—

न तत्र किञ्चिन्न कृतं प्रयत्नतो
न तत्र किञ्चिन्न महार्घरत्नवत् ।
न ते विशेषा नियताः सुरेष्वपि
न तत्र किञ्चिन्न महाविशेषवत्[2] ॥

रामः सीताया दोहदरूपाया वनगमनाया अस्खलितसम्पातं रथमुपस्थापयितुं लक्ष्मणमादिशति[3] । वातायनस्य निर्माणं तत्काले भवति स्म । यौगिकबलेनोड्डयनस्य वार्तापि भवभूतिसाहित्ये समुपलभ्यते ।

सा योगिनीयमतिरयविघटितजलदाभ्युपैति नो यस्याः ।
वागमृताजलासारो जलदजलासारमतिशेते[4] ॥

पुटपाकस्य ज्ञानमायुर्वेदस्य विकासं द्योतयति (उ० रा० च० ३।१) । शल्यचिकित्सा तत्काले निश्चीयते (म० च० ४।२३) । शम्भोर्धनुः शम्भोर्वरादनुध्यानमात्रोपस्थायि विद्यते । निमिवंशीयानां जनकादीनामनेन वैज्ञानिकत्वमन्वेष्टुं शक्यते (म० च० १।५२) । अथर्वणोऽभिचारक्रियाया वर्णनं महावीरचरिते दृश्यते (म० च० १।६१) । अयस्कान्तस्यापि प्रयोगो जायते स्म (उ० रा० च० ४।२१) । विमानमण्डलानां प्रयोगो लवचन्द्रकेतुयुद्धे भवति । तेषु ध्वजांशुकं संलग्नं भवति । ते कर्बुरकेतुचामरैः सुशोभिता भवन्ति स्म (उ० रा० च० ६।४) । ओषधीनां चयनं महावने क्रियते स्म (म० च० ५।२४) । वज्रलेपस्य चर्चा बहुवारमायाति । वज्रलेपस्य (सिमेण्ट) इत्यर्थस्य प्रयोगः शरीरे त्रुटितस्यास्थिनः पुनर्दृढीकरणायायुर्वेदे प्रयुज्यते (उ० रा० च० ३।४३) । कार्ष्णायसद्वारा रथनिर्माणं लङ्कायां रावणेन कारितमासीत् । अन्येन धातुनापि रथस्य निर्माणं भवति स्मेति ज्ञायते । यतो हि रथस्य विशेषरूपेण कार्ष्णायसप्रयोगोऽस्त्यत्र । सर्वतोभद्रनाम्न्याट्टालिका आसीद्रावणस्याशये (म० च० ६।८-९) । तत्र रजतसोपानमासीत् । अनसूयानामाङ्कितं वस्त्रं सीताया आसीत् । तेन चित्राङ्कितं वस्त्रं प्रतीयते (म० च० ७।१६-१७) ।

तारकचक्रस्य दिवसेऽपि स्थितिरस्ति । अतिदूरात् प्रकृष्टप्रकाशस्य सूर्यस्य बाधहेतोश्च तस्य दर्शनं न प्राप्यते । रामो यदा विमानाद् दिवसे आकाशमार्गेण गच्छति, तदा तु तस्य तारकचक्रस्य दर्शनं भवतीति वैज्ञानिकं तथ्यमुद्घाटितं महाकविना महावीरचरिते । दृश्यतामत्र—

---

१. महावीरचरितम्—७।७ ।   २. रामायणम्—सु० का० ८।३ ।
३. उ० रा० च० १।३३–३४ ।   ४. मा० मा० १०।१७ ।

संस्तूयते विप्रकर्षाद् भौमा नोपाधयः स्फुटम् ।
आन्तरीक्षाः पुनरमी सर्वतः सदृशा इव[1] ।। इति ।

भौमादिनक्षत्राणां तत्र जनोपस्थितीनाञ्च वर्णनं प्राप्यते । बहूनां जनानामायुर्मन्वन्तर-पर्यन्तमासीत् । गृध्रराजजटायुरप्येवमेवासीत् । संपातिर्विष्णुचरणपर्यन्तं लोकालोकपर्यन्तं च स्वगत्याक्रम्य परिचयं कृतवान् । तथा चोक्तम्—

कल्पस्यादौ मम परिचयस्तावदासीदुदस्थाद्
यावद्विष्णोरुपरि चरणश्चारुगङ्गापताकः ।
पर्यन्तेष्वप्यवधिवलयस्तेजसां यावदद्रि-
र्लोकालोकः परिसरगतः सप्तमस्याम्बुराशेः ।। इति ।

रात्रौ समयज्ञानाय यामविच्छेदपटहस्ताड्यते स्म (मा० मा० ७।१-२) । चीनांशुकम्, धवलांशुकम्, उत्तरीयरक्तवर्णांशुकञ्च वर्णितानि सन्ति (उ० रा० च० ६।५) । ऊर्ध्वोत्पतनेन गिरिणदीनगरवनादयो नेत्रेन्द्रियेण स्पष्टतरं नावलोक्यन्ते (मा० मा० ६।१) । आधिव्याधिशब्दयो-रेकत्रैव प्रयोगोऽनेन विहितः (मा० मा० ९।२८) । धूमरेखया शशधरस्य कला ग्रस्ता जायन्ते । धूमरेखाया उदयेनोत्पातो जायते (मा० मा० ९।५०) । रावणस्य रथः परःसहस्रैः पिशाचवदनैः खरैर्युक्तोऽस्ति । तमेवारोप्य सः सीतां लङ्कां नयति स्म (म० च० ५।१७) । कर्त्तनकर्मणि क्रकचस्य प्रयोगो भवति स्म । अयस्कान्तशकलेनायोधातुराकृष्टो भवतीति ज्ञानमासीत् (उ० रा० च० ४।२१) । अमृताञ्जनम्, अयस्कान्तशकलम्, जृम्भकास्त्रम्, आग्नेयास्त्रम्, वारुणास्त्रम्, वायव्यास्त्रम्, निकषः, अन्तकवक्त्रयन्त्रजृम्भाविडम्बिनचापस्यापि वर्णनं बहुशो भवभूति-साहित्ये प्राप्यते ।

इत्थञ्च भवभूतिसाहित्ये विज्ञानस्य ज्ञानमस्य भौतिकप्रगतेर्द्योतकमस्ति । भौतिकं साधनमुपलभ्यैव जनोऽध्यात्मचिन्तने समर्थो भवति । उपर्युक्तविवरणेन ज्ञायते यद्भवभूतिना तात्कालिकस्य समाजस्य सर्वविधानामङ्गानां संकेतः स्वकीयेन नाटकत्रयेण प्रदत्तः । अन्वेषणेन ज्ञायते यन्नाट्येऽपि सर्वं ज्ञानं निहितं भवितुमर्हति । अत एव नाट्यशास्त्रकारेणोक्तम्—

न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला ।
न संयोगो न तत्कर्म नाट्येऽस्मिन् यन्न दृश्यते[1] ।।

● ● ●

---

१. नाट्यशास्त्रम्—१।११४ ।

# किं नाम योगतन्त्रम्

डॉ० रामजीमालवीयः

भू० पू० प्राध्यापकः, योगतन्त्रविभागस्य

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी

योगस्त्वमसि देवेशि योगी चाहं सनातनः ।
योगिनेदं त्वया विश्वमाविष्टं शम्भुना मया ॥[1]
शिवशक्त्योः समायोगो यस्मिन् काले विधीयते ।
सा सन्ध्या कुलनिष्ठानां योग इत्यभिधीयते ॥[2]

योगतन्त्रदृष्ट्या योगो नाम शिवशक्त्योः सामरस्यमेव । एतदेव शिवशक्तिसङ्घट्ट-नाम्नाऽपि प्रथते । शिवो नाम चिदभिन्नप्रकाशात्मकत्वम्, विमर्शो नामेच्छापरपर्याया सर्वाकार-योगिनीशक्तिः ।

अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः ।
हकारोऽन्त्यकलारूपो विमर्शाख्यः प्रकीर्तितः ॥[3]

अकारहकारयोरनयोः (शिवशक्त्योः) समाहारः, अर्थादन्योन्यमवस्थानं सामरस्यं नाम । इयमेव समरसता शिवयोगिभिः प्राप्यं परं धाम । एतादृशः शिवशक्त्यात्मकः संविद्विशेषो योगस्तन्यते विस्तार्यते (तनु विस्तारे १४६४, तनु श्रद्धोपकरणयोः १८४१, तनोतीति तन् त्रायते इति त्रः, तंश्चासौ त्रः तन्त्रः, विस्तारो वैशिष्ट्यापन्नो रक्षकः, तानयति श्रद्धां समुत्पादयत्युपकरोति कल्याणलीलां समुल्लासयत्ययत्नसम्पन्नसमीहितार्थं करोतीति तन्त्रम्, तननाज्जगद्विस्तारान्माया-प्रपञ्चात् त्रायते रक्षयतीति तन्त्रम्) । विद्या-योग-क्रिया-चर्यादिप्रक्रियापरकैः शास्त्रैरनेनेति योग-तन्त्रम् । सनक-सनन्दन-सनत्कुमार-वशिष्ठ-शुकादिभिः पञ्चयोगिभिर्ब्रह्मनिष्ठैर्नैष्ठिकब्रह्मचारिभि-श्चीर्णमवगतं प्रचारितश्च ज्ञानक्रियासामरस्यमपि योगतन्त्रनाम्ना लोके प्रसिद्धिमवाप ।

### योगस्वरूपम्

कुण्डलिन्या अपरपर्याया सा योगरूपा शक्तिः सर्वेषां योगतन्त्राणामाधारभूमिः । यत्र यत्र तन्त्रागमेषु प्रक्रियाप्रकरणात्मना योगवर्णनं विराजते कुण्डलिनीमधिकृत्य तत्सर्वं योगतन्त्रम् । यथा—

सशैलवनधातॄणां यथाऽऽधारोऽहिनायकः ।
सर्वेषां योगतन्त्राणां तथाऽऽधारो हि कुण्डली ॥[4]

---

१. महार्थमञ्जरी—पृ० १२२ ।
२. कुलार्णवे ८।९९ ।
३. सङ्केतपद्धतिः ।
४. हठयोगप्रदीपिका ३।१ ।

परमयोगिनः शिवस्येशान-तत्पुरुष-अघोर-वामदेव-सद्योजात-पञ्चमुखैर्निर्गतं ज्ञानं गुरुशिष्य-परम्परयाऽद्य यावदागच्छतीत्यागमशब्दस्य पारम्परिकोऽर्थः। अत एव—**'आगमो ज्ञानमित्युक्त-मनन्ता ज्ञानकोटयः'**[1] इति वचनादागमस्य ज्ञानमिति पर्यायः। तज्ज्ञानं योगादृतं नहि—

**योगात् सञ्जायते ज्ञानं ज्ञानाद् योगः प्रवर्तते।**
**योगज्ञानाभियुक्तस्य प्रसीदति महेश्वरः॥**[2]

कौलोपनिषन्मतेन सर्वात्मतासिद्धिरेव मोक्षः। सर्वात्मतेत्यत्र सर्वं एव आत्मा यस्य तद्भावः, तस्य च सिद्धिरित्यर्थः कृतः, अर्थात् सर्वस्य स्वात्माभेदेन ज्ञानमेव मोक्षपदार्थः। अत एव देवीभागवते—**'सर्वं खल्विदमेवाहं नान्यदस्ति सनातनम्'**[3] इत्यत्र समानार्थकज्ञानस्य मोक्ष-जनकत्वख्यापनात्।

पञ्चविषयाणां प्रपञ्चस्वरूपं विवृण्वन् तेषामपि ज्ञानस्वरूपमेव निर्धारितम्। यथोक्तं योगवाशिष्ठे—**'सर्वत्र पञ्च भूतानि षष्ठं किञ्चिन्न विद्यते'**[4] इति। ज्ञानशब्दस्यापि विग्रहार्थो दर्शितः। ज्ञश्चासावनश्च ज्ञानमिति। अत एव प्राणवन्तोऽपि जीवा विषयानजानन्तस्तिष्ठन्तीति तेषां ज्ञानस्वरूपत्वं निर्धारितं **'योगो मोक्षः'**[5] इत्यादिना। स च मोक्षः—

**मोक्षो हि नाम नैवान्यः स्वरूपप्रथनं हि सः।**
**स्वरूपं चात्मनः संवित्......................॥**[6] इति।

**तन्त्रस्वरूपम्**

आत्मनः संविदेव सर्वत्र तन्त्रागमेषु योगः। तन्त्रागमशब्दौ च भारतीयवाङ्मये शाक्त-शैवदर्शनयोर्निरूढिं गतावनादिकालादेव प्रसिद्धौ। सत्यपि भेद आगमतन्त्रयोः तात्त्विकम् (षट्त्रिंशत् तत्त्वस्वीकारे) किमपि पार्थक्यं नास्ति। अस्य दर्शनस्य स्वच्छन्दमालिनीविजयोत्तरादितन्त्राम्भोधे-राडोलनं कृत्वा काश्मीरशैवाचार्यैर्महामाहेश्वरैरीश्वराद्वयवादरूपस्य देदीप्यमानग्रन्थमालाऽऽ-विष्कृता। अस्य दर्शनस्योद्धारकेण कैलासशिखरे भ्रमता श्रीकण्ठाभिधेन शिवेनैतद्दर्शन-सिद्धान्तानां शैवसम्प्रदायदृढाभिमानी दुर्वासाज्ञानोपदेशेनानुगृहीतः। दुर्वाससा च मानवभूम्यवतारण-पूर्वकं शिवसूत्रं शिवोपलगुहातः प्राप्य शिवप्रेरणया काश्मीराभिजनस्य वसुगुप्तस्य स्वप्नावस्थायां ज्ञानशक्ति समुद्दीप्य प्रदत्तम्। तदुक्तम्—

**कैलासाद्रौ भ्रमन् देवो मूर्त्या श्रीकण्ठरूपया।**
**मुनिं दुर्वाससं नाम भगवानूर्ध्वरेतसम्॥**[7] इति।

अन्यच्च—

**लब्धं महादेवगिरौ महेश स्वप्नोपदिष्टात् शिवसूत्रसिन्धौ।**
**स्पन्दामृतं यद्वसुगुप्तपादैः श्रीकल्लटस्तत्प्रकटीचकार॥**[8] इति।

---

१. स्वच्छन्दतन्त्रम्—४।३४०। २. कूर्मपुराणम्—उ० भा० ११। ३. देवीभागवतम्।
४. योगवाशिष्ठे। ५. कौलोपनिषत्। ६. श्रीतन्त्रालोकः १।१५६।
७. शिवदृष्टिः, ७।१०९-१०। ८. स्पन्दवृ० कल्लटः।

इदं ज्ञानं दिव्यौघसिद्धौघमानवौघौघत्रयपरम्परया लोकेऽवतीर्णमस्मद्गुरुपर्यन्तं कालक्रमेणागतं ज्ञानं तन्त्रागमशब्दवाच्यम्। महामाहेश्वरेण जयरथेनापि—

**इत्यागमं सकलशास्त्रमहानिधानाच्छ्रीशम्भुनाथवदनादधिगम्य सम्यक्।**
**शास्त्रे रहस्यरससन्ततिसुन्दरेऽस्मिन्···· ··· ··· ···· ··· ··· ॥**[1]

एतेन स्फुटं प्रतीयते यद् गुरुमुखोद्गतं ज्ञानमेव तन्त्रागमपदेन सङ्केतितमत्र श्लोके। अग्रेऽपि जयरथेन—

**स तन्त्रं जज्ञे रुद्र-शिव-भैरवाख्यमिदं त्रिधा।**
**वस्तुतो हि त्रिधैवेयं ज्ञानसत्ता विजृम्भते।**
**भेदेन भेदाभेदेन तथैवाभेदभागिना ॥**[2] इति।

एतेन भेद-भेदाभेद- अभेदप्रतिपादकक्रमेण त्रिप्रकारकमिदं ज्ञानसत्रात्मकं शास्त्रमुद्भूतमिति राद्धान्तः।

नेत्रतन्त्रे षोडशाधिकारे षड्विंशकारिकायाम्—**'ह्यागमस्य प्रवक्ष्यामि क्रियते तु यथेच्छया'** इत्यागमस्य वचनकर्मत्वं निर्धारितम्। एतेनाप्यस्यागमस्य तन्त्रापरपर्यायस्य ज्ञानमेवार्थो वाचि प्रयुक्तं निर्धार्यते। इममेवार्थं लक्ष्यीकृत्य तत्त्ववैशारद्यां वाचस्पतिमिश्रेणोक्तम्[3]—आगच्छन्ति बुद्धिमारोहन्ति यस्मादभ्युदयनिःश्रेयसोपायाः स आगमः, तन्यते भावि जगतः सूक्ष्मं रूपं यत्र तन् तन्त्रमिति शब्दव्युत्पत्त्या सूक्ष्माकृतिसम्पन्नाभेदतत्त्वात्मकज्ञानस्यैव तन्त्रत्वं वक्तुं पार्यते। तदेव सूक्ष्मं वस्तुतत्त्वं किञ्चिदुन्मिषितं सद् भेदाभेदरूपे गृह्णाति। प्रकटस्फुरणरूपेण विकासे तु देशकालाकारादिभेदप्राकट्ये भेदरूपतामपीत्येकस्यैव ज्ञानस्याभेदापन्नस्य देशकालाकाराद्युन्मेषक्रमेणोक्तयोजना निष्पद्यते। तदेव—

**तस्मात् सर्वप्रयत्नेन शिवज्ञानं समभ्यसेत्।**
**तदा सिद्ध्यन्त्यशेषाणि कर्माण्येवान्यथा न हि ॥**[4] इति।

**शिवशक्तितत्त्वम्**

एतेन सर्वकर्मसम्पादनहेतुभूतं शिवप्रोक्तं योगतन्त्रात्मकं ज्ञानमेव सदाभ्यस्ततया साधकं महोपकारकश्चोक्तम्। अतः शिवशक्त्योरन्योन्यावस्थानं सामरस्यात्मकात्मनः संविद्रूपयोगार्थं यतनीयं शैव-वैष्णव-दौर्गार्कबौद्धजैनगाणपत्याद्यागमेषु प्रक्रियाप्रकरणात्मना स्थितं शास्त्रं योगतन्त्रम्। तत्र शैवशाक्तागमयोः क्रमेण शिवस्य शक्तेर्वा प्राधान्यमवलम्ब्य तत्तत्तत्त्ववर्णनं क्रियते। **'योगस्त्वमसि देवेशि'** इत्यादिना शक्तेर्जगद्रूपत्वं शिवस्य च शक्तिस्वामित्वेन योगाधिष्ठातृत्वमर्थाद् योगित्वं स्फुटरूपेण प्रतिपदोक्ततया प्रतिपादितम्।

अत एव शाम्भवैक्यदीपिकायाम्—विश्वमिदं मन्मयं मत्कार्यत्वात्, यदित्थं तत्तथा, यथा शरीरम्। इदञ्च मत्कार्यम्, तस्माद् मन्मयमिति। अत्रानुमानाकारे कार्यकारणयोरभेदोपचारेण मत्कार्यत्वाद्विश्वस्य शिवमयत्वमुक्तम्। पूर्ववचनेन च शक्तिमयत्वमिति, पूर्वोत्तरसन्दर्भेण शक्ति-

---

१. श्रीतन्त्रालोकवि० १।३२।　　२. श्रीतन्त्रालोकवि० १।४५।
३. तत्त्ववैशारदी।　　४. श्रीनेत्रतन्त्रम्–८५।

शक्तिमतोरभेदत्वसिद्धान्तः साधु परिपोषितः। एतेनापि योगशास्त्रस्य तद्गतसकलशाखाप्रशाखादेः शिवसम्बन्धित्वं सिद्ध्यति। तस्य द्वौ पक्षौ दृग्गोचरौ—बाह्याभ्यन्तररूपौ। अन्तर्गता हि प्रकाशव्याप्तिस्तस्यैव प्रकाशस्य बहिर्गतत्वे अहमित्यभिधानव्यपदेशः। प्रकाशः स्वतः सनातनरूपतया परिपूर्णः, तस्यान्तर्गतत्वं वा भवेत्, बहिर्गतत्वं वा। न ह्यन्तर्गतत्वबहिर्गतत्वमात्रेणैकस्य वस्तुन उक्तस्थानपरिवर्तनभेदेन भेदो भवितुमर्हति। तस्मात् पूर्वोक्तव्यवहारद्वयं सर्वजनप्रसिद्धमनपह्नवनीयमिति। अन्तर्गतं प्रकाशतत्त्वं चिन्मयानन्दमयं च स्वात्मपरमेश्वरेणाभिन्नम्। यथोक्तम्—

**स्वात्मैव सर्वजन्तूनामेक एव महेश्वरः।**
**विश्वरूपोऽहमिदमित्यखण्डानन्दबृंहितः** ॥[1] इति।

अनया कारिकया सुस्पष्टमुद्घोष्यते यत् स्वात्मतत्त्वं विश्वात्मकमिदमात्मकमहमात्मकञ्च। आपातदृष्ट्या भेदत्रयस्य भानेऽपि विचारदृष्ट्याऽखण्डवस्तुनि वस्तुनः पारमार्थिकमेकत्वमेव, भेदाभासस्तु काल्पनिकः। न ह्यन्तर्बहिर्भावभेदेन वस्तुतत्त्वे कोऽपि तात्त्विको भेदः, भेदस्येच्छाशक्तिव्यापारत्वात्। सैवेच्छाशक्तिः शक्तिसामान्यरूपाऽभिधानभेदेन तस्याऽभेद औपाधिकः।

अत एकैव शक्तिः प्रयोजनभेदेन कार्यभेदेन देशकालवस्तुभेदेन भिन्नतयाऽभिधीयते। सैव शक्तिः सर्जनकाले सृष्टिरूपेण, रक्षणकाले स्थितिरूपेण, संहरणकाले संहाररूपेण, निग्रहकाले तद्रूपेण, अनुग्रहकाले कृपारूपेणाभिधानाद् भिद्यते, न तु वस्तुगतत्वेन। अत एकमेव मूलं तत्त्वं विश्वोन्मुखत्वे विश्वात्मकरूपेण, एकोन्मुखत्वे इदन्त्वेनान्तर्गतस्य चिदानन्दपरमार्थस्य वही रूपत्वेऽहंरूपतया भासते। न तु तत्तद्भेदाभासेन वस्तुनो भेदो भवति। यथोक्तं विरूपाक्षपञ्चाशिकायाम्—

**सन्तानान्तरवाहे ज्ञाता व्यावृत्तभासनः क्रमिकः।**
**जीवाख्यो मद्योगान्मद्वत् स्यादक्रमाभासः** ॥[2] इति।

**अयं भावः**—नीलसङ्कल्पविकल्पाद्येकसन्तानसमनन्तरं पीतसङ्कल्पविकल्पादौ सन्ताने वहति सति व्यावृत्तभासमानो ज्ञाता क्रमिको नीलस्यावभासकोऽस्मि, पीतस्यावभासकोऽस्मीति परस्परपरिहाररूपेणावस्थितग्रहणत्वाद् ग्राहकः पूर्वोक्तो ज्ञाता क्रमवान्। यदा चेत्थं क्रमिकता, तदैव चासौ परमेश्वरो जीवाख्यां लभते। परमेश्वरयोगात् पारमेश्वरे या क्रमिकता, सा वेद्योपाधिक्येव। वस्तुगत्या नीलपीतयोरनुवृत्तोऽवभासोऽनुवृत्तप्रवाहस्यानुकरणमात्रमेव, न तत्र क्रमस्य कापि सत्ता, मूलतत्त्वस्याक्रमिकत्वात्। न हि प्रकाशे क्रमिकता काऽप्यपेक्षिता, तस्याक्रमिकत्वात्। तथैव ज्ञातर्यपि तत्तज्ज्ञानबोधोपरक्तस्य भेदस्य न ग्राहकाभेदः। वेद्यज्ञानस्याकस्मिकत्वान्मध्यपातित्वात् क्षणिकत्वाच्च नीलपीतादिग्रहणदशायामपि प्रकाशैकात्मतया प्रकाशात्मकं वस्त्वक्रममेवावतिष्ठते।

अतः प्रबुद्धस्य यदा विश्वप्रतियोगित्वम्, तदैव शिवत्वम्, यदा तु प्रतिनियतार्थप्रतियोगियोगित्वम्, तदा ग्राहकत्वमिति द्वैरूप्यानतिक्रमाज्जीवत्वसंस्कारः सदानुवृत्तो ममैवाक्रमपरिपूर्णैकघनप्रकाशात्मकस्वात्मशिवत्वस्वभावत्वप्रबोध उक्तदृष्टान्तेन नीलपीतादिज्ञानदशायामपि पूर्वोक्तभेदज्ञानं दूरमुत्सारितम्। प्रबुद्धेन इति **'प्रबुद्धः सर्वदा तिष्ठेत्'** इति स्पन्दकारिकोक्तसिद्धान्तः

---

१. ईश्वरप्रत्यभिज्ञा–४।२। २. विरूपाक्षपञ्चाशिका।

अक्षुण्ण एव। शक्तिशक्तिमतोरभेदज्ञानग्रहिला विपश्चितः सदैव बाह्याभ्यन्तरोपाधिभेदग्रहं विधूय सदा निराभासत्वमेवानुसन्दधते। तत्र शक्तिसूत्रापरपर्यायप्रत्यभिज्ञाहृदयनाम्नि ग्रन्थे शक्तेः सृष्टि-संहारयोर्हेतुत्वं वर्णितमुपलभ्यते। **'चितिः स्वतन्त्रा विश्वसिद्धिहेतुः'**[1] इति सूत्रेण चिदेव भगवती स्वच्छस्वतन्त्ररूपा तत्तदनन्तजगदात्मना स्फुरति।

मार्कण्डेयपुराणेऽपि **'चितिरूपेण या कृत्स्नमेतद्व्याप्य स्थिता जगत्'**[2] इति। अन्यच्चापि—

**यदा सा परमा शक्तिः स्वेच्छया विश्वरूपिणी।**
**स्फुरत्तामात्मनः पश्येत् तदा चक्रस्य सम्भवः॥**[3] इति।

यस्मिन् काले प्राणिनामदृष्टवशात् स्वान्तःसंहृतविश्वसिसृक्षया सैव पराशक्तिर्विमर्शरूपिणी स्वेच्छया विश्वरूपिणी विश्वं सृजति, तदा षट्त्रिंशत्तत्त्वात्मकविश्वसृष्टिकाले चक्रस्य विश्व-मयस्य परदेवताचक्रस्य सम्भवः। यथा वदति महामाहेश्वराभिनवगुप्तपादाचार्यः—चक्रशब्दस्य प्रवृत्तौ किं निमित्तमित्याशङ्क्याह—

**विकासात्तृप्तितः पाशोत्कर्तनात्कृतिशक्तितः।**
**चक्रं कसेश्चकेः कृत्या करोतेश्च किलोदितम्॥**[4]

धातुचतुर्थान्वयादत्र चक्रशब्दः। तेन विकसति, चकास्ति, कृन्तति, करोतीति चक्रम्। आज्ञावतारेऽप्युक्तम्—**'स्वेच्छयैव जगत्सर्वं निगिरत्युद्गिरत्यपि'**।

विश्वसर्जनमेव पराशक्तेः स्फुरत्ता, तस्याः सृष्टिरूपत्वात्। जगतः शक्तेश्च कार्यकारणभावे एतावानेव परमार्थः। यथा चितिः शक्तिः स्वप्रकाशा, स्वतन्त्रा व्यापकनित्योदितपरिपूर्णरूपा, एवं जगदपि चितेर्भिन्नं नैव किञ्चित्, अर्थाद् विश्वमपि चिद्रूपमेव तदुद्भूतत्वात्। यथा—**'तत्सृष्ट्वा तमेवानुप्राविशत्'** इति। विश्वं ग्राह्यं शक्तिर्ग्राहिका, किन्तु सर्वप्राणिसुलभग्राह्य-कादिसम्बन्धो दत्तावधानतया व्यवस्थापनीयः, अर्थादनयोः सम्बन्धस्त्वभेद एव। भेदस्त्वा-पाततोऽभेदाज्ञानवशादाभासते।

जगद्भासने किं कारणम्? किञ्चाधिष्ठानम्? किं प्रयोजनम्? इति प्रश्नव्रातस्योत्तरं तत्रैव द्वितीयसूत्रेण स्पष्टीकृतम्—**'स्वेच्छया स्वभित्तौ विश्वमुन्मीलयति'** इति।[5]

**अयं भावः**—स्वातन्त्र्यस्वभावाशक्तिर्विश्वाविर्भावे न किमपि निमित्तोपादानादिकमिच्छति, अपि तु स्वेच्छयैव स्वभित्तौ स्थितं दर्पणे नगरवदभिन्नमपि (विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतम्) भिन्नमिव पूर्वावस्थितस्य प्रकटीकरणमेवोन्मीलनम्। तद्विश्वं स्वरूपेणावस्थाभेदे-नौचित्यविचारेणाधिकाराधिकारिभेदेन चानेकप्रकारतया भिद्यते। शिवोऽपि विश्वात्मक एव, चिति-सङ्कोचात्। स्वमायाशक्त्या स्वस्य सदाभासितमपि विश्वं भेदेन सङ्कोचेन सङ्कुचितमिवाव-भासयति।

---

१. प्रत्यभिज्ञाहृदयम् १।   २. दुर्गासप्तशती ५।७८।   ३. योगिनीहृदयम्।
४. श्रीतन्त्रालोकम्।   ५. प्रत्यभिज्ञाहृदयम्—२।

तदुक्तम्—

तेन शब्दार्थचिन्तासु न सावस्था न सः शिवः ।
भोक्तैव भोग्यभावेन सदा सर्वत्र संस्थितः ॥[1] इति ।

शिवजीवयोरभेदमुक्त्वैतत्तत्त्वपरिज्ञानान्मुक्तिरज्ञानाच्च बन्ध इति निर्धारितम् । चित्तमपि शक्तिस्वरूपमेव चितिरेव सङ्कुचितग्राहकतामासाद्यार्थग्रहणोन्मुखी घटपटादिरूपेणात्मानं सङ्कोच्य यदा भासयति, तदा चित्तपदेनाभिधीयते । अतः परमार्थानुसारिणो योगिनः स्वस्वरूपस्यावभासात् सर्वस्यामप्यवस्थायां स्वप्रकाशकत्वं न तिरोधीयते इति मन्वते । देहेन्द्रियबुद्धिप्राणादिज्ञानं चित्तप्रधानम् । सर्वं शिवमिति ज्ञानं चैतन्यप्रधानम् । एकस्यैव चिदात्मनो रुचिभेदेनोपासनासौविध्याय दत्तनाम्नो भगवतो भगवत्या वा स्वातन्त्र्यप्रच्छादनोन्मीलनन्यूनाधिकभावभेदिता इमाः सर्वा भूमिका नटस्येव स्वेच्छापरिकल्पिता एव ।

**विविधदर्शनेषु परतत्त्वनिरूपणे मतवैभिन्यम्**

तत्तद्दर्शनप्रवर्तका विद्वांसो भिन्नभिन्नरूपेण भगवदिच्छयैवाभिमानं ग्राहिता परतत्त्वस्वरूपं भिन्नतयाऽभिदधति । यथा—

१. चैतन्यविशिष्टं शरीरमात्मेति चार्वाकाः ।

२. ज्ञानाधिष्ठानमात्मेति नैयायिकाः ।

३. सुखदुःखाद्युपाधिरहिताहं प्रतीतिप्रत्यय आत्मेति मीमांसकाः ।

४. ज्ञानसन्तानमेव तत्त्वमिति सौगताः ।

५. प्राणा एवात्मेति केचनौपनिषदाः ।

६. असदेवेदमासीदिति श्रुत्याऽभावं शून्यमेव ब्रह्मवादिनो माध्यमिकाः ।

७. पराप्रकृतिर्भगवान् वासुदेवस्तद्विस्फुलिङ्गसदृशा जीवा इति वैष्णवाः ।

८. त्रिगुणात्मिका साम्यावस्थापन्ना प्रधानापरपर्याया प्रकृतिः कर्त्री, पुरुषस्तु पुष्करपलाशवन्निर्लेप इति साङ्ख्याः ।

९. सर्वं साङ्ख्यवत्प्रतिपद्यमाना अपि केवलं **'क्लेशकर्मविपाकाशयैरपरामृष्टपुरुषविशेष ईश्वरः'** इतीश्वरतत्त्वमधिकं मन्यमाना योगदर्शनाभिमानिनः ।

१०. सदेव सोम्य इदमग्रमासीदितीश्वरतत्त्वपदमास्थिता अपरे वेदान्तिनः ।

११. शब्दब्रह्ममयं परारूपमात्मतत्त्वमिति वैयाकरणाः ।

१२. आगमदर्शनोक्तगुणतत्त्वसदृशीमास्थामातिष्ठन्ते जैनाः ।

अत एवागमप्रोक्तसप्तप्रमातृभूमिषु शिव-मन्त्रमहेश्वर-मन्त्रेश्वर-मन्त्र-विज्ञानाकल-प्रलयाकल-सकलादिष्वेते पूर्वोक्ताः सर्वेऽपि दार्शनिकाः षट्त्रिंशत्तत्त्वेषु सदाशिवादिप्रकृतिपर्यन्तेषु भिन्नभिन्नभूमिष्वेवाभिनिविष्टाः शिवशक्तितत्त्वाभ्यामधः स्थिताः शिव-शक्तितत्त्ववैशिष्ट्यं नावाप्ता इति वक्तुं शक्यते । एतदेव तुलनयाऽऽगमेष्वभिव्यक्तम्—

---

१. स्पन्दकारिका–३।२ ।

बुद्धितत्त्वे स्थिता बौद्धा गुणेष्वेवार्हताः स्थिताः ।
स्थिता वेदविदः पुंसि अव्यक्ते पाञ्चरात्रिकाः[1] ॥ इति ।

एतेषु सर्वेष्वपि दार्शनिकेषु वैयाकरणा एवास्माकं सदाशिवपर्यन्तमनुधावन्तीत्यागमदृष्ट्येतरेभ्यो विशिष्टा इति प्रतिपाद्यते ।

१३. तान्त्रिकदृष्ट्याऽऽत्मतत्त्वं विश्वोत्तीर्णम् ।

१४. कौलमतेनात्मतत्त्वं विश्वमयम् ।

१५. प्रत्यभिज्ञादित्रिकदर्शनवादिनां मते आत्मतत्त्वं विश्वोत्तीर्णं विश्वमयञ्च ।

सा शक्तिर्यदा यदा बहिर्मुखं रूपं स्वरूपे विश्राम्यति, तदा तदा बाह्यवस्तूपसंहारादन्तःपदावस्थितिः संहारः, तत्तदुद्देश्यसंवित्संतत्या सूत्रणं सृष्टिः । इयं संविद्रूपा शक्तिभट्टारिका तत्तत्सृष्ट्यादिभेदानुद्वमन्ती संहरन्ती च सदा पूर्णा कृशा चोभयानुभयात्मिका क्रमाक्रमरूपा च सततं स्फुरन्ती स्थिता । एषा भट्टारिकैवाधिकाधिकमनुशील्यमाना भक्तजनमनुगृह्णाति । चिदात्मा परमेश्वरः स्वातन्त्र्यवशादभेदमाच्छाद्य भेदं प्रकटय्येच्छादिशक्तिसहकारेणासङ्कुचितमपि सङ्कुचितमिव विधाय प्रकाशयति । अत एव सङ्कोचग्रहणेन निर्मलोऽपि जीवो बलात् त्रिविधमलावृततया संसारी भवति ।

(क) सङ्कोचं गृहीत्वा स्वात्मानमपूर्णं पश्यन्नाणवमलेन युज्यते ।

(ख) अनन्तरं क्रमेण ज्ञानशक्तिसङ्कोचात् सर्वज्ञत्वं तिरस्कृत्य देहेन्द्रियादिबुद्धिष्वात्मत्वं ग्राहितेनात्मस्वरूपाद् विश्वस्य वेद्यरूपस्य भेदज्ञानान्मायामलेन युज्यते ।

(ग) सर्वकर्तृत्वनिमज्जने किञ्चित्कर्तृत्वप्राप्तौ कर्मेन्द्रियरूपमत्यन्तं सङ्कोचं परिगृह्णन् शुभाशुभकर्मानुष्ठानेन कार्ममलेनाप्लुतो भवति । इत्थं त्रिविधमलेन नियन्त्रितो जीवः कलादिशक्तिभिर्विलुप्तविभवः शक्तिदरिद्रः संसारी पशुरित्युच्यते । तदुक्तम्—

शब्दराशिसमुत्थस्य शक्तिवर्गस्य भोग्यताम् ।
कलाविलुप्तविभवो गतः सन् स पशुः स्मृतः[2] ॥

अज्ञानमेव बन्धस्य कारणम्, शब्दराशिस्वरूपा वर्णमातृका तु स्वभावप्रच्याविका । अतः स्वरूपात् प्रच्याव्यात्मानं पशुत्वे विनियोजयति । स्वशक्तिविकासलाभे तु शिव एव संसारापन्नोऽपि शिववत् पञ्च कृत्यानि करोति । देहेन्द्रियप्राणादिभूमिमवतीर्य महेश्वरो बहिर्मुखीभावावसरे घटपटादिकमर्थं तत्तन्नियतदेशकालादितया यदाऽऽभासयति, तदा तत्तदाभासांशे विलयकारिता, प्रकाशेन सहैक्यमासाद्य प्रकाशे त्वनुग्रहीतृता । एवमिदं पञ्चविधकृत्यकारित्वमात्मीयं ज्ञातुः साधकस्य दृढप्रतिपत्तिदशायां महेश्वरत्वं जीवन्मुक्तत्वञ्चास्त्येव । य आत्मनो भेदेन प्रपञ्चं पश्यन्ति ते बद्धा एव ।

शब्दान्तरेणान्यथापि पञ्चविधकृत्यकारित्वं वर्णितं तत्र तत्र ग्रन्थेषु । यथा—आभासन-शक्तिविमर्शन-बीजावस्थापन-विलापनताभिस्तानि पञ्चविधकृत्यानि करोतीति पूर्वेण सम्बन्धः ।

---

१. श्रीतन्त्रालोकः ।  २. स्पन्दकारिका—४५।१२४ ।

दृष्टिसृष्टिवादवदत्रापि चक्षुरादिज्ञानेन्द्रियसमक्षं यद्यदाभाति तत्तत्सृज्यते। सृष्टे वस्तुनि यदा किञ्चित्कालं निमेषपरिवर्जनक्रमेण यावत्कालं रज्यते तावत् स्थितिः, विमर्शनकाले संहृतिः। संह्रियमाणमपि हृदि यदा विचित्राशङ्कादिसंस्कारेण विलापयति, तदा विलयः। अनुभूयमानमपि वस्तु चिदग्निसद्भावमापद्य पूर्णत्वापादने त्वनुग्रह एव। एतदनुभूतये सद्गुरोरुपदेश आवश्यकः। सद्गुरूपदेशं विना एतत्सर्वं भवितुं न शक्नोति। अनुभूतावपि भ्रमः स्थातुं शक्नोति। अतोऽनुभूतिर्गुरूपदेशात् परीक्षिता शास्त्रीया चास्थेया। सद्गुरूपदेशं विना स्वीयाभिरेव स्वस्याच्छादनं व्यामुक्तश्च भवति, एतद्व्यामोहितत्वमेव सृष्टिसंहारादिप्रपञ्चेऽणुं पातयति।

निर्विकल्पभूमिश्च विभज्य दूरमपसारयति। अस्यां स्थितौ अ, क, च, ट, त, प, य, श इत्यष्टवर्गाणां क्रमेण ब्राह्मी-माहेश्वरी-कौमारी-वैष्णवी-वाराही-इन्द्राणी-चामुण्डा-महालक्ष्म्यादिभिर्व्यामोह्य देहेन्द्रियादिष्वेवात्मत्वं ग्राहयति। तदुक्तं त्रिपुरामहिम्नि स्तोत्रे सकलमातृकाप्रपञ्चमूलभूतप्रत्याहारन्यायेनाकारहकारसमाहारसमुपहृतपराशक्तिसंस्तवे—

**पञ्चाशन्निजदेहजाक्षरभवैर्नानाविधैर्धातुभि-**
**र्बह्वर्थैः पदवाक्यमानजनकैरर्थाविनाभावितैः।**
**साभिप्रायवदर्थकर्मफलदैः ख्यातैरनन्तैरिदं**
**विश्वं व्याप्य चिदात्मनाहमहमित्युज्जृम्भसे मातृके[1]॥**

अयि विश्वप्रपञ्चाधिष्ठातृमूलभूते मातृके! त्वं नानाविधैर्धातुभिर्विश्वं व्याप्य चिदात्मनाहमहमित्युज्जृम्भसे इति सारांशः। पञ्चाशन्निजदेहजाक्षरभवैः, निजदेहः=पराशक्तेः शरीरं तस्माद् जातानि=आविर्भूतानि, आविर्भूय बहिः प्रसृतानि विश्ववस्तूनि तेभ्यो भव उत्पत्तिर्येषां तैः।

एवं पराशक्तेरक्षरमयत्वं सर्वत्रागमे प्रसिद्धम्। यथोक्तमभियुक्तैः—

**अनादि निधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।**
**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः[2]॥**
**शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः।**
**छन्दोभ्य एव प्रथममेतद्विश्वं व्यवर्तत[3]॥**

यद्यपि प्रत्यभिज्ञादर्शने आभासापरपर्यायस्वातन्त्र्यस्यैवोद्घोषः, तथापि तान्त्रिकदर्शने परिणामवाद एव स्वीक्रियते। ललितासहस्रनामटीकायां भास्कररायेण संसारो ब्रह्मपरिणामरूप इति निर्धारितः। किन्तु परिणामो न दधिपयसोरिव, अपि तु मृद्घटयोरिव, सुवर्णकुण्डलयोरिव सत्स्वरूप एव, भेदस्यास्य मिथ्यात्वादेव भेदघटिताधाराधेयसम्बन्धोऽपि मिथ्यैव। भगवत्पादेन श्रीशङ्कराचार्येणापि सौन्दर्यलहर्याम्—

---

१. श्रीत्रिपुरामहिम्नि स्तोत्रे—२७। २. वाक्यपदीयम्—१।१।
३. वाक्यपदीयम्—१।१२०।

मनस्त्वं व्योम त्वं मरुदसि मरुत्सारथिरसि
त्वमापस्त्वं भूमिस्त्वयि परिणतायां नहि परम् ।
त्वमेव स्वात्मानं परिणमयितुं विश्ववपुषा
चिदानन्दाकारं शिवयुवतिभावेन विमृषे[1] ॥

तन्त्रानुयायिकद्वैतपरम्परायामाभासवाद एव परिणामनाम्ना परिगृह्यते; किन्तु नासौ ब्रह्माद्वयवादवन्मिथ्यारूप:, अपि तु सुवर्णकुण्डलवद् मृद्घटवद् वा सत्स्वरूप: । तदुक्तमीश्वरप्रत्यभिज्ञाविवृतिविमर्शिन्याम्—'आभासरूपा एव जडचेतनपदार्था:' । श्रीतन्त्रालोकविवेके—'तेन यथा भगवता दर्पणादावाभासमात्रसारा एव भावा अवभासन्ते, तथा संवित्तावर्थाद् न बही रूपत्वेनैषां सत्त्वमस्तीति बोधं वर्धयितुं बाह्यार्थाभिनिवेशिनामेतदुपदिष्टम् । अतः सर्वमेवैतदाभासमात्रसारमेव, न बाह्येऽर्थेऽभिनिवेष्टव्यम्, येन द्वैतमोह: शाम्येत । अत एवाह—

न देशो नो रूपं न च समययोगो न परिमा
न चान्योन्यासङ्गो न च तदपहानिर्न घनता ।
न चावस्तुत्वं स्यान्न च किमपि सारं निजमिति
ध्रुवं मोह: साम्येदिति निरविशद्दर्पणविधि:[2] ॥

**ब्रह्मविद्यैव कालीरूपेण समाख्याता**

सैव ब्रह्मविद्या पराशक्तिः स्वरसवाहिनी परावाक् पूर्णाहन्ता संवित् 'काली' आदिनाम्ना व्यवह्रियते । कथं सा काली इति निरूप्यते—कालीशब्द: 'कल किल विल विक्षेपे' 'कल गतौ' 'कल शब्दे' 'कल संख्याने' इति धातुचतुष्टयात् कर्मणि घञ्प्रत्ययान्तात् ङीपि कृते सिद्ध्यति । एवञ्च कल्यते यया, सर्वं ज्ञायते स्वात्माभेदेन परामृश्यते यया, संख्यायते प्रमातृप्रमेयादित्रिपुटीवर्ग: परस्परं व्यपोह्यत इदमिदं नानिदमिति प्रतिनियततयाऽवस्थाप्यते गम्यते भेदित: सकलोऽर्थ: स्वरूपमारुह्यते दर्पणगतप्रतिबिम्बवत् स्वसमादव्यतिरिक्तत्वेऽप्यवभास्यते यया, शब्द्यते स्वात्मपरामर्शशेषतां नीयते सर्वमविकल्पज्ञानादि विलोप्यते यया सा काली । स्वरूपावभासनक्षमस्यात्मनो यो विश्वात्मनाऽवभास: स एवाहमिति नाम्नाऽऽम्नातस्तस्यैव प्रत्यवमर्शात्मिका दशा अहन्ता नाम ।

**अयमाशय**: योऽयं प्रत्यवमर्शादिनीलान्तस्य योऽयं प्रत्यवमर्शादिघटान्तस्य वेद्यस्यावभासको वेदनैकस्वभाव: सर्वप्रमितिभाक् प्रकाशो नासौ स्वयमिति पर इति वा व्यपदेष्टुमर्हस्तयोरवेद्यत्वात् । वेद्यज्ञानास्कन्दितैकत्वस्य सत्त्वेन भेदकप्रमाणस्यासम्भवेन तस्यैव मूलभूतप्रकाशस्य चिद्रूपस्य प्रत्याहारन्यायेन 'अश्च हश्च अहौ, अनयो: समाहारोऽहम्' इति । अकारहकाराभ्यां समस्तशब्दराशिमयस्य प्रकृतिप्रत्ययार्थसदृशस्याहन्तया व्यवहार आगमेषु तन्त्रेषु च । मूलकारणस्य मूलतत्त्वस्य शब्दार्थसङ्घातरूपस्योद्भूतावयवविवक्षायां ज्ञानकरणे भावारमकतल्प्रत्ययसंयोगेऽहनो भावोऽहन्तेति व्यवहारोऽभियुक्तानाम् । अर्थादिदमिति वेद्यस्याहमिति वेदकस्य तयोर्मूलस्य प्रकाशस्य

---

१. सौन्दर्यलहरी ।   २. श्रीतन्त्रालोकवि० ३ ।

मूलभूतो धर्म एक एव, स एव विच्छिन्नाभासत्वे परस्य न भेदव्यवहारग्राहके इदन्तया अविच्छिन्नभावाभासकत्वेऽहन्तया भासते ।

वस्तुगत्या तु सृष्टेः प्रसरात् प्राक् संहारान्तरश्चाभास्याभासकरहितमेकमेव निर्विशेषं रूपम् । तस्यैव बहिरुन्मुखतायामिदन्तयाऽन्तराभासकता त्वहन्तया प्रथनम् । आभासकत्वेनाभास्यत्वेन चैकस्यैव देशकालाकाररहितस्य चित्पदस्य प्रथननिबन्धनासंज्ञा, अन्यथा तत्पूर्वोक्तं चित्पदं निराभासमेकमखण्डमेव । स एव प्रकाशः स्वाङ्गभित्तिभूते चिदाकाशेऽनवच्छिन्नचिन्मये स्वाभिन्नशक्तीनां संभेदविभेदाभ्यां खेचर्यादिरूपाणां स्वरश्मीनामेकार्थग्रहणोन्मुखत्वे जगदात्मना सर्वथा ग्रहणोन्मुखत्वे तु शिवात्मना व्यवहारः ।

**व्यक्ताव्यक्तमयं जगत्**

स्थूलसूक्ष्मात्मकमेतज्जगत् स्थूलतया व्यक्तम्, सूक्ष्मतया अव्यक्तमित्युच्यते । तत्र नानानामरूपात्मकं पदार्थात्मकं दृश्यं जगति नित्यमेव स्थूलनम्, उदयास्तदशासु सर्वदा शक्तिलग्नत्वाभावे तस्य प्ररोहासम्भवात् । अव्यक्तः शक्त्यात्मको जगत आश्रयः, सर्वस्यापि प्रत्यवमर्शात्मकस्य जगतश्चिद्राहित्ये उत्पद्यमानत्वासम्भवात् । न हि जलराहित्ये तरङ्गबुद्बुदानामुत्पद्यमानता सङ्घटते । अतो लोकस्थित्युपपादनायैकस्यैव तत्त्वस्य नानात्मकता भेदाभेदसहिष्णुता लोकव्यवहारसंसाधनाय परिकल्प्यते । नानाविधसिद्ध्यपेक्षयैकस्यैव वस्तुनो भेदं परिकल्प्योपासना क्रियते । न तूपास्यवस्तुनो वास्तविको भेदः । उपास्योपासकभेदोऽपि परिमितशक्तीनां मितयोगिनामेव, न तु दिव्यसिद्धानाम् । ते तु चिदैक्यप्रतिपत्तिदाढ्यलक्षणजीवनमुक्त्यैकरसाश्थितिमेकात्मतया सन्ततमुपासते । तच्च पूर्वोक्तचर्चितविश्वब्रह्माण्डमण्डानामवान्तरकक्षाविभागेनोपन्यस्य स्वात्मभित्तिलग्नतां स्वानुभवसाक्षिकीं विज्ञाप्य चतुर्विधत्वेन समुपस्थाप्यते । तदुक्तम्—

**शक्तिर्माया प्रकृतिः पृथ्वीति चतुर्विभागमण्डवत् ।**
**यश्च विभागोऽस्य बहुधा सर्वं स्थितमेतत् ।।**[1]

सर्वमपि ब्रह्माण्डं चतुरण्डयुक्तम् । शक्त्यण्ड-मायाण्ड-प्रकृत्यण्ड-पृथिव्यण्डभेदात् ।

तन्त्रेषु विश्वकल्पनायां षट्त्रिंशत् तत्त्वानि स्वीक्रियन्ते । तद्यथा—१. शिवः, २. शक्तिः, ३. सदाशिवः, ४. ईश्वरः, ५. शुद्धविद्या, ६. माया, ७. कला, ८. विद्या (अशुद्धविद्या), ९. रागः, १० कालः, ११. नियतिः, १२. पुरुषः, १३. प्रकृतिः, १४. बुद्धिः, १५. अहंकारः, १६. मनः, १७. श्रोत्रम्, १८. त्वक्, १९. चक्षुः, २०. जिह्वा, २१. घ्राणः, २२. वाक्, २३. पाणिः, २४. पादः, २५. पायुः, २६. उपस्थः, २७. शब्दः, २८. स्पर्शः, २९. रूपम्, ३० रसः, ३१. गन्धः, ३२. आकाशः, ३३. वायुः, ३४. अग्निः, ३५. सलिलम्, ३६. भूमिः इत्येतानि षट्त्रिंशत् तत्त्वानि विश्वब्रह्माण्डत्वेनाभिधीयन्ते । तत्र शुद्धाध्वा, शुद्धाशुद्धाध्वा, अशुद्धाध्वेति त्रिधा विभागः शिवादीनि शुद्धविद्यान्तानि पञ्च तत्त्वानि शुद्धाध्वेत्युच्यन्ते । अनन्तरं माया कला विद्या (अशुद्धविद्या) रागः कालो नियतिः पुरुष इति सप्त तत्त्वानि शुद्धाशुद्धाध्वेति । अवशिष्टान्यशुद्धाध्वनाम्नोच्यन्ते ।

---

१. वि० प० नि० प० २१ ।

एतेषां लक्षणानि—तत्र **शिवतत्त्वं नाम** इच्छाज्ञानक्रियात्मककेवलपूर्णानन्दस्वभावरूपः परमशिव एव सर्वप्रमातॄणामन्तःस्फुरत्पूर्णाहन्ताचमत्कारमयं सर्वतत्त्वोत्तीर्णंसकलतत्त्वराशिगत-सृष्टिसंहारशतसहस्रप्रतिबिम्बनसहिष्णुमहाप्रकाशवपुः शिवतत्त्वम् ।

**शक्तिः** – अस्य जगत्स्रष्टुमिच्छां परिगृहीतवतः परमेश्वरस्य प्रथमस्पन्द एव इच्छाशक्ति-तत्त्वम्, अप्रतिहतेच्छत्वात् सदेवाङ्कुरायमाणमिदं जगत् स्वात्मनाऽहन्तयाऽऽच्छाद्य स्थितं रूपम् । यदा परमेश्वरः शुद्धचिन्मात्राधिकरण एवाहमित्यंशे इदमंशमुल्लासयति, तदा तस्य प्रोन्मीलित-मानचित्रकल्पभावराशिविषयत्वेनास्फुटत्वादिच्छाप्रधानं सदाशिवतत्त्वम् । अङ्कुरितं जगदहन्तयाऽऽ-वृत्य स्थितमीश्वरतत्त्वम् । स्फुटीभूते च इदमंशे यदा अहमंशं निषिञ्चति, तदा ज्ञानशक्तिप्रधान-मीश्वरतत्त्वम् । अहन्तेदन्तयोरभेदप्रतिपत्तिः शुद्धविद्यानाम पञ्चमं तत्त्वम् । यदा पुनः प्ररूढभेद-भावराशिगतेदमंशस्फुरणे चिन्मात्रगतत्वेनाहमंशः समुल्लसति भेदाद्वैतवादिनामिवेश्वरस्य यः समधृततुलापुटन्यायेनाहमिदमिति परामर्शस्तदेव क्रियाशक्तिप्रधानं 'शुद्धविद्या'तत्त्वमिति ।

**माया** – स्वस्वरूपेषु भेदप्रथा भेदज्ञानं माया । दुष्करतमवस्तुसम्पादनप्रतिघातरूपाऽचिद्रूपे शून्यादौ च प्रमातृतयाऽभिमानं प्ररूढं कुर्वती चिन्मयानपि भावान् स्वबलेन हठाद्वा भेदेनाभासयन्ती वस्तुनो मौलिकं स्वरूपमन्यथयन् तिरोदधति कलादिक्षित्यन्तानां भावानामुपादानकारणञ्च माया । एतदेव तत्त्वं स्वातन्त्र्यशक्तिनाम्नाप्यागमेष्वभिधीयते ।

**पुरुषः**—यदा तु परमेश्वरः पारमेश्वर्या मायाशक्त्या स्वातन्त्र्यापरपर्यायया स्वस्वरूपं ग्राह-यित्वा सङ्कुचितग्राहकतामश्नुते, तदा पुरुषसंज्ञोऽयमेव मायया मोहितः कर्माणि स्वात्मनो बन्ध-कानीत्यभिमानः शुभाशुभकर्मनिबद्धः संसारी परमेश्वराभिन्नोऽप्यस्य मोहः परमेश्वरस्य न भवेत् । इन्द्रजालमिवैन्द्रजालिकस्य स्वेच्छया सम्पादितभ्रान्तेः, शुद्धविद्यास्वस्वरूपप्रकाशनशक्त्या स्वैश्वर्य-मभिज्ञाय जीवः स्वस्मिन् यदा सच्चिदानन्दघनत्वमानयेत, तदा तु बन्धहीन आणवमायीयकार्मेति त्रिविधमलाख्यपाशविहीनः सन् चिद्घनतया मुक्तः परमशिव एव भवति । देहे किं संसरणमिति चेद् देहोऽपि स्वरूपसादृश्यं बाल्य-कौमार-यौवन-वार्धक्यादिष्वनुवर्तयन् संसरतीवोत्प्रेक्ष्यते । बुद्ध्यहङ्कारमनसां तु जन्मान्तरेऽपि संसरणं भवत्येव, अन्यथा योनिभेदसिद्धान्तव्याधातापत्तेः । पर-मेश्वरस्य सर्वकर्तृत्व-सर्वज्ञातृत्व-पूर्णत्व-नित्यत्व-व्यापकत्वानि शक्तयोऽसंकुचिता अपि सङ्कोचग्रहणेन कला-विद्या-राग-काल-नियतिरूपया परिणमन्ते ।

**कला** —अस्य पुरुषस्य किञ्चित् कर्तृताहेतुः प्रतिबद्धं सङ्कुचितं तत्त्वं यया प्रतिबद्धो जीवः किञ्चिदेव पुरोवर्ति घटादिकं ज्ञातुं प्रभवति न पुनर्दूरव्यवहितं वस्तु ।

**रागः**—रागो नाम विषयेष्वभिसङ्गः । अपूर्णमन्यतयेदं ममोपयुज्यते इत्थमहं भूयासं मा कदाचिदहं निर्धनो भवेम इत्येवंरूपः ।

**कालः**—कालो हि जागतिकपदार्थानां प्रकाशाप्रकाशात्मकानामवच्छेदकः क्रमो भूतादि-भिन्नोऽपि तत्सदृशः काल एव क्रमः, क्रम एव काल इत्यनर्थान्तरम् । अहमज्ञासिषम जानामि, ज्ञास्यामीत्यहमकार्षं करोमि करिष्यामीति ज्ञानक्रियास्वरूपेण पदार्थान् तथा तथा कलयन् कालोऽ-वच्छिनत्तीति अवच्छेदकत्वेन क्रमः काल इति वा व्यवह्रियते ।

**नियतिः**—ममेदं कर्तव्यम्, ममेदं न कर्तव्यमिति नियमनस्य कारणं नियतितत्त्वम्। इदं स्वर्गादिफलमश्वमेधादिकं मया कर्तव्यम्, नरकादिफलकं ब्रह्महत्यादीनि स्वाभीप्सितकर्तव्यस्य नियमनं नियतितत्त्वात् क्रियते। किञ्च नियतादेव कारणाद् नियतं किञ्चित् कार्यं कुत्रचिद्भवति, नान्यथेति सर्वस्यापि नियतकार्यकारणभावस्य नियामिका नियतिरेव। एतत् पञ्चकं पुरुषस्वरूपावरकत्वात् पञ्चकञ्चुकमित्यभिधीयते। स्वस्वरूपाव्यतिरिक्तमप्येषां बलेन व्यक्तिरिक्तमिवावभासते। एभिः पञ्चकञ्चुकैः पूर्णसंवित्स्वरूपमाच्छाद्य अपूर्णतयाऽवभासते।

**प्रकृतिः**—महदादिपृथिव्यन्तानां त्रयोविंशत्तत्त्वानां मूलकारणं प्रकृतिः। एषैव प्रधानाव्यक्तादिनाम्ना तन्त्रान्तरेषु व्यवह्रियते। एषा च प्रकृतिः सुखदुःखमोहात्मकानां सत्त्वरजस्तमसां प्रकाशक्रियानियमनस्वभावानां साम्यावस्था अविभक्तरूपा, वैषम्ये तु प्रकृतिः संज्ञा। प्रकृतेः सकाशान्महानुत्पद्यते, तच्च महत्तत्त्वं बुद्धिनाम्नाऽभिधीयते। विकल्पप्रतिबिम्बधारिणी बुद्धिरिदमित्थमित्येवंरूपनिश्चयस्य विधात्री।

**अहङ्कारः**—अहङ्करणमहङ्कारः। अहंमूलेति अहंक्रियाया ममेदम्, न ममेदमित्यभिमानस्य साधनमहङ्कारः।

**मनः**—मननं मनः सङ्कल्पविकल्पसाधनं मनः। इदं कुर्याम्, इदं न कुर्यामिति विकल्पस्य मानसकर्मणः सङ्कल्पस्य च साधनं मनः। एतत् त्रयं सम्भूयान्तःकरणमित्युच्यते। अन्तर्वेद्यस्य सुखदुःखादेर्ज्ञानसाधनत्वादेतान्यन्तःकरणानि। शब्द-स्पर्श-रूप-रस-गन्धात्मकानां विषयाणां क्रमेण ज्ञानसाधनानि। क्रमेण वाक्पादपाणिपायूपस्थानि पञ्च कर्मेन्द्रियाणि। शब्दस्पर्शरूपरसगन्धाः सामान्याकाराः। तदेव नान्यदित्यवान्तरविशेषरहिता शब्दाद्यास्तन्मात्रशब्दवाच्याः। पञ्च भूतानि तु—आकाशः अवकाशप्रदः, वायुः सञ्जीवनम्, अग्निर्दाहकः पाचकश्च, सलिलमाप्यायकं द्रवरूपञ्च, भूमिः धारिका गन्धग्राहिका इति। एतत् सर्वं जगत् परभट्टारिकारूपे हृदयबीजे अन्तर्भूतम्।

**यथा न्यग्रोधबीजस्थः शक्तिरूपो महाद्रुमः।**
**तथा हृदयबीजस्थं विश्वमेतच्चराचरम्॥**

**षोडशस्वराणां शक्तिबीजकता**

तत्र 'अ' एवानुत्तरः प्रकाशः परमः शिवः। तस्य विसर्गो जायते 'अः' विसर्ग एव विश्वजनने भगवतः शक्तिः। चिच्छक्तिरेव प्राणिनामाभ्यन्तरे सिंहासनारूढा विराजते। तस्यैव स्वाभिमुखविश्रामावस्था स्वेच्छया (स्वातन्त्र्यबलात्) यथा सा एवानन्दात्मना परिणमते, तथैवानन्दस्य बहिर्मुखतयेच्छाज्ञानक्रियात्मना परिणामः। पूर्वोक्ता अकचटतपयशेत्यष्टवर्गाणां ब्राह्म्यादिदेव्यस्तु पशुदशायां भेदविषये सृष्टिस्थिती, अभेदविषये संहारं परिमितविकल्पपात्रतां जनयन्ति। पतिदशायां तु भेदे संहारमभेदे सृष्टिस्थिती। एवंक्रमेण विकल्पमपसार्य निर्विकल्पं ग्राहयन्ति। अत एवोक्तम्—**'शरीरी परमेश्वरः', 'मनुष्यदेहमास्थाय छन्नास्ते परमेश्वराः'**। प्रत्यभिज्ञाटीकायामपि—'शरीरमेव घटाद्यपि वा ये षट्त्रिंशत्तत्त्वमयं शिवरूपतया पश्यन्ति, तेऽपि

सिद्ध्यन्ति । आत्मीयपञ्चकृत्यकारित्वपरिज्ञानेन स्वशक्त्यपहारता निवृत्तौ स्वातन्त्र्यशक्तिलाभे चित्तं बहिर्मुखतां विहाय चेतनभूमिमधिरुह्य स्वस्मिन् चैतन्यं भावयित्वा पूर्णो भवति । अत एवोत्पलदेवेन निजस्तोत्रे—

**वर्तन्ते जन्तवोऽशेषा अपि ब्रह्मेन्द्रविष्णवः ।**
**ग्रसमानास्ततो वन्दे देव विश्वं भवन्मयम् ।।**[1] इति ।

चिदानन्दलाभे देहाद्यनात्मग्रामसत्त्वेऽपि चिदानन्दज्ञानस्य दार्ढ्याद् मल्लग्रामादिभूयसा व्यपदेश इव प्राणान् धारयतोऽपि मुक्त एव । यथोक्तं स्पन्दशास्त्रे—

**इति वा यस्य संवित्तिः क्रीडात्वे नाखिलञ्जगत् ।**
**स पश्यन् सततं युक्तो जीवन्मुक्तो न संशयः ।।**[2]

एतेनेदं सुस्पष्टं प्रतिभाति यद् भक्तिमतां सामर्थ्यशालिनां जगत्परिवर्जनं मुक्त्यै नावश्यकम्, अपि त्वखिलं जागतिकं प्रपञ्चं निभालयन्नपि स्वशक्तिबलमवाप्य समस्तं जगदपि स्वात्मत्वेन जानीयाच्चेन्महेश्वरत्वमक्षुण्णमेव । तदुक्तमीश्वरप्रत्यभिज्ञायाम्—

**सर्वो ममायं विभव इत्येवं परिजानतः ।**
**विश्वात्मनो विकल्पानां प्रसरेऽपि महेशिता ।।**[3]

अनेन स्वात्मनि चिदानन्दसमावेशः समानेयः । कथं तल्लाभो भवेदिति चेदुक्तं प्रत्यभिज्ञाहृदये—**'मध्यविकासाच्चिदानन्दलाभः'** इति । अथवा मध्यनाड्या विकासाच्चिदानन्दस्य लाभ इत्यपि सूत्रार्थः ।

इन्द्रियाणां बहिर्मुखतया एकाग्रता सुदुर्लभा महता धैर्येण प्रत्यगात्मनि निवेशेऽमरपदं लभ्येत । तदुक्तं कठवल्ल्याम्—

**पराञ्चिखानि व्यतृणत् स्वयम्भू-**
**स्तस्मात् पराङ् पश्यति नान्तरात्मन् ।**
**कश्चिद्धीरः प्रत्यगात्मानमैच्छ-**
**दावृत्तचक्षुरमृतत्वमश्नन् ।।**[4] इति ।

शक्तेर्विकासोऽन्तर्निगूढाया शक्तेः क्रमं परिहाय सकलेन्द्रियचक्रविस्फोरणेन **'अन्तर्लक्ष्यो बहिर्दृष्टिर्निमेषोन्मेषवर्जितः'** इति खेचरीमुद्रया बहिःप्रसरणं विकासशक्तेः सङ्कोचविकासावुन्मिषितसूक्ष्मप्राणशक्त्याऽऽज्ञाचक्रं भेदयित्वोर्ध्वकुण्डलिनीपदप्राप्तौ पूर्णविश्रामदशानुभवः । अधःकुण्डलिन्यां च षष्ठवक्त्ररूपायां सर्वतः सञ्चिन्त्य शक्तितन्मूलतदग्रतन्मध्यभूमिस्पर्शावेशः । एष शक्तेः सङ्कोचविकासक्रमः ।

---

१. उत्पलस्तोत्रम् । २. स्पन्दकारिका ३।३ ।
३. ईश्वरप्रत्यभिज्ञा—४।१।१२ । ४. कठोपनिषत्, अ० २ प्र० वल्ली १ ।

**तन्त्रशास्त्रे भोगस्यापि पञ्चमपुरुषार्थत्वम्**

भोगस्य शक्तिपर्यायत्वादेव पञ्चमपुरुषार्थमपि योगतन्त्रेषूद्घुष्टं यथार्थतामेति। तथा ह्युक्तम्—

भोगमोक्षविरोधोऽत्र साधने नास्ति निश्चितम्।
भोगेन लभते मोक्षं नरोऽपि विद्ययानया[१] ।। इति।

स्वमायाशक्त्या यदाऽसौ शक्तिर्घटपटादिजागतिकपदार्थेष्वभिमानं ग्राहयति, तदा ज्ञान-सङ्कल्पाध्यवसायपरामर्शविमर्शरूपतया मायाप्रमातृभिरभिमन्यते, वस्तुगत्या त्वसावेकाऽक्रमा अनन्ता चिद्रूपा च। यथोक्तमीश्वरप्रत्यभिज्ञायाम्—

या चैषा प्रतिभा तत्तत्पदार्थक्रमरूषिता।
अक्रमानन्तचिद्रूपः प्रमाता स महेश्वरः ।।[२]

अन्यच्च—

मायाशक्त्या विभोः सैव भिन्नसंवेद्यगोचरा।
कथिताज्ञानसङ्कल्पाऽध्यवसायादिनामभिः ।।[३]

अथ च—

सा स्फुरत्ता महासत्ता देशकालाविशेषिणी।
सैषा सारतया प्रोक्ता हृदयं परमेष्ठिनः ।।[४]

तस्याः सहजसंविद्देवतायाश्चक्रेऽधिष्ठानेनेश्वरता प्राप्यते। सृष्टिसंहारयोः प्रभुत्वं लभ्यते। यदुक्तं स्पन्दे—

यदा त्वेकत्र संरूढस्तदा तस्य लयोद्भवौ।
नियच्छन् भोक्तृतामेति ततश्चक्रेश्वरो भवेत् ।।[५]

एकत्रारोपयेत् सर्वं ततोऽन्येन न पीडयेत् ।।[६]

देहप्राणसुखादिभिः प्रतिकलं संरुध्यमानो जनः
पूर्णानन्दघनामिमां न चिनुते माहेश्वरीं स्वां चितिम्।
मध्ये बोधसुधाब्धिविश्वमभितस्तत्फेनपिण्डोपमं
यः पश्येदुपदेशतस्तु कथितः साक्षात् स एकः शिवः ।।[७]

एक एव शिवो निजानन्दतयाऽवस्थितोऽप्यनन्ताभिः शक्तिभिर्नानारूपाकारधारकत्वेन विलसन् स्वस्मिन् प्रतिष्ठितः स्वेन महिम्ना लोके प्रतिष्ठां गतः स्वयमेवाखिलव्यवहारान् भजत इति निरुत्तरत्वं तस्य नास्त्युत्तरं यस्मात् तच्छिवतत्त्वम्। तथा च—

---

१. कङ्कालमालिनी, पट० ४।१८। २. ई० प्र० ७।१। ३. ई० प्र० १।५।१८।
४. ई० प्र० १।५।१४। ५. स्पन्दकारिका ४।२१। ६. स्प० नि० ४।१४।
७. प्र० हृ० पृ० ५०।

अलुप्तशक्तिमान्नित्यं सर्वाकारतया स्फुरन् ।
पुनः स्वेनैव रूपेण एक एवावशिष्यते ॥[1]

परमशिवस्य स्वभावभूत एकस्वरूपः सर्वतोमुखतयाऽलुप्तशक्तितया सर्वाकारतया स्फुरितुं शक्नोतीति परं कारणस्य परमेश्वरस्य परात्परत्वमेकत्वेऽपि बहुधात्वं कल्पयितुं शक्यत एव । अत एव शक्तिरहितस्य शिवस्याकिञ्चित्कर्तृत्वं तत्सहितस्य सर्वकर्तृत्वं विश्वमयत्वं युगपदेव विश्वातीतत्वञ्च सर्वं सुस्थमिति ।

**तत्त्वसाक्षात्कारे गुरोर्महत्त्वम्—**

एवं शिवशक्तिसामरस्यार्थमात्मनः संविद्रूपपरमपदप्राप्त्यर्थं सद्गुरुशरणं परमं सहायकमुपकारकञ्च । एवं गुरुकृपां विना चित्तविश्रान्तिः सुदुर्लभा, गुरुरपि योगतत्त्वसाक्षात्कारेण कृतात्मसाक्षात्कार एव । तदुक्तम्—

संवित्क्रियाविकरणोदयचिद्विलासो
विश्रान्तिमेव भजतां स्वयमेव भाति ।
ग्रस्ते स्ववेगनिचये पदपिण्डमेकं
सत्यं भवेत् समरसं गुरुवत्सलानाम् ॥[2]

गुरुविषयेऽप्यत्र—

ज्ञानहीनो गुरुस्त्याज्यो मिथ्यावादी विडम्बकः ।
स्वविश्रान्तिं न जानाति परेषां किं करोति सः ॥[3]
शिलया किं परम्पारं शिलाजालं प्रतार्यते ।
स्वयं तीर्णो भवेद्योऽसौ परान्निस्तारयत्यलम् ॥[4]

अत्र दर्शने गुरुतत्त्वादधिकं शिवशासनातिरिक्तं वा किमपि तत्त्वं नास्ति । सद्गुरुरेव करुणाखड्गनिपातेन शिशोः शिष्यस्य पाशाष्टकं छित्वा सम्यगानन्दजनकमात्मतत्त्वं क्षणाद् बोधयति । अत एतादृशो गुरुः सर्वथा प्रणम्यः ।

सद्गुरुकृपां विना स्वरूपज्ञानं सुदुर्लभम् । का कथा तत्र सिद्धीनाम् । अतः शब्दब्रह्मोपासनायाः प्राक् क्रियामार्गस्य सम्यग् लाभाय शक्तिज्ञानं सद्गुरूपदेशाल्लब्धव्यम् । तत्तत्कर्मोपदेशकानि शास्त्राणि गुरुमुखादेव लभ्यन्ते । विवेकसम्भवं ज्ञानं शिवज्ञानस्य प्रकाशकं बाह्यभावकामनावर्जनं विना पशुभावेन वीरभावातिक्रमणं दिव्यज्ञानरूपस्याध्यात्मज्ञानस्य प्राप्तिराकाशकुसुमोपमैव । अतः सर्वसिद्धिसोपानीभूतमानवजीवनस्य सार्थक्याय सर्वविधसिद्धिलाभाय चतुर्विधपुरुषार्थसंसाधनाय नित्यज्ञानप्रसाधनाय ज्ञानिजनसंसर्गोऽपेक्षितः । एतदर्थं योगतन्त्रप्रक्रियैव श्रमं विधाय सद्गुरूपदेशं प्राप्य यत्नः कर्तव्यः ।

---

१. सिद्धसिद्धान्तपद्धतिः, उद्धृतम् ।
२. सिद्धसिद्धान्तपद्धतिः, पृ० ११४ ।
३. सि० सि० प० ५।१११ ।
४. सिद्धसिद्धान्तपद्धतिः पृ० १११ ।

शक्तेरुपासना येन केनाप्युपायेन कर्तव्या । केवलमहं ब्रह्मास्मि, अहं ब्रह्मज्ञोऽस्मि, सर्वं खल्विदं ब्रह्म इत्यादिवाक्यघोषपरम्परया न कदाचिदप्यात्मसिद्धिर्भवितुमर्हति । न हि बाह्याचारप्रदर्शनेन कापि सिद्धिर्भवति । अतो लोके सेवाप्रवणा अपि चतुष्पदा रासभादयः सिद्धा इति न मन्यन्ते, सततं संरक्षणे निवासिनस्तृणपर्णोदकाहारा हरिणादिमृगास्तापसा न मन्यन्ते । शीतवातातपसहाः, भक्ष्याभक्ष्ययोः समा अपि सूकरादयो व्रतिनो नोच्यन्ते । आकाशचारिणो विहगाः, रात्रिचरा भूतप्रेतादय आत्मतत्त्वाधिगता न मन्यन्ते । आजन्ममरणान्तं गङ्गायमुनादिनदीनिवासिनो मण्डूकमत्स्यग्राहप्रभृतयो व्रतिनो न मन्यन्ते । तथैव बाह्याचारनिविष्टाः पण्डिता अपि भावदोषदुष्टाः कर्मदोषग्रस्ता असद्गतिं प्राप्नुवन्ति । कौटिल्यालस्यसङ्गवर्जिताः श्रद्धाभक्तिसमन्विता भावनिष्ठाः पुरुषाः सद्गतिं प्राप्नुवन्ति शरीरजकर्मदोषेणैव नरोऽपि स्थावरतां प्रपद्यते । इहाचरितदोषेण पूर्वजन्मकृद्दोषेण वाऽऽत्मदोषदुष्टाः प्राणिनो योनिविपर्ययं प्राप्नुवन्ति ।

एतावता प्रघट्टकेनैतदेव साध्यते यच्छारीरिकाचारसम्पन्ना अपि यद्गतिविपर्ययं लभन्ते, अत्र को हेतुर्भवितुमर्हति ? योगतन्त्रानुसारमत्रात्मशक्तिज्ञानवैमुख्यमेव मुख्यं कारणम् । अतः शक्तिमुपास्य श्रद्धामास्थाय भावशुद्धिर्विधेया, भावशुद्ध्या शुद्धविद्यादर्शनं जायते । शुद्धविद्योदये जाते योगतन्त्रशास्त्रोक्तपशु-वीर-दिव्यभावप्राप्तिक्रमेणोत्तमोत्तमपदप्राप्त्याऽऽत्मप्राप्तिरूपमहायोगो लभ्यते ।

अतो भावावबोधजागृतये आत्मशक्त्यनुसन्धानमपेक्षितम् ।

**उपसंहारः**

सर्वमपि कर्मजातं शक्तिसमाराधनायैव, शक्तिरपि योगतन्त्रसाहित्ये विमर्शरूपिणी सर्वाकारयोगिनी चिद्रूपा निर्धारिता । सा विविधैरुपायैरात्मसात्कर्तुं शक्यते । तद्वशीकारायैवाष्टाङ्गाभ्यसनं क्रियते । तत्र श्वासोच्छ्वासक्रमेण सगर्भनिगर्भभेदेन प्राणायामेन साध्यते, केचन ज्ञानयोगेन, अपरे भक्तियोगेन वा तल्लाभाय यतन्ते । साधकास्तन्त्रागमयोरसाध्यसाधनाय, अलभ्यलाभाय च वर्णराशिमयं मातृकाचक्रं मालिनीचक्रं वा भूतलिपिं वाऽऽराधयन्ति । शरीरमेव तदाराधनक्षेत्रं स्वीकृत्य तत्र षट्चक्राणि भावयित्वा सच्चिदानन्दघनमात्मतत्त्वं मार्गयन्ते । तदर्थमेव केचन ब्रह्मविद्याः, केचन योगशास्त्राणि, केचन हठयोगादीनि साधनतयोपकल्पन्ते । योगतन्त्रे तु कुण्डलिनीयोगस्य प्राशस्त्यं माहात्म्यं वर्णितं लभ्यते । कुण्डलिन्याः सिद्धिमात्रेण शक्तेरपि सिद्धिः सञ्जायते । योगः शक्तिस्तदेव तन्यते श्रद्धोपकरणादिना प्रक्रियापरकेण शिवशास्त्रेण (योगशास्त्रेण) इति योगतन्त्रमिति शिवम् ।



# सिद्धान्तशिखामणिसमयसमीक्षा[1]

**श्रीचन्द्रशेखरशर्मा हिरेमठः**

**अनुसन्धाता—सम्पूर्णानन्दसंस्कृतविश्वविद्यालये**

अस्य लेखस्य शिरो नाम दर्शनसमनन्तरमेव जिज्ञासूनां मनसि, कोऽयं सिद्धान्तशिखामणिर्नामग्रन्थः ? कस्य दर्शनस्येदं पुस्तकम् ? ग्रन्थकारः कः ? तस्यैतिह्यं किम् ? ग्रन्थरचनाकालः कः ? ग्रन्थस्यास्य को वा सिद्धान्तः ? इत्याद्यनेके प्रश्नाः सम्भवन्ति । एवमत्र सम्भाव्यमानानां सर्वेषामपि प्रश्नानामुत्तरं यथामति सप्रमाणं प्रस्तूयते ।

सिद्धान्तशिखामणिर्हि वीरशैवधर्म-दर्शनयोः सिद्धान्तप्रतिपादकः प्रधानः प्रामाणिकश्च ग्रन्थः । यथा वेदान्तप्रस्थानत्रये प्रसिद्धा सकलोपनिषत्सारभूता गीता भगवता श्रीकृष्णेन महाभारतयुद्धक्षेत्रेऽर्जुनं प्रत्युपदिष्टा, या च पुनः कृष्णार्जुनसंवादरूपेण महर्षिणा व्यासेन ग्रथितेति विज्ञायते, तथाऽयं सिद्धान्तशिखामणिरपि कामिकादिवातुलान्तानां शैवागमानां सारभूतो वीरशैवसिद्धान्तप्रतिपादको ग्रन्थो मुनिकुलतिलकाय अगस्त्याय भगवत्पादै रेणुकाचार्यैरुपदिष्टः । सोऽयमुपदेश आचार्यवर्येण श्रीमता शिवयोगिशिवाचार्येण रेणुक-अगस्त्ययोः संवादरूपेण ग्रथितो वर्तते । तदुक्तं श्रीमरितोण्टदार्येण—

**रेणुकागस्त्यसंवादं निगमागमविश्रुतम् ।**
**प्रदीपयति गुह्यार्थमुद्धृत्य शिवयोगिराट् ॥**[2] इति ।

भगवता श्रीकृष्णेनोपदिष्टोपदेशः पद्यात्मक इति यथा स भगवद्गीतेति कथ्यते, तथाऽयं सिद्धान्तशिखामणिरपि पद्यात्मकत्वात् **'रेणुकगीता'** इत्याख्ययापि समाख्यायते ।

किञ्च, भगवद्गीताया यथैकादशाध्याये भगवता श्रीकृष्णेनार्जुनाय विश्वरूपं प्रदर्शितम्, तथा सिद्धान्तशिखामण्या एकविंशतितमपरिच्छेदेऽपि विभीषणस्य प्रार्थनानुसारं युगपत् त्रिकोटिशिवलिङ्गसंस्थापनार्थं श्रीरेणुकभगवत्पादास्त्रिकोटयाचार्यरूपं[3] परिधाय विभीषणाय विश्वरूपं प्रदर्शितवन्त इतीयं रेणुकगीता श्रीमद्भगवद्गीतायास्तुल्यकोटिकेत्यत्र न कोऽपि सन्देहः ।

ग्रन्थेऽस्मिन् एकविंशतिपरिच्छेदाः, तत्राहत्य त्रिंशदुत्तरत्रयोदशशत(१३३०)श्लोकाः सन्ति । ग्रन्थस्य प्रथमतश्चतुर्थपरिच्छेदपर्यन्तं तथैकविंशतिपरिच्छेदे च चतुस्त्रिंशदुत्तरद्विशत (२३४)-

---

१. "समयः शपथाचारकालसिद्धान्तसंविदः" इत्यमरसिंहोक्त्यात्र 'समय'शब्देन कालः, सिद्धान्तश्चाभिप्रेतौ वर्तेते । तस्मात् 'समययोः समीक्षा समयसमीक्षा' इति व्युत्पत्त्या प्रकृतनिबन्धे सिद्धान्तशिखामणे रचनाकालस्य, तदीयसिद्धान्तस्य च समीक्षा क्रियते ।

२. सिद्धान्तशिखामणिः, भागः–१, पृष्ठम्–१ ।

३. कोटित्रयं तु लिङ्गानां यथाशास्त्रं यथाविधि ।
त्रिकोटयाचार्यरूपेण स्थापितं तेन तत्क्षणे ॥ (सि० शि० २१।३३, पृष्ठम् २२६)

१९

श्लोकेषु चारित्रिकविषयो वर्तते। पुनः पञ्चमपरिच्छेदाद्विंशतिपरिच्छेदपर्यन्तं पण्णवत्युत्तरैक-सहस्र (१०९६) श्लोकेषु वीरशैवषट्स्थलसिद्धान्तः प्रतिपादितोऽस्ति। ग्रन्थोऽयं रेणुकागस्त्य-संवादः, रेणुकगीता, सिद्धान्तशिखामणिरिति नामत्रयेणापि व्यवह्रियते, अथापि **'सिद्धान्तशिखा-मणिः'** इत्येवास्य प्रसिद्धं नाम।

**ग्रन्थनामरहस्यम्**

तत्रभवान् शिवयोगिशिवाचार्यः स्वरचितस्य श्रीरेणुक-अगस्त्ययोः संवादात्मकस्य ग्रन्थस्य 'सिद्धान्तशिखामणिः' इति नामकरणमकरोत्। अत्राऽयं हेतुः—शिवोक्ताः कामिकादिवातुलान्ता अष्टाविंशत्यागमाः 'सिद्धान्तः' इति नाम्ना प्रसिद्धाः। अत एवाघोरशिवाचार्यः—**'सिद्धान्तशब्दः पङ्कजादिशब्दवद्योगरूढ्या शिवप्रणीतेषु कामिकादिषु वशाष्टादशतन्त्रेषु प्रसिद्धः'**[1] इति निरूपयामास। तेषां सिद्धान्तशब्दितशिवागमानामुत्तरभागे वीरशैवसिद्धान्तः प्रतिपादितोऽस्ति। तदुक्तं श्रीरेणुकभगवत्पादैः—

**सिद्धान्ताख्ये महातन्त्रे कामिकाद्ये शिवोदिते।**
**निर्दिष्टमुत्तरे भागे वीरशैवमतं परम्**[2] ॥ इति।

एवं सर्वेषां शैवसिद्धान्तानामुत्तरभागे शिखामणिरिव निरूपितस्य वीरशैवसिद्धान्तस्य सारोऽत्र श्रीमता शिवयोगिशिवाचार्येण संगृहीत इति ग्रन्थोऽयं **'सिद्धान्तानां शिखामणिः = सिद्धान्तशिखामणिः'** इति व्युत्पत्तिसिद्धमन्वर्थञ्च नाम धारयति। तदेवोक्तं ग्रन्थकारेणापि—

**सर्वेषां शैवतन्त्राणामुत्तरत्वान्निरुत्तरम्।**
**नाम्ना प्रतीयते लोके यत्सिद्धान्तशिखामणिः**[3] ॥ इति।

**ग्रन्थकर्तुरैतिह्यं ग्रन्थनिर्माणकालश्च**

तत्रभवता श्रीशिवयोगिशिवाचार्येण ग्रन्थारम्भे—

**कश्चिदाचारसिद्धानामग्रणीः शिवयोगिनाम्।**
**शिवयोगीति विख्यातः शिवज्ञानमहोदधिः॥**
**तस्य वंशे समुत्पन्नो मुक्तामणिरिवामलः।**
**मुद्ददेवाभिधाचार्यो मूर्धन्यः शिवयोगिनाम्॥**
**तस्यासीन्नन्दनः शान्तः सिद्धनाथाभिधः शुचिः।**
**शिवसिद्धान्तनिर्णेता शिवाचार्यः शिवात्मकः॥**
**तस्य वीरशिवाचार्यशिखारत्नस्य नन्दनः।**
**अभवच्छिवयोगीति सिन्धोरिव सुधाकरः**[4] **॥**

इति स्ववंशवर्णनं कृतम्। एतावताऽयं शिवयोगिनः प्रपौत्रः, मुद्ददेवस्य पौत्रः, सिद्धनाथस्य च पुत्र इत्येव ज्ञायते। एतदतिरिक्तं न वा तस्य देशः, नापि कालोऽत्र निर्दिष्टः।

---

१. रत्नत्रयी, पृष्ठम्–५। २. सि० शि० १।३१, पृष्ठम् १०।
३. सि० शि० १।३१, पृष्ठम् १०। ४. सि० शि० १।१३–२०, पृष्ठम् ५-७।

ग्रन्थकर्तुः शिवयोगिशिवाचार्यस्य प्रपितामहस्यापि नाम शिवयोगिशिवाचार्य इत्येवासीत्। लोके परिपाटिरियं वर्तते यत् पितामह–प्रपितामहादीनां नामानि तद्वंश उत्पन्नेभ्यः पुत्र-पौत्रेभ्यः पुनः प्रदीयन्ते। तद्वद् ग्रन्थकारः शिवयोगिशिवाचार्यः स्वप्रपितामहस्य नाम्नैवात्र प्रसिद्धि जगाम।

सिद्धान्तशिखामणेस्तत्त्वप्रदीपिकाख्यसंस्कृतव्याख्याकारेण श्रीमता मरितोण्टदार्येण (ख्रि० १७००) ग्रन्थारम्भे—**'अत्र कलिकालप्रवेशानन्तरं लोकहितार्थं रेणुकगणेश्वर इति प्रसिद्धरेवणसिद्धेश्वरः कुम्भसम्भवाय वीरशैवशास्त्रमुपदिष्टवान्। तदनन्तरं रेवणसिद्धेश्वरदृष्टिगर्भसम्भूतसिद्धरामेश्वरसम्प्रदायप्रसिद्धः सकलनिगमागमपारगः शिवयोगीश्वर इत्यभिधानवान् कश्चिद् माहेश्वरस्तद्रेणुकागस्त्यसंवादं निर्विघ्नेन स्वशिष्यान् बोधयितुं स्वमनसि कृतसकलसिद्धान्तश्रेष्ठ· निगमागमैक्यगर्भीकारलक्षणस्वेष्टदेवतानमस्काररूपमङ्गलं शिष्यशिक्षार्थं सप्तभिः श्लोकैर्निबध्नाति'**[1] इत्यवतरणिकायां ग्रन्थकारः शिवयोगिशिवाचार्यो रेवणसिद्धेश्वरवरप्रसादेन समुत्पन्नस्य सोल्लापुरसिद्धरामेश्वरस्य वंशज इति प्रतिपादितम्।

**अत्रेदमवधेयम्**—तत्र तावन्महाराष्ट्रप्रान्ते 'सोल्लापुरम्' इति सुप्रसिद्धं पत्तनमेकं वर्तते। तत्पत्तनस्थमुद्दगौड–सुग्गलादेव्योर्दम्पत्योः षष्टिवर्षे वयसि श्रीरेवणसिद्धेश्वराख्यस्य वीरशैवाचार्यस्याशीर्वादविशेषेण सिद्धरामेश्वराख्यः पुत्रः सञ्जातः। स चाग्रे सिद्धरामशिवयोगीति नाम्ना ख्रि० १२०० तमाब्दे प्रसिद्ध आसीत्।[2] स च कन्नडभाषायां स्वानुभवपद्यानि लिलेख। तान्यधुना **'सिद्धरामेश्वरवचनगलु'** इति नाम्ना प्रथितानि सन्ति। श्रीमरितोण्टदार्यः (ख्रि० १७००) सिद्धान्तशिखामणेर्व्याख्यानावसरे कविवंशे समागतम् मुद्दुदेवः इति नाम दृष्ट्वा स च पूर्वोक्तसिद्धरामेश्वरस्य पिता मुद्दगौड एव स्यादिति निर्णीय—

**तस्यासीन्नन्दनः शान्तः सिद्धनाथाभिधः शुचिः।**
**शिवसिद्धान्तनिर्णेता शिवाचार्यः शिवात्मकः**[3] ॥

इत्यस्य श्लोकस्य व्याख्यायाम्—**'तस्य मुद्दुदेवस्य······सिद्धनाथाभिधः सिद्धरामेश्वराभिधासंयुक्तः सिद्धनाथाचार्याख्यो नन्दनः कुमार आसीदभवदित्यर्थः।'**[4] इति मुद्दुदेवस्य पुत्रं सिद्धनाथं सिद्धरामेश्वर इति व्याख्याय, पुनः—

**तस्य वीरशिवाचार्यशिखारत्नस्य नन्दनः।**
**अभवच्छिवयोगीति सिन्धोरिव सुधाकरः**[5] ॥

---

१. सि० शि० भाग० १, पृष्ठम् १-२।
२. द्र० 'सिद्धरामशिवयोगि' एम्० बी० कोट्रशेट्टिविरचितः कन्नडशोधप्रबन्धः, पृष्ठम् ६९-८५, कर्नाटक—वि० वि० प्रकाशनम् १९७५ ई०।
३. सि० शि० १।१७, पृष्ठम् ६।   ४. सि० शि० तत्त्व० १।१७, पृष्ठम् ६-७।
५. सि० शि० १।२०, पृष्ठम् ७।

इति श्लोकव्याख्याने च—'सिद्धनाथाचार्यस्य नन्दनः कुमारः सिद्धोः समुद्रस्य सुधाकर इव शिवयोगीति आसीत् प्रसिद्धो जात इत्यर्थः'[1] इति सिद्धरामेश्वराभिधस्य सिद्धनाथस्य पुत्रोऽयं शिवयोगिशिवाचार्य इत्यवधार्य शिवयोगिशिवाचार्यं सिद्धरामेश्वरवंशोत्पन्नत्वेन प्रतिपादितवान् ।

एवमनया मरितोण्टदार्योक्त्या सिद्धान्तशिखामणेः कालो द्वादशाब्दीयसिद्धरामेश्वर-बसवेश्वरादिभ्योऽर्वाचीन इति प्रतीयते; किन्तु कविकालवंशविषयको मरितोण्टदार्यस्य पक्षो न क्षोदक्षम इति वीरशैवविदुषामाशयः ।

तत्र डॉ० ज० च० नि०[2] महाभागाः—'मरितोष्टदार्यवचनानुसारेण मुद्ददेवस्य पुत्रः सिद्धनाथ एव सिद्धरामेश्वरः, तत्पुत्रश्च शिवयोगिशिवाचार्य इत्यङ्गीकर्तुं न शक्यते । यतो हि सोल्लापुरसिद्धरामेश्वरस्त्वविवाहितः । विनैव विवाहं कथं पुत्रसम्भवः ? यदि सिद्धरामेश्वर एव शिवयोगिशिवाचार्यस्य पिता स्यात्, तर्हि शिवयोगिशिवाचार्यः स्वपितुर्नामोल्लेखने **'सिद्धरामः'** इत्येव वक्ष्यति स्म, न तु **'सिद्धनाथः'** इति । न च छन्दोभङ्गशङ्कालवलेशोऽपि । तथाहि—**'तस्यासीन्नन्दनः शान्तः सिद्धनाथाभिधः शुचिः'** इति वक्तव्ये **'तस्यासीन्नन्दनः शान्तः सिद्धरामाभिधः शुचिः'** इति वक्तुं शक्यते स्म । किञ्च, सोल्लापुरसिद्धरामेश्वरस्य पितुर्नाम मुद्दगौडः, न तु मुद्ददेवः । अतः किञ्चिन्नामसाम्येन नैवं वक्तुं योग्यम् ।

यदि च शिवयोगीति प्रसिद्ध आचार्य एव सिद्धरामेश्वरः, स च ग्रन्थकारस्य प्रपितामह इत्युच्यते, तर्हि तदप्ययुक्तम् । यतो हि शिवयोगिशिवाचार्यो ग्रन्थलेखनावसरे—

**आलोक्य शैवतन्त्राणि कामिकाद्यानि सादरम् ।**
**वातुलान्तानि शैवानि पुराणान्यखिलानि तु[3] ॥**

इत्यादिश्लोकानुक्त्वा स्वप्रपितामहस्य वचनशास्त्रमपि दृष्टवानिति वक्ष्यति स्म; तन्नोक्तम्, अतः शिवयोगीति विख्यातो ग्रन्थकारवंशमूलपुरुषोऽपि न सोल्लापुरसिद्धरामेश्वरः । तदेवं ग्रन्थारम्भे शैवागमानां पुराणानां च नामोल्लेखनेन वचनशास्त्रस्य चानुल्लेखनेनाऽयं सिद्धान्तशिखामणिकारः शिवयोगिशिवाचार्यो वचनशास्त्रकर्तृभ्यः सिद्धरामेश्वरबसवेश्वरादिभ्योऽपि प्राचीन इत्यवधार्यते ।

अपि च शिवयोगिशिवाचार्यः स्ववंशावल्यां ग्रामस्य मातुर्वा नाम नोक्तवान् । अतोऽस्य वंशक्रमो न गृहस्थाश्रमिकः, अपि त्वैत्तराश्रमिकाचार्यपरम्परानुवर्तीति सम्भावयितुं शक्यते । अपरश्च—

**येन रक्षावली जाता शिवभक्तिः सनातनी ।**
**बौद्धादिप्रतिसिद्धान्तमहाध्वान्तांशुमालिना[4] ॥**

---

१. सि० शि०—तत्त्व० १।२०, पृष्ठम् ७ ।
२. "जगद्गुरुचन्नबसवराजदेशिकेन्द्रमहास्वामिनो निडुमामिडि" इति पूर्णनामधेया एते उपर्युक्तनामसङ्केतेनैव कर्णाटके सुप्रसिद्धवीरशैवाचार्याः सन्ति ।
३. सि० शि० १।२५, पृष्ठम् ८ । ४. सि० शि० १।२३ पृष्ठम् ८ ।

इत्यनेन श्लोकेन शिवयोगिशिवाचार्यस्य समये बौद्धाद्यवैदिकधर्माणामधिकः प्रसार आसीत्, तन्निरासायैवाऽयं ग्रन्थमिमं प्रणिनायेति ज्ञायते । द्वादशाब्दीयसिद्धरामेश्वर-बसवेश्वरादि-समये कर्णाटके बौद्धमतप्राबल्यं नासीदेव । तस्मादयं कविः सिद्धराम-बसवेश्वरादिशिवशरणेभ्यः प्राचीन इति वक्तव्ये न किमपि काठिन्यम्[1] ।

मैसूरास्थानविद्वान् प० एन्० आर्० करिबसवशास्त्री—'ग्रन्थस्यास्य कर्ता शिवयोगि-शिवाचार्यः पीठिकायां स्ववंशानुक्रमं प्रतिपादितवान् । तावता तस्य कः कालः ? को वा देश इति न स्पष्टमवगम्यते । सोल्लापुरसिद्धरामेश्वरस्य वंशज इति कथने न किञ्चित् प्रबलं प्रमाणम् । तथाप्ययं ग्रन्थो बसवादिभ्यः प्राचीनः'[2] इत्युक्त्वा पूर्वोक्तस्य मरितोण्टदार्यवचनस्यानौचित्यं सूचयन् स्वसूक्ताभिप्रायं प्रकटितवान् ।

**ग्रन्थकालनिर्णये श्रीदासगुप्तानामनवधानता**

सिद्धान्तशिखामणेः कालनिरूपणावसरे डॉ० एस्० एन्० दासगुप्तमहाभागाः—'सिद्धान्त-शिखामणौ बसवेश्वरस्योल्लेखो वर्तते, श्रीपतिश्च स्वकीयश्रीकरभाष्ये सिद्धान्तशिखामणिं प्रमाणत्वे-नोल्लिखितवान् । अतः सिद्धान्तशिखामणिर्बसवेश्वरादनन्तरं श्रीपतेश्च प्राग् निर्मितः स्यात्'[3] इति तर्कद्वयं समुपस्थापितवन्तः । तयोर्मध्ये श्रीपतिः श्रीकरभाष्ये सिद्धान्तशिखामणिं प्रमाणत्वे-नोल्लिखितत्वादयं ग्रन्थः श्रीपतेरपि प्राक्तन इति तर्कस्य सत्यत्वेऽपि सिद्धान्तशिखामणौ बस-वेश्वरस्योल्लेखो वर्तते, अतोऽयं बसवेश्वरादर्वाचीन इति तर्कस्तु प्रमादपूर्णः प्रतिभाति । तथाहि श्रीदासगुप्ताः—'शिवनिन्दकस्य वध आवश्यक इति बसवेश्वरविचारः सिद्धान्तशिखामणा-वुल्लिखितः'[4] इत्युक्त्वा तत्प्रमाणत्वेन—अथ वीरभद्राचार-बसवेश्वराचारं सूचयन् भक्ताचारभेदं प्रतिपादयति—

**शिवनिन्दाकरं दृष्ट्वा घातयेदथवा शपेत् ।**
**स्थानं वा तत्परित्यज्य गच्छेद् यद्यक्षमो भवेत्[5] ॥**

इति सिद्धान्तशिखामणेरंशमुदाहृतवन्तः । उद्धृतांशे बसवेश्वरस्योल्लेखो न मूलग्रन्थेऽस्ति, किन्तु टीकाकारस्य श्रीमरितोण्टदार्यकृतस्यावतरणिकायां वर्तते ।

**अत्रेदमवधेयम्**—उपर्युक्तश्लोके वीरशैवाभिमतः पञ्चाचारान्तर्गतो[6] गणाचारस्वरूप उपवर्णितः, अर्थाच्छिवभक्तो यदि सक्षमस्तर्हि शिवनिन्दको दृष्टश्चेत् तं शपेदथवा घातयेत् । हन्तुं

---

१. द्र० डॉ० ज० च० नि० कृता कन्नडमणिकान्तिपीठिका, पृष्ठम् १६–२०; सन्मार्गपुस्तकमाला निडुमामिडि० १९५१ ई० ।
२. द्र० सि० शि० कन्नडप्रस्तावना, पृष्ठम् ५ ग्रन्थप्रसारमण्डली, मैसूर १९२१ ई० ।
३. A History of Indian Philosophy. Vol. 5. P. 44.
४. तदेव—Vol. 5 P. 45.
५. सि० शि० ९।३६, पृष्ठम् १४८ ।
६. लिङ्गाचारः सदाचारः शिवाचारस्तथैव च ।
भृत्याचारो गणाचारः पञ्चाचाराः प्रकीर्तिताः ॥ (चन्द्रज्ञान० आ० क्रियापादः ९।४)

शक्तुं च यद्यसमर्थः, कर्णौ पिधाय तत्स्थानं परित्यज्य गच्छेत् । शिवभक्तेन न कदापि शिवनिन्दा श्रोतव्या इति हि गणाचारस्वरूपं निर्दशितम् । तत्र श्लोकस्यास्य व्याख्यानावसरे श्रीमरितोण्टदार्योऽवतरणिकायां श्रीवीरभद्रस्य श्रीवसवेश्वरस्य च नाम दृष्टान्तत्वेनोदाहृतवान् ।

अस्यायं भावः—यथा हि शिवापमानकारकं दक्षब्रह्मणो यागं दृष्ट्वा श्रीवीरभद्रस्तद्यागं तं च विनाशितवान्, यथा वा विज्जलभूपतेः राजधान्यां कल्याणनगरे राजभटैः साकं शिवभक्तानां कलहे सञ्जाते सति तत्र राजभटैः क्रियमाणं बहूनां शिवभक्तानां हिंसाकृत्यं दृष्ट्वा तदसहमानः शिवभक्तो बसवेश्वरो विज्जलभूपतेः प्रधानमन्त्रिपदं त्यक्त्वा बीजापुरमण्डलान्तर्गतसङ्गमक्षेत्रमगच्छत्, तथा शिवभक्तः सक्षमश्चेद् वीरभद्रवत् शिवनिन्दकं घातयेत्, यदि चाक्षमस्तर्हि श्रीवसवेश्वरवत् तत्स्थानं परित्यक्तव्यमिति गणाचारस्य दृष्टान्तत्वेन श्रीवीरभद्राचारः श्रीवसवेश्वराचारश्चोदाहृतः ।

तदेवं श्रीवसवेश्वरस्य नामोल्लेखः किं मूलग्रन्थेऽस्ति, उत टीकाकारकृतावतरणिकायामिति सम्यगपर्यालोच्यैव डॉ० एस्० एन्० दासगुप्तमहाभागैः प्रतिपादितं दृष्ट्वा कथं वा पर्यालोचका न परिहसेयुः । अतः सिद्धान्तशिखामणिर्वसवेश्वरादर्वाचीन इति श्रीदासगुप्तवचनं प्रमाणशून्यं प्रमादपूर्णञ्चास्ति ।

एतदतिरिक्तं श्रीदासगुप्तानामपरोऽपि प्रमादः प्रदर्श्यते । तथाहि—श्रीवसवेश्वरः स्वबाल्यावस्थायां विशेषशिक्षणार्थं विज्जलभूपतेः प्रधानमन्त्रिणः स्वमातुलस्य श्रीबलदेवस्यान्तिकमाजगामेतीतिहासो वर्तते । विज्जलभूपस्य राजधानीत्वेन प्रसिद्धं कल्याणनगरं कर्णाटकप्रान्तस्य बीदरमण्डलेऽस्ति । एतदितिहासमपर्यालोच्यैव डॉ० एस्० एन्० दासगुप्तमहाभागाः—'श्रीवसवेश्वरो बाल्यावस्थायामेव स्वजन्मस्थानाद् **बागेवाडीतो** बम्बईसमीपस्थं कल्याणनगरं जगाम, यत्र हि ख्रि० ११५७–११६७ पर्यन्तं विज्जलभूपतेः प्रशासनमासीत्, पुनर्यत्र च श्रीबलदेवस्य रुग्णत्वेन तत्स्थाने श्रीबसवेश्वरः प्रधानमन्त्रित्वेन नियुक्तोऽभूत्[1]' इति कल्याणनगरं बम्बईसमीपस्थमुपवर्णितवन्तः । विज्जलभूपतेः शासनं बम्बईसमीपस्थकल्याणनगर आसीदिति श्रीदासगुप्तवचनं श्रुत्वा कस्य वेतिहासज्ञस्य मनसि खेदो न सञ्जायेत । एवमेवान्यदर्शनेतिहासविषयेऽपि तेषां लेखनी कियत् तथ्यं प्रतिपादितवतीति तत्तत्सम्प्रदायविद्वांस एव जानन्तु । तस्मात् सिद्धान्तशिखामणेः कालविषये **'ग्रन्थोऽयं बसवेश्वरादर्वाचीनः'** इति दासगुप्तोक्तिर्न स्वीकारार्हा ।

अपरञ्च—

**प्रसादाद् देवताभक्तिः प्रसादो भक्तिसम्भवः ।**
**यथैवाङ्कुरतो बीजं बीजतो वा यथाङ्कुरः[2] ॥**

---

१. A History of Indian Philosophy vol. V. P. 42. Cambridge University Press. 1055.

२. द्र० सि० शि० ९।११, पृष्ठम् १४०, यद्यप्यत्र 'प्रसादादेव सा भक्तिः' इति वर्तते; तथापि स पाठभेदो भवितुमर्हति ।

'.........आप जिस पर प्रसन्न हैं वही धन्य है, जग में पावन है, कूडलसंगमदेव[१] ।'

इत्यस्मिन् श्रीवसवेश्वरवचने प्रमाणत्वेनोदाहृतः संस्कृतश्लोकः सिद्धान्तशिखामणेर्नवम-परिच्छेदस्यैकादशश्लोको वर्तते। तस्मात् सिद्धान्तशिखामणिर्बसवेश्वरात् प्राचीन इत्यत्रोपर्युक्तं श्रीबसवेश्वरस्य वचनमेव प्रबलं प्रमाणम् ।

अपि च श्रीदेवरदासिमय्य-बसवेश्वर-अक्कमहादेवी-अल्लमप्रभुदेवप्रभृतीनां द्वादश-शताब्दीयवीरशैववचनकाराणामुपरि सिद्धान्तशिखामणेः प्रभाव आसीदिति डॉ० ज० च० नि० महाभागाः सोदाहरणं प्रतिपादितवन्तः[२]। तस्मात् सर्वविधपर्यालोचनेनेदं ज्ञायते यत् सिद्धान्त-शिखामणिर्बसवेश्वरादिशरणयुगात् प्रागेव प्रमाणत्वेन प्रसिद्ध आसीदिति ।

**श्रीकरभाष्यात् सिद्धान्तशिखामणेः प्राचीनत्वम्**

ननु सिद्धान्तशिखामणिर्बसवेश्वरात् प्राचीन इति तु निश्चितम्, किन्तु ततः कियत् प्राचीनमिति जिज्ञासायामुच्यते। तत्रभवन्तः श्रीपतिपण्डिताराध्यभगवत्पादाः श्रीकरभाष्ये— **'पवित्रं ते'** इति ऋग्वेदमन्त्रस्य—

**ऋगित्याह पवित्रं ते विततं ब्रह्मणस्पते ।**
**तस्मात् पवित्रं तल्लिङ्गं धार्यं शैवमनामयम् ॥**
**... ... ... ... ... ... ...**
**दीक्षया रहितः साक्षान्नाप्नुयाल्लिङ्गमुत्तमम् ॥**[3]

इति सिद्धान्तशिखामणौ श्रीरेणुकाचार्येण लिङ्गधारणपरत्वेन निर्देशात्[४], इत्यद्यानेकस्थलेषु सिद्धान्तशिखामणेः श्लोकान् सादरं प्रमाणत्वेनोपस्थापितवन्तः। एतेन श्रीपतेरपि प्रागयं प्रामाणिकत्वेन प्रसिद्ध आसीदिति सुनिश्चितम् ।

श्रीपतिपण्डिताराध्यस्य कालविषये कश्चन विवादो वर्तते। तदेवात्र संक्षेपेण प्रस्तूयते। श्रीकरभाष्ये तत्र तत्र नीलकण्ठ[५]-भट्टभास्कर[६]-श्रीकण्ठ-रामानुजादीनां[७] नामग्रहणपूर्वकं तदीय-सिद्धान्तानामभिमतत्वस्यानभिमतत्वस्य च प्रतिपादितत्वादयं श्रीपतिरेतेभ्योऽर्वाचीन इति ज्ञायते।

---

१. 'बसवेश्वर के वचन' भागः १, पृष्ठम् १०७. कर्नाटकविश्वविद्यालयप्रकाशनम्, १९७६ ई० ।
२. द्र० 'मणिमुकुरप्रभायाः कन्नडभाषाया अनुबन्धः' पृष्ठम् ११७–१२०, सम्पादकः पञ्चाक्षरी हिरेमठः, ताराग्रन्थप्रकाशनं धारवाड़, १९७६ ई० ।
३. सि० शि० ६।३७–३९, पृष्ठम् ९८–९९; ४. ब्र० सू० श्रीकर० १।१।१ ।
५. "नीलकण्ठभगवत्पाद-भट्टभास्कर-घण्टानाथ-ज्योतिर्नाथादिपूर्वाचार्यैश्छान्दोग्यभाष्ये ........... व्याख्यातम्" (ब्र० सू० श्रीकर० १।१।२१) ।
६. अत्र शिवाग्रगण्यश्रीकण्ठशिवाराध्यकृतब्रह्मसूत्रमीमांसाभाष्ये विशिष्टाद्वैतं स्वाभिप्रेतत्वेन प्रसाधितम्, (ब्र० सू० श्रीकर० २।१।२२) ।
७. चिदचिदीश्वरपरिभाषाप्रधानरामानुजशास्त्रं वेदमूलकत्वाभावादवैदिकमिति घण्टाघोषः, (ब्र० सू० श्रीकर० २।२।४१) ।

तत्र श्रीनीलकण्ठस्य समयावधारणे साधनाऽनुपलब्ध्या तस्यातीवप्राचीनत्वमङ्गीकुर्वन्ति। श्रीभट्टभास्करस्य सिद्धान्तः कुसुमाञ्जलिकारेण ख्रि० ९८० तमाब्दीयेनोदयनाचार्येण विमर्शित इति श्रीभास्करस्य समयः ख्रि० ९०० तमाब्द इति डॉ० सर्वपल्लिराधाकृष्णन्महोदयाः कथयन्ति।[1] तैरेव श्रीरामानुजस्य समयः ख्रि० १०२७ तमाब्द इनि निरूपितम्।[2]

चिदरेमठस्य श्रीवीरभद्रशर्ममहोदयाः श्रीकण्ठाचार्यकालोऽपि ख्रि० १०६४ तमाब्द इति समर्थयन्ति।[3] तदेवं श्रीकण्ठ-नीलकण्ठ-भट्टभास्कर-रामानुजादिभ्योऽर्वाचीनस्य श्रीपतिपण्डिताराध्यस्य कः समयः स्यादिति जिज्ञासायां श्री टी० एस्० नारायणशास्त्रिमहाभागाः प्राचीनशिलाशासनाधारेण श्रीपतेः कालं ख्रि० १०७२ तमाब्द इति निर्णीतवन्तः।[4] आचार्यबलदेवोपाध्यायमहोदया अपि श्रीपतेः कालः ख्रि० १०६० इति निरूपितवन्तः।[5] तदेतावता श्रीकरभाष्यस्य समयः ख्रि० एकादशशततमाब्द इति निश्चीयते।

**सी० हयवदनरावमहोदयस्य भ्रमनिरासः**

तत्र वेङ्गलोरनिवासिनो मध्वमतानुयायिनः सी० हयवदनरावमहोदयः श्रीकरभाष्ये—'मध्वाद्वैतक्षपणकतार्किकादयः[6] (तार्किकादिभिः) जीवानां विभुत्वाङ्गीकारात् तन्निरासार्थमेतदधिकरणप्रारम्भः'[7] इत्यत्र मध्वशब्दं दृष्ट्वा श्रीकरभाष्यं मध्वाचार्यादर्वाचीनमिति साधयन्ति।[8] तदयुक्तम्, यतो ह्यत्रत्यो मध्वशब्दः प्रक्षिप्त एव। तथाहि—श्रीपतिपण्डिताराध्याः 'उत्क्रान्तिगत्यागतीनाम्'[9] इत्यस्य बादरायणसूत्रस्य भाष्यलेखनावसरे जीवात्मनो व्यापकत्वे तस्योत्क्रान्तिगत्यागतीनां सम्भवाभावादात्मनोऽणुत्वमेव स्वीकर्तव्यमिति सिद्धान्तयितुमात्मनो विभुत्ववादिनां मतं निरासितवन्तः। तत्राद्वैत-तार्किकादिभिरात्मनो विभुत्वाङ्गीकारेण तेषां निरास्यत्वसम्भवेऽपि मध्वस्य तदसम्भवः, तत्राप्यात्मनोऽणुत्वस्वीकारात्। तदुक्तं मध्वाचार्यैरेव—**'हेतूनां सकाशादणुरेव'**[10]**; अणोरपि जीवस्य सर्वशरीरव्याप्तिर्युज्यते। यथा हरिचन्दनविप्लुष एकदेशपतितायाः सर्वशरीरव्याप्तिः'**[11] इति च।

---

१. Indian philosophy Vol. 2. P. 670. Published by D. R. Bhagi, Bombay 1977. २. Indian philosophy Vol. 2. P. 665.

३. श्रीकण्ठाचार्यकालोऽपि ख्रि० १०४० अब्द इत्यघोरशिवाचार्यकृते महोत्सवविधौ स्वकालस्य ख्रि० श० ११५४ अब्दत्वेन निर्देशात्, श्रीकण्ठस्य स्वप्रपितामहत्वकथनाच्च निश्चीयते (श्रीकरभाष्यचतुःसूत्री, पीठिका, पृष्ठम् ४) जङ्गमवाड़ीमठ-वाराणसीप्रकाशनम्, १९५६ ई०)।

४. The Indian Review Vol. 16 May 1915 N. 5.

५. द्र० भारतीयदर्शने, पृ० ४६९. चौखम्बा ओरियन्टालिया १९७६ ई०।

६. अत्र मध्वाद्वैतक्षपणकतार्किकादय इति प्रथमान्तपाठस्थाने तृतीयान्तः पाठ उचितः प्रतिभाति।

७. ब्र० सू० श्रीकरभा० २।३।१८, पृ० २६३।

८. द्र० सी० हयवदनरावकृता श्रीकरभाष्यस्याङ्गलभाषामयभूमिका, पृष्ठम् ९५-९८, वेङ्गलोरप्रेस, वेङ्गलोर १९३६ ई०। ९. ब्र० सू० २।३।१८।

१०. ब्र० सू० पूर्णप्रज्ञभाष्यम् २।३।२०। ११. ब्र० सू० पूर्णप्रज्ञभाष्यम् २।३।२४।

तस्मात् 'मध्वाद्वैतक्षपणकतार्किकादयः (दिभिः) जीवानां विभुत्वाङ्गीकारात् तन्निरासार्थमेतदधिकरणप्रारम्भः' इत्यस्मिन् श्रीपतिपण्डिताराध्यवचने विद्यमानो मध्वशब्दोऽप्रासङ्गिकोऽसमञ्जसश्चेति तस्य प्रक्षिप्तत्वं सुलभवेद्यमेव। एवमेवान्यत्र तत्र तत्र श्रीकरभाष्ये[1] विद्यमानमध्वशब्दः प्रक्षिप्त इत्येव पर्यवस्यति।

अपरञ्च, श्रीकरभाष्यस्य मातृकारूपेषु लिखितपुस्तकेषु मध्वपदं न कुत्रापि दृश्यत इति श्री एम्० जी० नञ्जुण्डाराध्यमहोदयाः प्रतिपादयन्ति।[2]

किञ्च, चिदरेमठस्य श्रीवीरभद्रशर्ममहोदयाः—'शङ्कर-रामानुजभाष्यवाक्यानि यथा श्रीकरभाष्ये यथामूलं दृश्यन्ते, न तथा मध्वभाष्यवाक्यमेकमप्युपलभ्यते। अत्र भाष्ये दृश्यमानेऽपि द्वैतखण्डने न तन्मध्वाचार्यमतमित्येव परिगण्यते, किन्तु प्राचीनद्वैतमित्येवावगन्तव्यम्'[3] इति श्रीकरभाष्यस्थमध्वशब्दस्य प्रक्षिप्तत्वमेव समर्थयन्ति।

अपि च, श्रीमध्वाचार्यः ख्रि० १२ तमशताब्दीय इति डॉ० सर्वपल्लिराधाकृष्णन्महोदयाः[4] प्रतिपादयन्ति स्म। श्रीपतेश्च समयः ख्रि० ११ तमशताब्द इति पूर्वमेव प्रतिपादितत्वान्न श्रीपतेर्मध्वादर्वाचीनत्वं सम्भवति। टी० एस्० नारायणशास्त्रिणोऽपि श्रीमध्वाचार्यस्य श्रीपतेरर्वाचीनत्वं कथयन्ति[5]।

तदेवं श्रीकरभाष्यस्य ख्रि० ११ तमशताब्दीभवत्वनिश्चयेन श्रीकरभाष्ये प्रमाणत्वेनोदाहृतः सिद्धान्तशिखामणिस्ततोऽपि प्राचीन इति निर्णीयते।

**श्रीकण्ठभाष्यात् सिद्धान्तशिखामणेः प्राचीनत्वम्**

श्रीकण्ठविरचिते ब्रह्मसूत्रश्रीकण्ठभाष्ये **'अविभागेन दृष्टत्वात्'**[6] इत्यत्र **'मुक्तः शिवसमो भवेत्'**[7] इति सिद्धान्तशिखामणेरंशः प्रमाणत्वेनोदाहृतः। श्रीकण्ठस्य च समयः ख्रि० दशमशताब्द इति पूर्वमेव प्रतिपादितत्वात्, ततोऽपि प्राचीनोऽयं सिद्धान्तशिखामणिरित्यवधार्यते।

अपरञ्च, डॉ० ज० च० नि० महाभागाः—'ग्रन्थरचनाकारः शिवयोगिशिवाचार्यः ख्रि० अष्टमशताब्दे सालुहट्टि(सालोटगी)विद्यापीठे प्राचार्या आसन्निति श्रूयते। तदिदानीं बीजापुरमण्डलान्तर्गते **'इण्डी'** नगरसमीपे विद्यते। तत्र शिवयोगीश्वरस्य समाधिरेको वर्तते' इति प्रतिपादयन्ति[8]। एतेन सिद्धान्तशिखामणे रचनाकालोऽपि ख्रि० अष्टमशताब्द इति निश्चीयते।

---

१. द्र० ब्र० सू० श्रीकरभा० २।२।४१, पृष्ठम् २३७।
   ,, ,, २।३।४०, पृष्ठम् २७३।
२. द्र० श्रीकरभाष्यभूमिका, पृष्ठम् १२१, मैसूर-वि० वि० प्रकाशनम् १९७७ ई०।
३. श्रीकरभाष्यचतुःसूत्री (पीठिका, पृ० १०) जंगमवाडीमठप्रकाशनम्।
४. Indian Philosophy Vol. 2. P. 738.
५. The Indian Review Vol. 16 may 1915 N. 5.
६. ब्र० सू० ४।४।४।  ७. सि० शि० ९।१४, पृष्ठम् १४१।
८. द्र० सिद्धान्तशिखामणेः सौन्दर्यदर्शनस्य कन्नडपीठिका, पृष्ठम् १०-१२, १९७६ ई०।

किञ्च, प० काशीनाथशास्त्रिमहाभागाः—

> **येन रक्षावती जाता शिवभक्तिः सनातनी ।**
> **बौद्धादिप्रतिसिद्धान्तमहाध्वान्तांशुमालिना[१] ॥**

इत्यस्मिन् श्लोके श्रीशिवयोगिशिवाचार्यः स्वात्मानं बौद्धादिप्रतिद्वन्द्विभिः सनातनशिवभक्ते रक्षकं प्रतिपादितवान् ।

भरतखण्डे च द्विसहस्रवर्षात् प्राग् बौद्धधर्मस्य प्रबलः प्रचार आसीदिति शिवयोगिशिवाचार्यस्य तत्कृतसिद्धान्तशिखामणेश्च कालो द्विसहस्रवर्षप्राचीन इत्यपि युक्तिं प्रदर्शयन्ति[२]। श्रीशैलजगद्गुरुवागीशपण्डिताराध्यशिवाचार्यमहास्वामिनोऽप्यमुमेव पक्षं समाजयति[३] ।

तदेवं सिद्धान्तशिखामणिर्द्विसहस्रवर्षात् प्राचीन इति सम्भाव्यमानत्वेऽपि ख्रि० अष्टमशताब्दीय इत्यत्र न सन्देह इति मे प्रतिभाति ।

**सिद्धान्तशिखामणेर्दार्शनिकसिद्धान्ताः**

**परशिवस्वरूपविमर्शः**—भारतीयदार्शनिकेषु केचिज्जगदुत्पत्तिस्थितिसंहारक्रियाव्यवस्थार्थम्, प्राणिनामदृष्टानुरूपं सुख-दुःखफलप्रदानार्थम्, वेदानां प्रामाण्यव्यवस्थापनार्थमस्मदादिविलक्षणः सर्वज्ञत्व-सर्वकर्तृत्वादिगुणगणसमन्वित ईश्वर आवश्यक इति तमागमानुमानादिप्रमाणैः साधयन्ति। केचन विनैवेश्वरं पूर्वोक्तानां समस्यानां समाधानं कुर्वन्ति । वीरशैवदर्शने चेश्वरमङ्गीकृत्यैवोपर्युक्तसमस्यानां समाधानं विधीयते ।

वीरशैवदर्शने परमतत्त्वं स्थल[४]-लिङ्ग[५]-परशिवाद्यभिधानैर्व्यवह्रियते ।[६] सोऽयं परशिवोऽत्र दर्शने सगुणनिर्गुणोभयरूपः । सगुण-निर्गुणशब्दयोरत्र सकल-निष्कलशब्दाभ्यां व्यवहारो दरीदृश्यते । श्रीशिवयोगिशिवाचार्यः सिद्धान्तशिखामणौ—

> **परिच्छेदकथाशून्यं प्रपञ्चातीतवैभवम् ।**
> **प्रत्यक्षादिप्रमाणानामगोचरपदे स्थितम्[७] ॥**

---

१. सि० शि० १।२३, पृष्ठम् ८ ।
२. द्र० सिद्धान्तशिखामणेः प्रस्तावना, पृष्ठम् ७, काशीनाथग्रन्थमाला मैसूरः १९७२ ई० ।
३. द्र० सिद्धान्तशिखामणेः सत्यार्थप्रकाशः, पृष्ठम् २-३, पण्डिताराध्यविद्यापीठश्रीशैलम् ।
४. यत्रादौ स्थीयते विश्वं प्राकृतं पौरुषं यतः ।
लीयते पुनरन्ते च स्थलं तत्प्रोच्यते ततः ॥ (अनुभवसूत्रम्–२।४) ।
५. लयगत्यर्थयोर्हेतुभूतत्वात् सर्वदेहिनाम् ।
लिङ्गमित्युच्यते साक्षाच्छिवः सकलनिष्कलः ॥ (अनुभवसूत्रम्–३।४)
६. ब्रह्मेति व्यपदेशस्य विषयं यं प्रचक्षते ।
वेदान्तिनो जगन्मूलं तन्नमामि परं शिवम् ॥ (सि० शि० १।२, पृ० २)
७. सि० शि० २।४, पृष्ठम् १२ ।

इति परशिवस्य निर्गुणरूपत्वम्—

**विशुद्धज्ञानकरणं विषयं सर्वयोगिनाम् ।**
**कोटिसूर्यप्रतीकाशं चन्द्रकोटिसमप्रभम् ॥**
**अप्राकृतगुणाधारमनन्तमहिमास्पदम्[1] ।**

इति तस्य सगुणरूपत्वं चोपवर्णितवान् । एक एव परशिवः स्वशक्तिसङ्कोच-विकासाभ्यां क्रमशो निर्गुण-सगुणरूपं धारयति, अर्थात् सृष्ट्यादिव्यवहारे[2] सगुणः, तद्रहितायाञ्च निर्गुण इति बोध्यम् ।

**अत्रेदमैदम्पर्यम्**—परशिवस्य निर्गुण-सगुणोभयरूपहेतुस्तन्निष्ठा शक्तिरेव । सा च शक्तिः, **'तदीया परमा शक्तिः सच्चिदानन्दलक्षणा[3]'; 'गुणत्रयात्मिका शक्तिर्ब्रह्मनिष्ठा सनातनो'[4]** इति सिद्धान्तशिखामणिवचनेन द्विविधात्राङ्गीक्रियते । तत्रैका सच्चिदानन्दरूपा, अपरा सत्त्वादिगुण-त्रयात्मिका । सच्चिदानन्दरूपविमर्शशक्तिविशिष्टः शिवो निर्गुणः, गुणत्रयात्मिकमायाशक्तिविशिष्टश्च सगुणः । अद्वैतवेदान्ते निर्गुणं हि ब्रह्म निर्विशेषमपि । किन्तु वीरशैवदर्शने निर्गुणोऽपि शिवो न निर्विशेषः, शक्तिविशिष्टत्वात् सविशेष एव ।

अत्रायं भावः—**'सत्यं ज्ञानमनन्तं ब्रह्म'[5]** इत्यादिश्रुतिप्रामाण्येन ब्रह्मणः सच्चिदानन्द-रूपत्वं स्वरूपलक्षणमद्वैतिनः प्रतिपादयन्ति । तत्र सच्चिदानन्दानां गुणत्वे द्वैतापत्तिः स्यादिति असद्भिन्नत्वात् सत्, जडभिन्नत्वाच्चित्, दुःखभिन्नत्वाच्चानन्दमिति ब्रह्मणोऽसज्जडदुःखभिन्नत्व-प्रतिपादनार्थमेव तस्य सच्चिदानन्दत्वकथनम्, वस्तुतस्तत्र कस्यापि विधानाभाव इत्यद्वैतिभिरङ्गी-क्रियते । वीरशैवदर्शने तु सच्चिदानन्दानां परशिवस्यानुभवाभावे स्वप्रकाशस्यापि तस्य स्फटि-कादिवज्जडत्वापत्तिः स्यादिति परशिवे अस्मि, प्रकाशे, नन्दामीति बोधरूपा विमर्शशक्तिः स्वीक्रियते । तस्मात् सत्त्वादिगुणाभावेन निर्गुणोऽपि परशिवो बोधरूपविमर्शशक्तिविशिष्टत्वेन सविशेष एव ।

परशिवस्य सगुणरूपधारणे कारणीभूता मायाशक्तिः शुद्धसत्त्वगुणप्रधाना भवति । उपाधेः शुद्धत्वाद्, न जीवस्येव तस्य स्वरूपावरणसम्भवः । तादृशमायाविशिष्टत्वेन शिवः सर्वज्ञत्वादि-सामर्थ्यवान् सन् **'महेश्वरः'** इत्यभिधीयते । तदुक्तं रेणुकभगवत्पादैः—

**शुद्धोपाधिः परा माया स्वाश्रया मोहकारिणी ॥**
**मायाशक्तिवशादीशो नानामूर्तिधरः प्रभुः ।[6]**
**सर्वज्ञः सर्वकर्ता च नित्यमुक्तो महेश्वरः ॥** इति ।

---

१. सि० शि० २।११, पृष्ठम् १४ ।
२. सृष्टेः पूर्वं महादेवश्शक्तिसङ्कोचहेतुना ।
निर्गुणत्वेन शास्त्रेषु गीयते तत्त्ववेदिभिः ॥
सृष्ट्यादौ परमेशस्य शक्तेः प्राचुर्यवैभवात् ।
सर्वज्ञत्वादिकल्याणगुणवानिति कीर्त्यते ॥ (ब्र० सू० श्रीकर० १।३।७)
३. सि० शि० २।१२, पृष्ठम् १४ ।
४. सि० शि० ५।३८, पृष्ठम् ६५ ।
५. तैत्ति० २।१ ।
६. सि० शि० ५।४४–४६, पृष्ठम् ६९–७० ।

महेश्वरस्योपाधिभूतेयं माया, अद्वैतवेदान्ताभिमतमायावन्न मिथ्या, किन्तु सत्या। अद्वैतिनः **'या मा (नास्ति) सा माया'** इति व्युत्पत्त्या मायाया मिथ्यात्वं संसाध्य, ब्रह्मचैतन्येन साकमस्याध्यासिकसम्बन्धं च प्रतिपाद्येश्वरस्य सगुणरूपत्वमपि न पारमार्थिकम्, किन्तु निर्गुण-पारमार्थिकमिति व्यवस्थापयन्ति । वीरशैवदर्शने तु—

**मं शिवं परमं ब्रह्म प्राप्नोतीति स्वभावतः ।**
**मायेति प्रोच्यते लोके ब्रह्मनिष्ठा सनातनी ॥**

इति सिद्धान्तागमप्रामाण्येन 'मं = शिवम्, अयति = स्वभावतः प्राप्नोतीति माया' इति व्युत्पत्त्या मायाया नित्यत्वम्, शिवेन साकमस्य नित्यसम्बन्धत्वं च प्रतिपाद्य परशिवस्य सगुणरूपस्यापि सत्यत्वमेवाङ्गीक्रियते । यदि च निर्गुणस्यैव सत्यत्वं सगुणस्य च मिथ्यात्वं स्यात्, तदा **'तदैक्षत बहुस्यां प्रजायेति', 'स ईक्षाञ्चक्रे'** इत्यादीनामीश्वरस्य सगुणत्वप्रतिपादकश्रुतिशतानां निर्विषयत्वापत्तिः स्यात् ।

अपरञ्च, उपासकानामनुग्रहाय स भगवान् परशिवो दयया सगुणं रूपमङ्गीकरोति। तदुक्तं रेणुकभगवत्पादैः—

**चन्द्रार्धशेखरं शुद्धं शुद्धस्फटिकसन्निभम् ।**
**शुद्धमुक्ताफलाभासमुपास्यं गुणमूर्तिभिः ॥**[1] इति ।

तस्मादुपास्यस्य मिथ्यात्व उपासकानां श्रद्धाऽनुदयाद् भक्तिसिद्धान्तस्य वैयर्थ्यापत्तिः। अतः सगुणरूपस्यापि सत्यत्वमेवाङ्गीकर्तव्यम् । तस्मादीश्वरस्य सगुणस्वरूपविषये वीरशैवपक्ष एव भक्तैर्मुमुक्षुभिः समाद्रियत इति निश्प्रचम् ।

अयमेव सगुणपरशिवो महेश्वरः सृष्टिस्थिति-संहार-तिरोधान-अनुग्रहाख्यं पञ्चकृत्यं निर्वर्तयति । अत्र **'यथोर्णनाभिः सृजते गृह्णते च'**[2] इति श्रुतिप्रमाणेन सृष्टौ मायाशक्तिविशिष्टो महेश्वर एवाभिन्ननिमित्तोपादानकारणमिति स्वीक्रियते । मायायास्त्रिगुणात्मकत्वात् तदुपादान-कारणम्, महेश्वरश्च निमित्तकारणम् । अत्र—

**न शिवेन विनाशक्तिर्न शक्तिरहितः शिवः ।**
**पुष्पगन्धवदन्योन्यं मारुताम्बरयोरिव ॥**[3]
**यथा चन्द्रे स्थिरा ज्योत्स्ना विश्ववस्तुप्रकाशिनी ।**
**तथा शक्तिर्विमर्शाख्या प्रकारे ब्रह्मणि स्थिरा ॥**[4]
**शक्तिरस्य जगत्कृत्स्नं शक्तिमांस्तु महेश्वरः ।**
**शक्तिस्तु शक्तिमद्रूपा व्यतिरिक्ता हि न क्वचित् ॥**[5]

इत्यादिवचनानुसारेण शिवशक्त्योरेकरूपत्वाङ्गीकारादभिन्ननिमित्तोपादानकारणवादः सङ्गच्छते।

---

१. सि० शि० २।१०, पृष्ठम् १३ । २. मुण्ड० १।१।७ ।
३. द्र० वीरशैवानन्दचन्द्रिका, पृष्ठम् ७ ।
४. सि० शि० २०।४, पृष्ठम् २०२ । ५. द्र०—ब्र० सू० श्रीकर० १।४।१० ।

अद्वैतवेदान्तेऽपि मायाशबलितस्यैव ब्रह्मणोऽभिन्ननिमित्तोपादानकारणत्वं स्वीक्रियते, किन्तु तत्र मायोपहितस्येश्वरस्यापारमार्थिकत्वं तदुत्पन्नजगतश्च मिथ्यात्वं प्रतिपाद्यते। वीरशैवदर्शने तु परशिवसगुणरूपस्य महेश्वरस्य सत्यत्वात् तदुत्पन्नजगतश्च—

**पत्रशाखादिरूपेण यथा तिष्ठति पादपः।**

**तथा भूम्यादिरूपेण शिव एको विराजते॥**[1]

इति रेणुकभगवत्पादोक्त्या शिवरूपत्वात् सत्यत्वमङ्गीक्रियत इत्ययं विशेषः।

**सृष्टेर्लीलारूपत्वसमीक्षा**

सृष्टिरचनायामीश्वरस्य प्रयोजनसत्त्वे तस्य नित्यतृप्तत्वहानिः, प्रयोजनाभावे च मूढप्रवृत्तिप्रसङ्गः स्यादित्याक्षेपस्य परिहारो वीरशैवदर्शने लीलावादेन परिह्रीयते। अत्र परशिवस्य लीलावस्था, कैवल्यावस्था चेत्यवस्थाद्वयमङ्गीक्रियते। तत्र सर्वव्यापारशून्या कैवल्यावस्था, सृष्ट्यादिपञ्चकृत्यकर्तृत्वं च लीलावस्था। अल्पायाससाध्या विधेयनिष्पत्तिमात्रफलिका कर्तुरुद्देश्यस्यासाधिका हि क्रिया लीलापदार्थः। प्रकृते च पञ्चकृत्यानां परशिवस्येच्छामात्रेण सम्भवात् तेष्वल्पायाससाध्यत्वम्, तत्करणे च परशिवस्य किमपि प्रयोजनं न सिद्ध्यतीति तेषु विधेयनिष्पत्तिमात्रफलकत्वं कर्तुरुद्देश्यस्यासाधकं च वर्तत इति तेषां लीलावाचकत्वं सम्भवत्येव। तत्रभवान् शिवयोगिशिवाचार्यः—

**स्वेच्छाविग्रहयुक्ताय स्वेच्छावर्तनवर्तिने।**

**स्वेच्छाकृतत्रिलोकाय नमः साम्बाय शम्भवे॥**[2]

इत्यत्रेच्छामात्रेण जगत्कर्तृत्वं प्रतिपाद्य तस्याल्पायाससाध्यत्वम्, अत एव लीलारूपत्वं च सूचितवान्।

अद्वैतवेदान्तेऽपि **'लोकवत्तु लीलाकैवल्यम्'**[3] इति बादरायणसूत्रमनुरुन्ध्येश्वरस्य जगत्सृष्टौ स्वतःप्रयोजनाभावेऽपि लीलार्थमपि प्रवृत्तिरुपपद्यत इति समाहितं वर्तते। तत्रभवद्भिर्वाचस्पतिमिश्रैः—

**निःश्वसितमस्य वेदा वीक्षितमेतस्य पञ्च भूतानि।**

**स्मितमेतस्य चराचरमस्य च सुप्तं महाप्रलयः॥**[4]

इति सृष्ट्यादीनामीश्वरेच्छामात्रेण, अर्थादल्पायासेनैव साध्यत्वमुपवर्णितम्।

श्रीपतिपण्डिताराध्याः श्रीकरभाष्ये चक्रवर्तिनो विहारदृष्टान्तेन विश्वरचनायाः परशिवस्य लीलावादमेव समर्थितवन्तः[5]।

---

१. सि० शि० १०।९, पृष्ठम् १८९।

२. सि० शि० १।६, पृष्ठम् ३।

३. ब्र० सू० २।१।३३।

४. ब्र० सू० भामती, मङ्गलश्लोकः २।

५. द्र०—ब्र० सू० श्रीकर० २।१।३३।

वस्तुतस्तु लौकिकलीलासु किञ्चिदपि प्रयोजनमुत्प्रेक्षितुं शक्यते, अथापि नेश्वरलीलायाम्, **'आप्तकामस्य का स्पृहा'** इति तस्य नित्यतृप्तत्वप्रतिपादनात् । न चैवं सत्यप्रवृत्तिः, **'यतो वा इमानि भूतानि जायन्ते'**[1] इत्यादिश्रुत्या विश्वरचनायामीश्वरप्रवृत्तिश्रवणात् । नाप्युन्मत्तप्रवृत्तिः, **'यः सर्वज्ञः स सर्ववित्'**[2] इत्यादिना तस्य सर्वज्ञत्वप्रतिपादनात् । अत एव विश्वरचना लीलामात्रमित्येव प्रस्फुटम् ।

सृष्टिरचनायामीश्वरप्रयोजनविषयकाक्षेपस्य परिहारो न नैयायिकैः नापि वैशेषिकैः कृतः । योगदर्शने तु भगवता भाष्यकारेण—**'तस्य आत्मानुग्रहाभावेऽपि भूतानुग्रहः प्रयोजनम्'**[3] इत्यनुग्रहवादमवलम्ब्य सृष्टिरचनाप्रयोजनः प्रतिपादितः । अत्र लीलावादस्य अनुग्रहवादस्य वेश्वरस्य स्वतः प्रयोजनाभावद्योतनमेव तात्पर्यम् ।

**वैषम्य-नैर्घृण्यदोषपरिहारसमीक्षा**

सृष्टेरीश्वरकर्तृत्वे जगद्वैचित्र्येणेश्वरस्य वैषम्यनैर्घृण्यदोषापत्तिः स्यादित्याक्षेपस्य परिहारं वीरशैवाचार्याः कर्मसापेक्षेण परिहरन्ति । तदुक्तं रेणुकभगवत्पादैः—

**चक्रनेमिक्रमेणैव भ्रमन्ति हि शरीरिणः ।**
**जात्यायुर्भोगवैषम्यकारणं कर्म केवलम् ॥**
**एतेषां देहिनां साक्षी प्रेरकः परमेश्वरः ।**
**एतेषां भ्रमतां नित्यं कर्मयन्त्रनियन्त्रणे ॥**[4] इति ।

**अत्रायं भावः** - 'पुण्यः पुण्येन कर्मणा भवति पापः पापेन'[5] इति श्रुतौ सृष्टिवैषम्यस्यासाधारणकारणानि सृज्यमानजीवकर्माणीति व्यवस्थापितम् । तस्माद् यथा विद्युतो वीजन-प्रेषणादियन्त्रगतायास्तत्तत्कर्मणि प्रेरकत्वेन सहायिकाया अपि वीजनादिकार्यवैचित्र्ये तत्तद्यन्त्राण्येवासाधारणकारणानि भवन्ति, तथा सृष्ट्युत्पत्तावीश्वरस्य साधारणकारणत्वेऽपि सृष्टिवैचित्र्ये तत्तत्प्राणिनामदृष्टान्येवासाधारणकारणानीति मन्तव्यम् ।

प्रायो वैषम्यदोषपरिहारार्थं न्याय-वैशेषिकदर्शनयोः[6], योगदर्शने[7], अद्वैतवेदान्ते[8] च सृज्यमानजीवानां कर्माण्येवासाधारणानि कारणानीत्यभ्युपगम्यते । एतेन वैषम्य-नैर्घृण्यदोषपरिहारविषये नैयायिकादिभिः साकं वीरशैवदर्शनस्य विचारसाम्यं दृष्टिपथमायाति ।

---

१. तैत्ति० ३।१ । २. मुण्ड० १।१।९ । ३. यो० सू० भा० १।२५ ।
४. सि० शि० ५।४९–५०, पृष्ठम् ७१; ५. बृ० उ० ४।४।५ ।
६. 'सृज्यप्राणिकृतदुष्कृत-सुकृतपरिपाकविशेषाद् वैषम्योपपत्तेः । न च स्वातन्त्र्यभङ्गः शङ्कनीयः, स्वाङ्गं स्वव्याघातकं न भवतीति न्यायेन प्रत्युत तन्निर्वाहात्' (सर्वदर्शनसंग्रहः, पृ० ५१०, अक्षपाददर्शनम्) ।
७. 'पुण्यापुण्यसहायः सुखदुःखे भावयन्नपि नाकारुणिकः' (यो० सू० तत्त्ववैशारदी १।२५) ।
८. 'अतः सृज्यमानप्राणिधर्माधर्मापेक्षा विषमा सृष्टिरिति नायमीश्वरस्यापराधः । ईश्वरस्तु पर्जन्यवद् द्रष्टव्यः' (ब्र०सू०शाङ्करभाष्यम् २।१।३४); 'न च कर्मापेक्षायामीश्वरस्य ऐश्वर्यव्याघातः । न हि सेवादिकर्मभेदापेक्षः फलप्रदः प्रभुरप्रभुर्भवति' इति (ब्र० सू० भामती–२।१।३४) ।

निरीश्वरसांख्या, मीमांसकाश्च जगदुत्पादकेश्वराङ्गीकारे स सशरीरः ? अशरीरो वा ? वैषम्यादिदोषभाग् वा ? अभाग् वा ? स्वप्रयोजनायेश्वरः प्रवर्तते ? उतानुकम्पया ? प्रयोजनसत्त्वे कृतार्थतालक्षणमैश्वर्यं तस्य भज्येत, अनुकम्पया प्रवृत्तौ च सुखमेवैकं सृजेन्न दुःखम्, किञ्च यदि सिसृक्षा अनुकम्पानिमित्ता, सञ्जिहीर्षा तर्हि किं निमित्ता स्यात् ? तस्याप्यनुकम्पानिमित्तत्वं नोक्तुं शक्यते, विरुद्धयोस्तयोरनुकम्पैकहेतुकत्वासम्भवादित्याद्यनेकाक्षेपसम्भवभयेनेश्वर एव नास्तीति मूले कुठारप्रहारं कुर्वन्ति । तदिदं न युक्तियुक्तं प्रतिभाति । किं लोके मृगाः सन्तीति शालयो नोप्यन्ते ? भिक्षुकाः सन्तीति वा किं स्थाल्यो नाधिश्रीयन्ते ? तथा प्रकृतेऽपि सम्भाविताक्षेपपरिहारेणेश्वराङ्गीकरणमेव वरमिति प्रतिभाति ।

**जीवस्वरूपविमर्शः**

वीरशैवदर्शनेऽपि शरीरेन्द्रियमनोबुद्धिभ्यो व्यतिरिक्त एव जीवात्मेति स्वीक्रियते । तर्हि स किं स्वरूप इति जिज्ञासायामुक्तं रेणुकभगवत्पादैः—

**एक एव शिवः साक्षाच्चिदानन्दमयो विभुः ।**
**निर्विकल्पो निराकारो निर्गुणो निष्प्रपञ्चकः ॥**
**अनाद्यविद्यासम्बन्धात् तदंशो जीवनामकः ॥**[1] इति ।

**अस्यायमर्थः**—अकुण्ठितेच्छाद्यनेककल्याणगुणगणपूर्णः परशिव एव स्वविमर्शशक्त्यंशभूतानाद्यविद्यासम्बन्धात् **'जीवः'** इत्यभिधानवान् भवति । तदेवमत्र दर्शने—

**वालाग्रशतभागस्य शतधा कल्पितस्य च ।**
**भागो जीवः स विज्ञेयः स चानन्त्याय कल्प्यते ॥**[2]

इति श्रुतिप्रामाण्येन परशिवस्यांश एव जीव इति स्वीक्रियते । अंशत्वं नामानाविष्कृताखिलशक्तिमत्त्वम् ।

अत एवायं जीवः सर्वकर्तृत्व-सर्वज्ञत्व-परिपूर्णत्व-नित्यत्व-व्यापकत्वरूपपरशिवशक्तिस्वरूपसंकोचककला-विद्या-राग-काल-नियतिरूपपञ्चकञ्चुकैरावृत्तः किञ्चित् कर्तृत्व-किञ्चिज्ज्ञत्वापूर्णत्वानित्यत्वाव्यापकत्वधर्मकः सन् स्वकर्मानुसारेण परिभ्रमति । तदुक्तं रेणुकभगवत्पादैः—

**किञ्चित्कर्ता च किञ्चिज्ज्ञो बद्धोऽनादिशरीरवान् ।**
**अविद्यामोहिता जीवा ब्रह्मेश्यज्ञानवर्जिताः ॥**
**परिभ्रमन्ति संसारे निजकर्मानुसारतः ।**
**देवतिर्यङ्मनुष्यादिनानायोनिविभेदतः**[3] **॥ इति ।**

तस्मादत्र दर्शने जीवस्यांशत्वापादकेऽज्ञाने नञो न ज्ञानविरोधिभावरूपाज्ञानमित्यर्थः, किन्तु **'ईषद् ज्ञानमज्ञानम्'** अर्थात् सङ्कुचितज्ञानमित्यर्थः । अत एव चात्र न प्रतिषेधार्थको नञ्,

---

१. सि० शि० ५।३३–३४, पृष्ठम् ६३; २. श्वे० उ० ५।९ ।
३. सि० शि० ५।४६-४८, पृष्ठम् ७०-७१ ।

अपि तु पर्युदासार्थकः। मुक्तौ तु ज्ञानादेः सङ्कोचकारणीभूतानामाणवादिमलत्रयाणां निवृत्तौ सत्यां तस्य ज्ञानादिशक्तीनां पुनर्विकासो भवति। तदुक्तम्—

**जीवत्वं दुःखसर्वस्वं तदिदं मलकल्पितम्।**
**निरस्यते गुरोर्बोधाज्ज्ञानशक्तिः प्रकाशते[1] ॥** इति।

श्रीमद्भिः शङ्करशास्त्रिमहाभागैरपि—'अस्मन्मते शिव-जीवयोर्भेदस्य मिथ्याज्ञानकृतत्वाभावात्, शिवशक्तिस्वातन्त्र्यपरिकल्पितसङ्कोचकृतत्वात् तयोरभेदस्य विकसितस्वशक्तिदशायामुपपन्नत्वात् कूर्माङ्गभङ्गि-अहिकुण्डल-स्वर्णकुण्डलन्यायादिभिः स्वरूपस्यैव स्वेच्छया सङ्कोचः, स्वरूपस्यैवाविर्भावः'[2] इति सङ्कुचितशक्तिकस्य शिवस्यैव जीवत्वमिति, पुनः शक्तिविकासे तस्यैव शिवत्वमिति च समर्थितम्।

किञ्च, अत्र सिद्धान्ते जीवः **'अङ्गम्'** इति नाम्नापि व्यवह्रियते। तदुक्तं श्रीमता मायिदेवेन—

**अनाद्यन्तमजं लिङ्गं तत्परं परमं प्रति।**
**यद्गच्छति महाभक्त्या तदङ्गमिति निश्चितम्[3] ॥** इति।

अङ्गपदस्य रूढिशक्त्या शरीरवाचित्वेऽपि 'यस्य चात्मा शरीरम्' 'यस्य चाव्यक्तं शरीरम्' इत्यन्तर्यामिब्राह्मणवचनेन पृथिव्यादिजीवात्मपर्यन्तस्य सकलस्य वस्तुजातस्य परशिवशरीरत्वबोधनाद् जीवस्याप्यङ्गपदवाच्यत्वे न काप्यनुपपत्तिः। तथा चोक्तम्—

**पत्रशाखादिरूपेण यथा तिष्ठति पादपः।**
**तथा भूम्यादिरूपेण शिव एको विराजते[4] ॥**

इति भगवत्पादै रेणुकाचार्यैः परशिव एव स्थावर-जङ्गमरूपेण वर्तत इति प्रतिपादितम्। तत्र 'परशिवस्य धृतिशक्त्या धरणिः, करुणया जलम्, उज्ज्वलतया तेजः, परमानन्दस्पन्देन वायुः, चिद्व्याप्त्या व्योम, चितिसङ्कोचचित्तविशिष्टो जीवः'[5] इति श्रीमरितोण्टदार्यैः शिवः स्वकीयभिन्नभिन्नशक्त्या भूम्यादिरूपेण परिणामं प्राप्य चितिसङ्कोचभूतचित्तविशिष्टत्वेन जीवोऽभूदिति व्यवस्थापितम्। तस्माद् यथा वृक्षशाखादिष्ववयवावयविभावः, तथा जगज्जीव-परमात्मनोरप्यवयवावयविभावः। अत एव—

**मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्।**
**तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्[6] ॥**

इति श्रुतिं प्रमाणयद्भिर्भगवत्पादैः श्रीपतिपण्डिताराध्यैरपि—'तस्मान्मायिनः परमशिवावयवलेशः पुरुषो जीवः' इति जीवस्य परशिवावयवत्वं प्रतिपादितम्। तस्माज्जीव-परमात्मनोरवयवावयविभावरूपोऽयमंशांशिभावः।

---

१. सि० शि० १८।१७, पृष्ठम् १३३।
२. ब्र० सू० शाङ्करीवृत्तिः, १।३।१९। ३. अनुभवसूत्रम्–४।२।
४. सि० शि० १०।९, पृष्ठम् १८९।
५. सि० शि० १०।९, तत्त्वप्रदीपिकाव्याख्या, पृष्ठम् १८९। ६. श्वे० उ० ४।१०।

ननु परशिवस्य निरवयवत्वात् कथं जीवपरमात्मनोरवयवावयविभावरूपोंऽशांशिभाव इति चेत्, न, तस्यास्मदादेरिव प्राकृतावयवाभावेऽपि—

**सर्वज्ञतातृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः ।**
**अनन्तशक्तिश्च विभोर्विधिज्ञा षडाहुरङ्गानि महेश्वरस्य[1] ॥**

इत्यादिप्रमाणेन विलक्षणनित्याङ्गसद्भावेन दोषाभावात् ।

यथा न्यायमते **'पञ्चावयवं वाक्यं न्यायः'** इति न्यायलक्षणस्य निरवयवे शब्दे गुणरूपे द्रव्यत्वव्याप्यस्यावयवत्वस्य द्रव्यत्वाभाववति शब्दे नितरामभावेन लक्षणस्यासम्भवित्वापत्तौ **'अधीनत्वलक्षणमवयवत्वम्'** आरोपितं वा स्वीकृत्य दोषनिरासः क्रियते, तथैव प्रकृतेऽपि परिदर्शितो निष्पक्षपातः पन्थाः परिद्रष्टव्यः । जीवस्य परशिवांशत्वे **'अंशो नाना व्यपदेशात्'**[2] **'ममैवांशो जीवलोके जीवभूतः सनातनः'**[3] इत्यादिसूत्रस्मृतिवचनानि प्रमाणानि ।

**जीवेश्वरयोर्भोगसाङ्कर्यनिरासः**

नन्वेवं जीवस्येश्वराङ्गत्वे स्वीकृते **'भक्षितेऽपि लशुने न शान्तो व्याधिः'** इत्याभाणकानुसारेण यथा हस्ताद्यवयवगतव्रणादिजन्यदुःखेन देवदत्तस्य दुःखित्वं दृश्यते, तथा परशिवाङ्गस्य जीवस्य सुखित्वे दुःखित्वे च तदङ्गिनः परशिवस्य सुखित्व-दुःखित्वप्रसङ्ग इति चेत्, मैवम्, दुःखमोहादीनामाणवादिमलकार्यत्वात् । तदुक्तं रेणुकभगवत्पादैः **'जीवत्वं दुःखसर्वस्वं तदिदं मलकल्पितम्'**[4] इति ।

अस्यायं भावः—परशिवस्येच्छाशक्तिसङ्कोच आणवमलः, ज्ञानशक्तिसङ्कोचो मायीयमलः, क्रियाशक्तिसङ्कोचश्च कार्ममल इति व्यवह्रियते । तत्राणवमलो जीवेऽणुतामापाद्य परमात्मनोऽस्य भेदबुद्धिं कल्पयति । कार्ममलो जीवस्य पुण्यपापकर्मसम्पादने हेतुर्भवति । मायीयमलश्च पत्नीपुत्रादिषु ममतामभिजनयति । एतन्मलत्रयावृतः परमात्मचैतन्यैकदेश एव जीवः । यथा हि शिवः सहजतया इच्छा-ज्ञान-क्रियाशक्तिविशिष्टः, तथा जीवस्तत्सङ्कोचभूतैराणव-मायीय-कार्ममलैः सहजतयाऽऽवृतो वर्तते । तदेवं सुखदुःखादीनां मलकार्यत्वात्, मलानां च जीवे विद्यमानत्वात् परमात्मनि तदत्यन्ताभावाच्च जीवस्यैव सुख-दुःखसाक्षात्कारः । तदुक्तं श्रीपतिपण्डिताराध्यैः—'अनादिस्वाभाविकमायापाशबद्धघोरापारनिस्सारसंसारव्यापारतापत्रयानलदन्दह्यमाननानाशरीर-प्रवेशनिर्गमनवर्णाश्रमाभिमानविशिष्टकामक्रोधाद्यनुस्यूतसुखदुःखाद्याश्रयत्वं जीवत्वम्[5]' इति ।

तस्मात् 'सुखी', 'दुःखी' इत्यादिव्यवहारदर्शनेन सुखदुःखादिमत्वं जीवात्मनस्तटस्थलक्षणं भवितुमर्हति । सुखदुःखादयो हि जीवस्य तत्तत्सामग्रीसमवधानदशायां तत्तच्छरीरादिसम्बन्धेन पर्यवस्यन्ति, सुखदुःखादिनिष्ठोपभोग्यतानिरूपितोपभोक्तृत्वस्य तत्तत्सामग्रीसमवधानदशायां शरीरादिसम्बन्धेन जीव एव सत्त्वात् । अतः सुखदुःखादिविषयेषु भोज्यत्वम्, जीवस्य भोक्तृत्वञ्च सर्वजनीनम् ।

---

१. वायुपु० १२।३१ । २. ब्र० सू० २।३।१५ । ३. श्रीमद्भगवद्गीता १५।७ ।
४. सि० शि० १८।१७, पृष्ठम् १३३ । ५. ब्र० सू० श्रीकर० १।१।१ ।

**'एतेषां देहिनां साक्षी प्रेरकः परमेश्वरः[१]'** इति श्रीरेणुकभगवत्पादैरपीश्वरस्य जीवानां प्रेरकत्वमुक्तम्, न तु तत्सुखदुःखभोक्तृत्वम् । ईश्वरस्याभोक्तृत्वञ्च—

**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।**
**तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति ।।[२]**

इति श्रुत्यापि प्रतिपादितम् । अपरञ्च, 'सुख्यहं दुःख्यहं चेति जीव एवाभिमन्यते[३]' इत्येवं श्रीराममुपदिशता महर्षिणाऽगस्त्येन सुखदुःखभागित्वं जीवस्यैवेति समुद्घोषितम् । श्रीविद्यारण्यस्वामिनोऽपि—

**ईशकार्यं जीवभोग्यं जगद् द्वाभ्यां समन्वितम् ।**
**पितृजन्या भर्तृभोग्या यथा योषित् तथेष्यताम् ।।[४]**

इतोश्वरस्य कर्तृत्वं जीवस्यैव च भोक्तृत्वं निरूपितवन्तः । तस्माज्जीवस्येश्वराङ्गत्वेऽपि जीवनिष्ठसुखदुःखैर्नेश्वरस्य भोगसम्भवः ।

**जीवस्याणुपरिमाणसमीक्षा**

ननु जीवस्य परमात्मनोंऽशत्वे तस्याणुपरिमाणत्वात् कथं शिरःपादाद्यवच्छिन्नसुखदुःखज्ञानसम्भव इति चेत्, न, यथा गृहैककोणस्थितेन प्रदीपेन गृहान्तर्वर्तिसर्ववस्तुप्रकाशो भवति, तथाऽणुनापि जीवेन स्वकीयज्ञानप्रभया सर्वशरीरव्याप्त्युपपत्त्या तत्तदवयवावच्छिन्नसुखदुःखानां ज्ञानं सम्भवत्येव । तदुक्तं रेणुकभगवत्पादैः—

**वालाग्रशतभागेन सदृशो हृदयस्थितः ।**
**अश्नन् कर्मफलं सर्वमात्मा स्फुरति दीपवत्[५]** ।। इति ।

किञ्च, भगवता बादरायणेनापि—**'अविरोधश्चन्दनवत्'[६]** **'गुणाद् वाऽऽलोकवत्'[७]** इति सूत्राभ्यां चन्दनालोकदृष्टान्ताभ्यामात्मनोऽणुत्वेऽपि स्वज्ञानप्रभया शरीरव्यापित्वं तस्य समर्थितम् ।

ननु कथं गुणो गुणिव्यतिरेकेणान्यत्र वर्तेत, न हि परस्य शुक्लो गुणः परव्यतिरेकेणान्यत्र वर्तमानो दृश्यत इति चेत्, मैवम्; शुक्लादिगुणानां स्वद्रव्यव्यतिरेकेणानुपलभ्यमानत्वेऽपि गन्धप्रकाशयोस्तत्सम्भवात् । नहि रसो गुणो जिह्वयोपलभ्यत इति रूपादयोऽपि गुणा जिह्वयैवोपलभ्येरन्निति नियन्तुं शक्यते । फलवलकल्प्यस्य स्वभाव एव शरणमिति लोकानुभवेन प्रदीपप्रभावः ज्ञानप्रभायाः शरीरव्याप्यत्वेन स्वीकारे न कोऽपि दोषः । अत एव 'आ लोमभ्य आ नखेभ्यः'[८]; 'प्रज्ञया शरीरं समारुह्य शरीरेण सुखदुःखे आप्नोति'[९] इत्यादिश्रुतयो जीवात्मनश्चैतन्यगुणेन समस्तशरीरव्यापित्वं दर्शयन्ति ।

---

१. सि० शि० ५।५० पृष्ठम्—७१ । २. श्वे० उ० ४।६ ।
३. शिवगीता २।३५ । ४. पञ्चदशी ४।१८ ।
५. सि० शि० १८।६, पृष्ठम्—१२९ । ६. ब्र० सू० २।३।२२ ।
७. ब्र० सू० २।३।२४ । ८. छा० उ० ८।८।१ । ९. कौषी० ६।६ ।

तत्र तावन्न्याय-वैशेषिक-सांख्य-योग-मीमांसादर्शनेष्वात्मनोऽणुत्वे चन्दन-कण्टकाद्यनुकूल-प्रतिकूलद्रव्यसंयोगेन शरीरीयसर्वदेशेषु जायमानायाः सुखदुःखयोः प्रतीतेरनुपपत्तिरित्याकाशवदात्मा विभुरस्तीति स्वीक्रियते। किन्तु विभुरूपाणां नानात्मनां स्वरूपविषये किञ्चिदपि भेदाभावात्, ते तत्त्वतो भिन्नाः केन प्रकारेण सिद्धाः स्युः ? इति न तैर्दार्शनिकैरधिकं चिन्तितम्।

किञ्च, सर्वात्मनां समानदेशत्वेन मनः, लिङ्गशरीरम्, स्थूलं वा शरीरं केनचिदेकेनैवात्मना सम्बन्धं करोति ? कया रीत्या च भिन्न-भिन्नशरीराणि पृथक् पृथगात्मनः कर्मसम्बन्धं सम्पादयन्ति ? केन च प्रकारेण पृथक् पृथगात्मनः फलान्युपभुञ्जन्ते ? इत्याद्यनेकप्रश्नानामुत्तरमेभिरिदं प्रदीयते—पृथक् पृथङ्मनसां लिङ्गशरीराणां वा पृथगात्मभिः समानरूपेण संयोगे सत्यपि स्वात्मना तस्य विलक्षणः सम्बन्धोऽस्ति। तत्प्रभावेणैव तद्द्वारा स्वकमेव नियतमात्मानं फलान्युपभोजयति। अन्य आत्मानोऽपि तेनैव प्रकारेण भिन्नभिन्नदेशीयस्वस्वलिङ्गशरीरद्वारा फलान्युपभुञ्जत इति। किन्तु शरीरप्रदेशादन्यत्र विद्यमानस्यात्मनः सुखदुःखादिसम्बन्धाभावाद् विद्यमानत्वेऽप्यविद्यमान इव वर्तमानस्यात्मनोऽन्यथासिद्धत्वादनेकात्मनां विभुत्वं नैव सङ्गच्छते।

अपि च, जीवात्मनो विभुत्वे तस्य सर्वदा सर्वत्र स्थित्या तदुत्क्रान्ति[1]-गति[2]-आगति[3] प्रतिपादकानां श्रुतीनामानर्थक्यप्रसङ्गः। न च लिङ्गशरीरादिगमनागमनेनात्मनि तदुपचार इति वक्तुं शक्यते। 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति'[4] इति श्रुत्या ह्यात्मनः प्रथमतो गमनं पश्चात् तत्प्राणोपलक्षितलिङ्गशरीरस्य गमनमुच्यते। अत एव—

**द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ।**
**परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः॥**[5]

इत्यात्मन एव सूर्यमण्डलभेतृत्वं स्मर्यते। तस्मात् **'एषोऽणुरात्मा'**[6] **'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा'**[7] इत्यादिश्रुतिसम्मतमणुत्वमेव जीवात्मनोऽङ्गीकर्तव्यम् **'स वा एष महानज आत्मा'**[8] इत्यादिविभुत्ववाचकश्रुतीनां परमात्मपरत्वं वेदितव्यम्। एवं जीवात्मनोऽणुत्व एव तस्य नित्यत्वं प्रतिशरीरं भिन्नत्वञ्च सम्भवति। तस्माद् भोगसाङ्कर्यनिवारणार्थम्, जगद्वैचित्र्यव्यवस्थार्थम्, उत्क्रान्तिगत्यागतीनाञ्च व्यवस्थार्थमात्मनोऽणुत्वप्रतिपादकं वीरशैवदर्शनमेव तत्त्वचिन्तकैर्बहुमन्यतेऽत्र न कोऽपि विवादः।

**जीवपरमात्मनोर्भेदाभेदः**

स्वाभाविकमलत्रयावरणेन प्राप्तो जीवभावो नाद्वैतवेदान्तवद् मिथ्याभूतः, किन्तु वास्तविकः। यथा विस्फुलिङ्गानामणुत्वं स्वाभाविकम्, यथा वा सरितां सरित्वं समुद्रादन्यत्वञ्च स्वाभाविकम्, तथा जीवस्याणुत्वं परशिवात् तस्य भिन्नत्वं च स्वाभाविकमेवेति संसारदशायां जीव-परमात्मनोर्वास्तविको भेदः।

---

१. द्र० बृ० उ० ४।४।२; २. द्र० कौषी० १।२।
३. द्र० बृ० उ० ४।४।६; ४. बृ० उ० ४।४।२; ५. पराशरस्मृतिः—२।३२।
६. मुण्डको० ३।१।९; ७. कठोप० २।६।१७; ८. बृ० उ० ४।४।२२।

नन्वेवं मलावृतत्वेन जीवस्य परमात्मनः पारमार्थिकभेदसिद्धौ कथं तस्य शिवभिन्नत्वमिति चेत्, न, यदा गुरुर्वेध-मन्त्र-क्रियारूपदीक्षात्रयेणाणवादिमलत्रयाणां निवारणपूर्वकं शिवाद्वैतज्ञान-मुपदिशति, तदाऽयं शुद्धो भूत्वा शिवस्वरूपो भवति। तदुक्तं रेणुकभगवत्पादैः—

**साक्षात्कृतं परं तत्त्वं यदा भवति बोधतः।**

**तदाऽद्वैतसमापत्तिर्ज्ञानहीनस्य न क्वचित्**[1] ॥ इति।

तदेवं वीरशैवदर्शने संसारदशायां जीव-परमात्मनोर्भेदो मुक्तावस्थायामभेदश्चाङ्गीक्रियते।

न्याय-वैशेषिक-सांख्य-योग-मीमांसादिदर्शनेषु मुक्तानां जीवानां न केनचित् परमतत्त्वेनाभेदः प्रतिपाद्यते। तस्मादत्र **'तत्त्वमसि'**,[2] **'ब्रह्मवेद ब्रह्मैव भवति'**[3] इत्यद्वैतश्रुतीनामनवकाशः। अद्वैतवेदान्ते च **'जीवो ब्रह्मैव नापरः'**[4] इति श्रीशङ्करभगवत्पादोक्त्याऽद्वैतस्यैव पारमार्थिकत्वात्, **'द्वा सुपर्णा सयुजा सखाया'**,[5] **'द्वे ब्रह्मणी वेदितव्ये'**[6] इत्यादिद्वैतश्रुतीनामवकाशाभावः। वीरशैवदर्शने जीव-परमात्मनोर्बद्धमुक्ताऽवस्थाभेदेन भेदाभेदयोः स्वीकारादत्रोभयविधश्रुतीनामपि समन्वयः। तदुक्तं भाष्यकारैः श्रीपतिपण्डिताराध्यैः—

**श्रुत्यैकदेशप्रामाण्यं द्वैताद्वैतमतादिषु।**
**द्वैताद्वैतमते शुद्धे विशेषाद्वैतसंज्ञिते।**
**वीरशैवकसिद्धान्ते सर्वश्रुतिसमन्वयः** ॥[7] इति।

**बन्धमोक्षस्वरूपविमर्शः**

तत्र तावद्वीरशैवदर्शने सङ्कोच-विकासवादेन बन्ध-मोक्षौ व्यवस्थाप्येते, अर्थाद् इच्छा-ज्ञान-क्रियारूप-शक्तिसङ्कोचभूतमलावृतत्वेन बन्धः, पुनस्तेषामेव शक्तीनां विकासे मुक्तिरित्यर्थः। तदुक्तं रेणुकभगवत्पादैः—

**जीवत्वं दुःखसर्वस्वं तदिदं मलकल्पितम्।**
**निरस्यते गुरोर्बोधाज्ज्ञानशक्तिः प्रकाशते** ॥[8] इति।

तस्मादत्राणवादिमलत्रयमेव बन्धनम्। श्रीशिवमहापुराणेऽपि—**'मलत्रयमयं पाशं भोग-भोग्यत्वलक्षणम्'**[9] इति मलत्रयस्य पाशशब्देन व्यपदेशः कृतः। एतन्मलत्रयरूपपाशबद्धोऽयं जीवः पशुरित्युच्यते। एतादृशपाशस्य च निवृत्तिरत्र दीक्षया विधीयते। तदुक्तम्—

**दीयते च शिवज्ञानं क्षीयते पाशबन्धनम्।**
**यस्मादतः समाख्याता दीक्षेतीयं विचक्षणैः** ॥[10] इति।

दीक्षाप्राप्तौ चायं जीवः **'शुद्धजीवः'** इति कथ्यते।

---

१. सि० शि० १०।५ पृष्ठम् १७९; २. छा० उ० ६।८।७; ३. मुण्डको० ३।२।९।
४. ब्रह्मज्ञानावलीमाला—२० श्लोकः। ५. श्वे० उ० ४।६।
६. त्रिपुरातापिन्युपनिषद्—५।१७। ७. ब्र० सू० श्रीकर०, पृष्ठम्—२।
८. सि० शि० १८।१७, पृष्ठम् १३३। ९. शिवपु० ७।२।१७।२७।
१०. सि० शि० ६।११, पृष्ठम्—८५।

**ज्ञानकर्मणोः समसमुच्चयः**

दीक्षासंस्कारेण परिशुद्धो हि जीवः परशिवेन साकमैक्यमापत्तौ न केवलं ज्ञानं न वा कर्म साधनं भवतीति वीरशैवदर्शन उभयोः समुच्चयः स्वीक्रियते । तदुक्तं रेणुकभगवत्पादैः—

**अन्धपङ्गुवदन्योन्यसापेक्षे ज्ञानकर्मणी ।**
**फलोत्पत्तौ विरक्तस्तु तस्मात्तद्द्वयमाचरेत् ॥**
**ज्ञाने सिद्धेऽपि विदुषां कर्मापि विनियुज्यते ।**
**फलाभिसन्धिरहितं तस्मात् कर्म न संत्यजेत् ॥[1]**

**ज्ञानहीनं सदा कर्म पुंसां संसारकारणम् ।**
**तदेव ज्ञानयोगेन संसारविनिवर्तकम् ॥[2]** इति ।

अत्रेदमैदम्पर्यम्—कर्म तावद् द्विविधम्—पतिकर्म पशुकर्म चेति । तत्राग्निष्टोमाद्यश्वमेधान्तानि यज्ञानि स्वर्गादिसाधनानीति नहि तैर्निःश्रेयसप्राप्तिरिति च पाशाश्रयत्वात्तेषां पशुकर्मता । इष्टलिङ्गधारण-लिङ्गार्चन-लिङ्गार्पितप्रसादग्रहण-लिङ्गानुसन्धान-गुरुजङ्गम-पूजन-भस्म-रुद्राक्षधारण-पञ्चाचारादिवीरशैवधर्माणां पाशमोचकत्वात्तेषां पतिकर्मता । भगवत्पादनीलकण्ठ-शिवाचार्याः **'अथातो ब्रह्मजिज्ञासा'[3]** इत्यस्य सूत्रस्य व्याख्यानावसरेऽथशब्दस्य धर्माऽऽनन्तर्यमित्युक्त्वा—

**धर्मानन्तर्यमेवातो वाच्यं धर्मो द्विधा मतः ।**
**पशुधर्मः प्राथमिकः पतिधर्मो द्वितीयकः ॥[4]**

इति धर्मस्य द्वैविध्यं प्रतिपाद्य, 'भस्मधारणमुख्यं हि कालाग्न्युपनिषन्मुखैः' इत्यारभ्य 'पतिधर्मा इमे ज्ञेयास्तदानन्तर्यमत्र च'[5] इत्यन्तं यावत् पूर्वोक्तानामिष्टलिङ्गपूजादीनां पतिकर्मत्वं निरूपितवन्तः । तस्माद् मीमांसकैरग्निहोत्रादिकं कर्मेत्युच्यते, वीरशैवैस्तु शिवार्चनमेव कर्मेति प्रतिपाद्यते । अत एव 'शिवार्चा कर्म विज्ञेयं बाह्यं यागादिनोच्यते'[6] इति कर्मलक्षणं प्रतिपादयन्तो रेणुकभगवत्पादाः—

**किमन्यैर्धर्मकलिलैः कीकषार्थप्रदायिभिः ।**
**साक्षान्मोक्षप्रदः शम्भोर्धर्मो लिङ्गार्चनात्मकः ॥**

**लिङ्गनिष्ठस्य किं तस्य कर्मणा स्वर्गहेतुना ।**
**नित्यानन्दशिवप्राप्तिर्यस्य शास्त्रेषु निश्चिता ॥[7]**

इत्यनित्यस्वर्गादिफलप्रदायकयज्ञाद्यपेक्षया नित्यशिवानन्दप्रदायकस्येष्टलिङ्गार्चनरूपस्य कर्मणः प्राशस्त्यमूचुः ।

---

१. सि० शि० १६।११–१२, पृष्ठम् ७४–७५ ।
२. सि० शि० १६।४, पृ० ८० ।
३. ब्र० सू० १।१।१ ।
४. क्रियासार० भाग० १, पृष्ठम् १६ ।
५. क्रियासार० भा० १, पृष्ठम् १७ ।
६. सि० शि० ९।२२, पृष्ठम् १४४ ।
७. सि० शि० १०।४, ८, पृष्ठम्—१७३, १७५ ।

किञ्च, न्याय-वैशेषिक-सांख्य-योग-पूर्वमीमांसादर्शनेषु शरीराद्यनात्मपदार्थेभ्य आत्मनः पार्थक्यज्ञानमेव तत्त्वज्ञानमिति प्रतिपादयन्ति । वीरशैवदर्शने तु—

**शिवात्मकमिदं सर्वं शिवादन्यन्न विद्यते ।**
**शिवोऽहमिति या बुद्धिस्तदेव ज्ञानमुत्तमम् ॥**[1]

इति रेणुकभगवत्पादोक्त्या स्वात्मना साकं सर्वस्यापि प्रपञ्चस्य शिवस्वरूपेण साक्षात्करणमेव श्रेष्ठज्ञानमिति तेनैव च मोक्षप्राप्तिरित्युररीक्रियते ।

तत्र तावदद्वैतवेदान्ते **'सर्वं खल्विदं ब्रह्म'**[2] इति श्रुतिवचनेन सर्वस्यापि प्रपञ्चस्य ब्रह्मरूपत्वमङ्गीकृत्य **'तत्त्वमसि'**[3] इत्यादिमहावाक्यैर्जीवस्यापि ब्रह्मरूपत्वप्रतिपादनाद् वीरशैवाभिमततत्त्वज्ञानेन साकमद्वैतवेदान्तस्य तत्त्वज्ञानं समतां धत्ते । अथाप्ययं विशेषः—सर्वस्यापि प्रपञ्चस्य ब्रह्मरूपत्वं प्रतिपादयद्भिर्वेदान्तिभिः प्रपञ्चस्य कल्पितत्वमङ्गीकृत्य बाधसामानाधिकरण्येन च प्रपञ्चस्य ब्रह्मरूपत्वं प्रतिपाद्यते, किन्तु वीरशैवदर्शने—

**पत्रशाखादिरूपेण यथा तिष्ठति पादपः ।**
**तथा भूम्यादिरूपेण शिव एको विराजते ॥**[4]

इति रेणुकभगवत्पादोक्त्या प्रपञ्चस्य बाधं विनैव तस्य परशिवरूपत्वमङ्गीक्रियत इति । तस्मादद्वैतवेदान्ते प्रपञ्चस्याध्यस्तत्वात् तत्त्वज्ञानेन तस्य मिथ्यात्वम्, वीरशैवदर्शने च प्रपञ्चः परशिवावयवरूप इति तत्त्वज्ञानेन न तस्य मिथ्यात्वम् । तस्मात् **'शिवो भूत्वा शिवं यजेत्'** इत्यादिवचनेषु शिवज्ञानसम्पन्नस्यापि शिवार्चनाया अविरोधात् सम्भवत्येवात्र ज्ञानकर्मणोः समसमुच्चयः ।

**ज्ञानकर्मणोः समुच्चयरहस्यम्**

तत्र ज्ञानकर्मणोः समसमुच्चयप्रतिपादकस्य वीरशैवदर्शनस्येदं रहस्यम्—वीरशैवदर्शने मलत्रयनिवारणाय दीक्षात्रैविध्यमुपदिष्टम् । तत्र क्रियादीक्षयाऽऽचार्यं इष्टलिङ्गं प्रदाय यावज्जीवं तदर्चनार्थमाज्ञापयति । आचार्यादेशानुसारेण यावज्जीवं कर्तव्यत्वेन सङ्कल्पितस्येष्टलिङ्गपूजारूपनित्यकर्मणोऽकरणेऽनुत्पन्नज्ञानस्य प्रत्यवायोत्पत्तिरित्युत्पन्नज्ञानस्य लोकसङ्ग्रहार्थमिति वाऽवश्यं कर्तव्यमित्यवसीयते । तदुक्तं रेणुकभगवत्पादैः—

**ज्ञानामृतेन तृप्तोऽपि योगी धर्मं न सन्त्यजेत् ।**
**आचारं महतां दृष्ट्वा प्रवर्तन्ते हि लौकिकाः ॥**[5] इति ।

तस्माद् ज्ञानोत्पत्तेः प्राग् नित्य-नैमित्तिककर्माकरणेन दुरितोत्पत्तिः, तदर्थमज्ञैर्नित्यादिकर्माण्यवश्यं कर्तव्यानि । उत्पन्नज्ञानस्य मिथ्याज्ञानरूपदोषाभावात् प्रवृत्तेरभाव इति तेन नित्यनैमित्तिकानामकरणेऽपि न प्रत्यवायोत्पत्तिः, अथापि यथा वृष्ट्यर्थं प्रारब्धस्य कारीरियागस्य

---

१. सि० शि० १६।८, पृष्ठम् ८१ ।
२. छा० उ० ३।१४।१ ।
३. छा० उ० ६।८।७ ।
४. सि० शि० १०।९, पृष्ठम् १८९ ।
५. सि० शि० १६।८, पृष्ठम् ९३ ।

परिसमाप्तेः प्राग् यदि मध्य एव वृष्टिर्भविष्यति चेत्, तदा सङ्कल्पितस्य यागस्य विधिवत् समाप्तिः क्रियते, तथा ज्ञानोत्पत्त्यर्थं यावज्जीवं कर्तव्यत्वेन सङ्कल्पितस्येष्टलिङ्गपूजादिरूपनित्यकर्मणो ज्ञानोत्पत्त्यनन्तरं केवलं लोकसङ्ग्रहार्थमनुष्ठातव्यमिति भावः ।

ननु तत्त्वज्ञानसम्पन्नोऽपि लोकसङ्ग्रहार्थं यदि कर्म करोति, तर्हि तत्फलभोगोऽपि तस्यावश्यक इति चेन्न, ज्ञानिनोऽहङ्कारशून्यत्वात् कर्मफलभोगोऽपि न भवत्येव । तदुक्तम्—

**ज्ञानिनो यानि कर्माणि तानि नो जन्महेतवः ।**
**अग्निदग्धानि बीजानि यथा नाङ्कुरकारणम् ॥**
**कर्मणा किं कृतेनापि ज्ञानिनो निरहङ्कृतेः ।**
**विक्रिया प्रतिबिम्बस्या किं करोति हिमद्युतेः ॥**[1] इति ।

**मुक्तिसोपानविमर्शः**

तदेवं ज्ञान-कर्मोभयनिष्ठः साधकोऽत्र दर्शने षट्सोपानक्रमेण मुक्तिं प्राप्नोतीति प्रतिपाद्यते । अत एव 'षट्स्थल'शब्देन व्यवह्रियन्ते । तेषां नामानि च भक्त-माहेश्वरप्रसादि-प्राणलिङ्गि-शरण-ऐक्य इति प्रसिद्धानि सन्ति । तथाप्युक्तम्—

**प्रसादिस्थलमन्यत्तु प्राणलिङ्गिस्थलं ततः ।**
**शरणस्थलमाख्यातं षष्ठमैक्यस्थलं मतम् ॥**[2] इति ।

(१) **भक्तः (भक्तस्थलम्)**

**शैवी भक्तिः समुत्पन्ना यस्यासौ भक्त उच्यते ।**[3]
**पञ्चधा कथ्यते सद्भिस्तदेव भजनं पुनः ।**
**तपः कर्म जपो ध्यानं ज्ञानं चेत्यनुपूर्वकम् ॥**
**अनेन पञ्चयज्ञेन यः पूजयति शङ्करम् ।**
**भक्त्या परमया युक्तः स वै भक्त इतीरितः ॥**[4]

इत्याद्याचार्योक्त्या यः साधकः शिवे श्रद्धाभक्तियुक्तः सन् भक्तस्थले प्रतिपादितान् शिवार्थे देहसंशोषणरूपं तपः, शिवार्चारूपं कर्म, पञ्चाक्षर-प्रणव-श्रीरुद्राध्यायानां पुनः पुनरावृत्तिरूपं जपः, शिवस्य चिन्तनरूपं ध्यानम्, शिवागमार्थविज्ञानरूपं ज्ञानं चेति शिवपञ्चयज्ञान् समाचरति सः 'भक्तः' इत्युच्यते । इयं भक्तस्थितिः साधकस्य प्रथमो मुक्तिसोपानः ।

(२) **माहेश्वरः (माहेश्वरस्थलम्)**

भक्तस्थलस्य भक्ताभिधस्य साधकस्य इष्टलिङ्गादिषु विद्यमाना श्रद्धा "सलिलमुक्तान्यायवत्" अर्थात् स्वात्यां सागरशुक्तिमध्यपतितं जलं घनीभूय यथा मुक्ताफलं भवति तथा दृढीभूय यदा यदा निष्ठारूपमादत्ते, तदा स भक्त एव 'माहेश्वरः' इत्यभिधीयते । साधकोऽयं भक्तेः समुत्कर्षेण, दृढवैराग्येण च महेश्वरेऽत्यन्तनिष्ठासम्पन्न इति माहेश्वर इत्याख्यायते । तदुक्तं श्रीरेणुकभगवत्पादैः—

---

१. सि० शि० १९।२–३, पृष्ठम् १६५ ।  २. सि० शि० ५।२४–२५, पृष्ठम् ६० ।
३. सि० शि० ५।२६, पृष्ठम् ६१ ।  ४. सि० शि० ९।२१–२५, पृष्ठम् १४४–४५ ।

भक्तेर्यदा समुत्कर्षो भवेद्वैराग्यगौरवात् ।
तदा माहेश्वरः प्रोक्तो भक्तः स्थिरविवेकवान् ॥[1] इति ।

तदेवं परशिवे निष्ठारूपेयं माहेश्वरस्थितिर्मुक्तेर्द्वितीयः सोपानः ।

**(३) प्रसादी** (प्रसादिस्थलम्)

**'मनसो निर्मलत्वचिह्नं प्रसादः, तादृशप्रसादोऽस्यास्तीति प्रसादी'** इति व्युत्पत्त्या पूर्वोक्तो माहेश्वरो निष्ठामहिम्ना प्रसादगुणयुक्तो भवति तदा प्रसादीति कथ्यते । तदुक्तमाचार्यचरणैः—

**लिङ्गनिष्ठादिभावेन ध्वस्तपापनिबन्धनः ।**
**मनःप्रसादयोगेन प्रसादीत्येष कथ्यते ॥**[2] इति ।

माहेश्वरस्थले साधक इष्टलिङ्गमात्रे शिवत्वबुद्धिमान् भवति । स एव यदा प्रसादिस्थलमायाति, तदा शिवप्रसादेन समस्तविश्वमेव शिवरूपेण पश्यन् अहङ्कारशून्यो भूत्वा जले पद्मपत्रमिव संसारे वर्तमानोऽपि निर्लिप्तो भवति । इयं प्रसादिस्थितिर्मुक्तेस्तृतीयः सोपानः ।

**(४) प्राणलिङ्गी** (प्राणलिङ्गिस्थलम्)

**लिङ्गं चिदात्मकं ब्रह्म तच्छक्तिः प्राणरूपिणी ।**
**तद्रूपलिङ्गविज्ञानी प्राणलिङ्गीति कथ्यते**[3] ॥

इति श्रीरेणुकभगवत्पादोक्त्या प्राणलिङ्गस्योपासकः प्राणलिङ्गीति कथ्यते । अत्रेदमवधेयम्—मूलाधारस्थितेनापानवायुना साकं गुरूपदिष्टमार्गेण प्राणवायोर्यदा संघट्टनं भवति तदैकं दिव्यज्योतिरुदितं भवति । मूलाधारादुत्पन्नमिदं ज्योतिः सुषुम्नामार्गेण प्रस्थाय कुण्डलिनीमूर्ध्वंमुखीं कुर्वद् हृदयस्थानाहतचक्रे, अर्थाद् द्वादशदलकमलकर्णिकायां स्थिरं भवति । ज्योतिरिदमङ्गुष्ठपरिमाणं विद्रुमवर्णं च भवतीति शिवयोगिनो वर्णयन्ति । भास्करोदये यथा तुहिनकणास्तत्प्रकाशे लयं यान्ति तथाऽस्मिन् ज्योतिषि प्राणवायोर्लयो भवतीति प्राणशक्तिविशिष्टमिदं ज्योतिः प्राणलिङ्गमिति वीरशैवाचार्यैः प्रतिपाद्यते । तथा ह्युक्तम्—

**प्राणापानसमाघातात् कन्दमध्याद् यदुत्थितम् ।**
**प्राणलिङ्गं तदाख्यातं प्राणापाननिरोधिभिः ॥**
**प्राणो यत्र लयं याति भास्करे तुहिनं यथा ।**
**तत्प्राणलिङ्गमुद्दिष्टं तद्धारी स्यात् तदाकृतिः**[4] ॥ इति ।

एतादृशप्राणलिङ्गस्य "भ्रमरकीटन्यायेन" साधकः सदा स्वान्तःस्थितं संविल्लिङ्गं भावनामयैः पदार्थैः पूजयन् स्वहृदयकमले प्रथमतश्चिद्रूपेण शिवानुभवं करोति । प्राणलिङ्ग्यवस्था हि ज्ञानेन साकं योगप्रधानापि वर्तते । इयमवस्था मुक्तेश्चतुर्थः सोपानः ।

---

१. सि० शि० १०।३, पृष्ठम्—१६७ । २. सि० शि० ११।२, पृष्ठम्—१९३ ।
३. सि० शि० १२।३, पृष्ठम्—३ । ४. सि० शि० १२।६-७, पृष्ठम्—२-३ ।

(५) शरणम् (शरणस्थलम्)

शिवमेवानन्यभावेन शरणङ्गतः साधकः **'शरणम्'** इत्युच्यते। **'सतीपतिन्यायेन'** साधकोऽयं स्वात्मानं सतीमिति परशिवं च पतिमिति विभावयन् **'तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्'**[1] इति श्रुतिप्रसिद्धमलौकिकमानन्दमनुभवति। तथा ह्युक्तम्—

**अङ्गलिङ्गी ज्ञानरूपः सती ज्ञेयः शिवः पतिः।**
**यत्सौख्यं तत्समावेशे तद्वान् शरणनामवान्॥**
**सतीव रमणे यस्तु शिवे शक्तिं विभावयन्।**
**तदन्यविमुखः सोऽयं ज्ञातः शरणनामवान्**[2] **॥** इति।

तदेवं मनोवाक्कायकर्मभिः शिवं शरणंगतोऽयं शरणनामकः साधकस्तदत्यन्तसुखं प्राप्यानन्यचिन्तया मोदते। साधकोऽयं शिवेन साकं सायुज्यं न प्राप्तवानितीयमवस्था भेदाऽभेदरूपा भवति। इयं शरणावस्था हि मुक्तेः पञ्चमः सोपानः। प्राणलिङ्गिस्थले साधकः चिद्रूपज्ञानवान् भवति, शरणस्थले च स एव शिवस्यानन्दस्वरूपमप्यनुभवति।

(६) ऐक्यः (ऐक्यस्थलम्)

**प्राणलिङ्गादियोगेन सुखातिशयमेयिवान्।**
**शरणाख्यः शिवेनैक्यभावनादैक्यवान् भवेत्**[3] **॥**

इति रेणुकभगवत्पादोक्त्या "एकस्य भाव ऐक्यम्" इति व्युत्पत्त्या च परशिवेन साकमेकतां प्राप्तो हि 'ऐक्यः' इत्युच्यते। शरणाख्ये साधके विद्यमाना 'शिवोऽहं भावना' हि यदा दृढीभवति, तदा शिवेनैकतां प्राप्तः शरण एवैक्यो भवति। एतादृशावस्थैव लिङ्गाङ्गसामरस्यावस्थेत्युच्यते। अस्यामवस्थायाम् "शिखि-कर्पूरन्यायेन", अर्थाद् अग्निसंयुक्तकर्पूरमिव साधकः शिवस्वरूपो भवति। अयं मुक्तेरन्तिमसोपानः।

**जले जलमिव न्यस्तं वह्नौ वह्निरिवार्पितम्।**
**परे ब्रह्मणि लीनात्मा विभागेन न दृश्यते**[4] **॥**

इति श्रीरेणुकभगवत्पादाः शिवैक्यस्य सामरस्यमुपवर्णितवन्तः। एवमैक्यभावमापन्नस्य प्राक्तनः पशु-पतिभावः, सती-पतिभावश्च विलीनो भवति। तदा च सर्वत्राद्वैतस्थितिरेव पर्यवस्यति। तदुक्तमाचार्यवर्यैः—

**पशुत्वं च पतित्वं च मायामोहविकल्पितम्।**
**तस्मिन् प्रलयमापन्ने कः पशुः को नु वा पतिः**[5] **॥** इति।

---

१. बृ० उ० ४।३।२१।
२. सि० शि० १३।२,५, पृष्ठम्—१९-२०। ३. सि० शि० १४।२, पृष्ठम्—३१।
४. सि० शि० २०।२, पृष्ठम्—२१०। ५. सि० शि० १४।९, पृष्ठम्—३४।

२२

तदेवं वीरशैवसिद्धान्ते बद्धावस्थायां परमात्मनः सर्वथा भिन्नः साधकः षट्स्थलसोपान-क्रमेण क्रमशो विकासं प्राप्यैक्यावस्थायां शिवस्वरूपमापद्यत इति स्वीक्रियते।

ननु जीवो बद्धावस्थायां परमार्थतः परशिवाद् भिन्नश्चेत् कथं मुक्तावनयोरभेदः स्यात्? इति चेच्छ्रूयतां रहस्यम्—

**कीटो भ्रमरयोगेन भ्रमरो भवति ध्रुवम्।**
**मानवः शिवयोगेन शिवो भवति सर्वदा[1]॥**

इत्यागमोक्तौ सत्यभेदस्यैव ह्यानं निरूप्यते।

**अत्राऽयं भावः**—यथा भृङ्गाद् भिन्नरूपोऽपि कीटो नैरन्तर्येण भृङ्गचिन्तनसामर्थ्येन कीटाकारं कीटस्वभावञ्च परित्यज्य भ्रमराकारं भ्रमरत्वं च प्राप्नोति। अपि च, यथा भ्रमर-भूतोऽयं कीटः पुनः कीटो न भवति, तथा अनादिकालादनादिमलावरणेन परशिवाद् भिन्नोऽयं जीवोऽनवरतम् "शिवोऽहम्" इत्याकारकशिवध्यानेन शिवरूपः सञ्जायते।

अपरञ्च, रससम्पर्कसामर्थ्येन ताम्रस्य ताम्रत्वं सहजमपि विनश्यति, सुवर्णत्वञ्च प्राप्यते। एवमेव जलं सत्यमपि स्वातिनक्षत्रसमये शुक्तौ पतितं सत्सम्बन्धसामर्थ्येन सहजमपि जलभावं परित्यज्यानर्घमुक्ताकारतां धत्ते, तथैवोपासनासामर्थ्येन परशिवाद् भिन्नोऽपि जीवः शिवस्वरूपो भवतीति बोध्यम्।

तस्मादत्र सिद्धान्ते नाद्वैतवेदान्तवद् बन्धस्य मिथ्यात्वं स्वीक्रियते; किन्तु सत्यत्वमेव। ननु सत्यबन्धस्य कथं ज्ञानेन निवृत्तिरिति जिज्ञासायां श्रीपतिपण्डिताराध्यभगवत्पादाः—'सत्यस्य पूर्वज्ञानेनोत्तरज्ञानस्य, स्मृत्या संस्कारस्य, शिवस्मरणेन पापस्य, प्रियस्मरणेन दुःखस्य, प्रत्यधि-करणं संशयस्य, पूर्वपक्षनिर्णयेन पूर्वपक्षस्य च सिद्धान्तेन निवृत्तिदर्शनात्'[2] इति बहुभिर्दृष्टान्तैः सत्यस्यापि ज्ञाननिवृत्तित्वं निरूपयामासुः।

एवं भेदस्य अभेदस्य च सत्यत्वमेवोभयविधश्रुतीनां सार्थक्यमुभयोः समन्वयश्च संभवति। तादृशभेदाभेदयोः समन्वयो वीरशैवसिद्धान्ते सम्भवादिदं दर्शनं भेदाभेदसिद्धान्तनाम्नापि समा-ख्यायते। तदेवं वीरशैवदर्शनस्य प्रधानग्रन्थस्य सिद्धान्तशिखामणेः कालमानस्य, तत्र प्रतिपादित-पति-पशु-पाशादिविषयकाणां विचारोऽत्र संक्षेपेण निरूपितः। मन्येऽनेन मम प्रयासेन जिज्ञासूनां सिद्धान्तशिखामणिविषयिका जिज्ञासाः समाहिता भवेयुरिति। पुनः प्राप्ते चावसरे सिद्धान्त-शिखामणेर्विशिष्टसिद्धान्तानां स्वरूपं प्रकटयिष्यामि। इति शिवम्।

● ● ●

---

१. द्र०—ब्र० सू० श्रीकर० १।२।६। २. ब्र० सू० श्रीकर० १।१।१।

लघुग्रन्थमाला

[ ३३ ]

म० म० सुधाकरद्विवेदिप्रणीतं

# दीर्घवृत्तलक्षणम्





सम्पादकः

विद्यावारिधिः श्रीकृष्णचन्द्रद्विवेदी

उपाचार्यो ज्योतिषविभागाध्यक्षश्च

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

# प्रास्ताविकम्

सर्वविद्याकरत्वं वेदानां समाम्नायते भारतीयपरम्परायाम्। ऋग्वेदादिसंहितासु नक्षत्रविद्याया भूयांसि स्थलानि विलोक्यन्ते। नक्षत्रं नाम ज्योतिः। तद्विज्ञानार्थं यदनुशासनं क्रियते तत् खलु ज्योतिषम्। ज्योतींष्यधिकृत्य कृतो ग्रन्थो ज्योतिषम्। उक्थादिषु न्यायनिरुक्तादिशास्त्रैः सह ज्योतिषशब्दोऽपि पठितः। शाकटायनव्याकरणे तु ज्योतिषशब्दादण्, औत्वाभावस्तु निपात्यते। नेत्रं ज्योतिष्मदिति कृत्वा शास्त्रमिदं वेदोपकारकत्वाद् वेदपुरुषस्य चक्षुःस्थानीयं मतम्। लगधप्रणीतः पद्यमयो लघुग्रन्थस्तावद् ऋग्वेदाङ्गज्योतिषनाम्ना प्रसिद्ध इदानीमपि समुपलभ्यते। किन्तु शास्त्रत्वेन त्रिधा पुष्पितं फलितं चेदं ज्योतिषं जगन्मार्गदर्शकपदं लेभे। इतो गतमिदं पाश्चात्ये जगति विविधेषु स्वरूपेषु पल्लवितमभूत्। तज्ज्ञानमपि समये समये तत्तज्ज्योतिषशाखासु समावेशितमिति यथार्थतो विज्ञानपदमलम्भि ज्योतिषशास्त्रेण। वराहमिहिरकालादारभ्येह तादृशज्ञानसमावेशसाक्ष्यमवलोक्यते। सवाईजयसिंहकाले तु स्पष्टतो यवनभाषयाऽऽरब्यभाषया च लिखितानां केषाञ्चन ज्योतिषग्रन्थानां समजनि संस्कृतानुवादः। तदानीं ज्योतिषशास्त्रनदीष्णाः संस्कृतपण्डिताः पाश्चात्यभाषानिपुणा अपि भवन्ति स्म।

आधुनिके युगे म० म० बापूदेवशास्त्रि-म०म०सुधाकरद्विवेदिप्रभृतयस्तादृशा विद्वांसोऽभूवन्, ये पाश्चात्यभाषाभिज्ञाः पाश्चात्यगणितज्ञग्रन्थान् सम्यक् पर्यालोच्य तदाधारेण संस्कृतभाषया स्वोपज्ञग्रन्थान् व्यरचयन्। म० म० श्रीबापूदेवशास्त्रिणा सरलत्रिकोणमितिरिति ग्रन्थो व्यरचि च्छात्रजनहितकाम्यया। तत्परवर्तिना समानकालिकेन गणकशिरोमणिना विद्वत्तल्लजेन विष्वक्प्रतिभाप्रकाशोन्मीलितसंविदा म० म० सुधाकरद्विवेदिना ज्योतिर्विज्ञानक्षेत्रे काऽप्यपूर्वा सुधारसधारा वर्षितेति व्याहारे नास्ति कश्चन संशीतिलेशः।

इह 'दीर्घवृत्तलक्षणम्' इत्याख्ये ग्रन्थे महामतिना तेन प्रायोऽनूनकं विषयं मूलतो वृत्तमुखेन (पञ्चषस्थलेषु गद्येन) समुपवर्ण्य परत उपपत्तयो निदर्शिताः। इत्थमर्वाचीनमपि ज्ञानमिह प्राचीनभारतीयदिशा समाश्रुतं श्रीमद्द्विवेदिमहाभागेन। अण्डवृत्तोपपत्तिमयस्य ग्रन्थस्यास्य विरचनप्रसङ्गे तन्मतेन बहूनामाङ्गलभाषामयग्रन्थानां साहायकमङ्गीकृतम्। तत्र Taylor, Lagrange, De Moivre इत्यादीनां कोविदानां नामानि प्राधान्यं भजन्ते। दीर्घवृत्तम् आङ्गलभाषाया एलिप्स (Ellips) इति शब्दस्यानुवादः। स तु ग्रीक्भाषाया एलिफिस्शब्दाद् गृहीतोऽभूत्। म०म०सुधाकरद्विवेदिकृतस्य ग्रन्थस्यास्य महिमा 'लोगारिद्म्स' (Logarithms) इत्यस्योपपत्तिदर्शनेन समाकलनीयः कोविदैः। इह ग्रन्थे षष्टितमे पृष्ठे स इत्थमुपवर्णितः—

रूपोननिष्पत्तिहृतं सेन्दुनिष्पत्तिसंज्ञकम्।
द्विघ्ननिष्पत्तिभक्तं तल्लघुरिक्थं हृतं तथा॥ इति।

म० म० बापूदेवशास्त्रिणा लोगारिद्म्स (Logarithms) शब्दस्यानुवादो यद्यपि सरलत्रिकोणमितिग्रन्थे 'प्रघातमापकम्' इति शब्देन समाख्यातः, तथापि तद्व्युत्पादनविधिर्न व्याहृतः। सर्वतः प्रथमं श्रीसुधाकरद्विवेदिमहोदयेनैव शब्दोऽसौ **'लघुरिक्थ'** इति संस्कृतानुवादेन निरूपितः। एवमेव ज्योतिर्विज्ञानक्षेत्रे संस्कृतेन बहून् पारिभाषिकान् शब्दाननूद्य नूनं परवर्तिनामन्धतमसाच्छन्नः पन्थाः समुद्भासितः। दीर्घवृत्तलक्षणमिदं तु विशेषतश्छात्राणां हितकाम्यया संदृब्धम्। यथोक्तं प्रणेत्रैव—'छात्रैरेतच्च संचिन्त्यं सर्वं बुद्ध्या विशेषतः' इति ( नवमे पृष्ठे )। सम्पूर्णानन्द-संस्कृतविश्वविद्यालयस्यान्यत्र च सिद्धान्तज्योतिषाचार्यपरीक्षायां ग्रन्थोऽयं पाठ्यतया निर्धारितोऽपि।

दीर्घवृत्तलक्षणमेतन्महामहोपाध्यायानां सम्मुख एव १८८१ तमे खीस्ताब्दे वाराणसेयचौकस्थितव्रजभूषणदास-एण्ड-कम्पनीतः प्रकाशितम्। द्वितीयसंस्करणमेतदीयं सरस्वतीभवनपुस्तकालयस्थेन विदुषा पण्डितबलदेवमिश्रेण टिप्पण्यादिभिर्विभूष्य सम्पादितं 'मास्टरखेलाड़ीलाल एण्ड सन्स' इत्याख्येन प्रकाशकेन च प्रकाशितं त्रिषष्टिवर्षानन्तरम् १९४३ तमे खीस्ताब्दे। किन्तु तस्यास्यात्यन्तमुपादेयस्य ग्रन्थस्य बहोः कालादप्राप्ततया विद्यार्थिभिस्तद्गुरुभिश्च महत् कष्टमनुभूयते स्मेति तदुपकारधिया विश्वविद्यालयस्यास्य ज्योतिषविभागाध्यक्षेण कर्मठेन महाध्यवसायिना श्रीमता डॉ० कृष्णचन्द्रद्विवेदिना मदीयमवधानं समाकृष्टम्। ततस्तेन महता श्रमेण पुस्तकं सम्पाद्य प्रकाशनार्थं समर्पितम्। तदिदं लघुग्रन्थमालायास्त्रयस्त्रिंशत्तमप्रसूनतया प्रस्फुटितं लघु प्रकाशमानीतमुपस्थाप्यते। पुस्तकस्यास्य प्रकाशनेन विद्वज्जनाः प्रीणिता जिज्ञासवश्च नूनमुपकृता भविष्यन्तीति ध्रुवं प्रत्येति

वाराणस्याम्<br>संकष्टचतुर्थ्याम् २०३७ वै०<br>(२३-१-८१ खी० भृगौ)

**भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'**<br>निदेशकः<br>अनुसन्धानसंस्थानस्य

# भूमिका

सिद्धान्तज्यौतिषमधिजिगांसूनां कृते शङ्कुच्छिन्नक्षेत्राणां परिचयोऽतितरामावश्यको भवति। तत्र को नाम शङ्कुः, कानि च शङ्कुच्छिन्नक्षेत्राणीति जिज्ञासायामस्माकं भारतीयानां सूचीक्षेत्रं स्मर्यते। सूचीक्षेत्रं नाम तत्र एकपार्श्वे सूच्याकारत उत्तरोत्तरवृद्धिक्रमेण वृत्तैर्निर्मितं क्षेत्रं सूचीक्षेत्रं नाम, तदेव यवनभाषायाम् [कोन–CONI] शङ्कुरिति व्यपदिश्यते। सा सूची वृत्ताधारा-दृग्वृत्ताधाराप्रभृतिका भवितुमर्हति। तत्र यदि वृत्ताधारा सूची आधारसमानान्तरेण धरातलेन च्छिद्यते, तर्हि च्छिन्नप्रदेशस्य वृत्तत्वं भवति, किन्तु सूच्याः परमाधिकपरमाल्पकर्णमूलगतरेखया यत् त्रिभुजं परमाल्पपरमाधिककर्णाधो वृत्तव्यासैस्त्रिभुजमुत्पद्यते, तत् स्थिरत्रिभुजमिति कथ्यते।

तत्र स्थिरत्रिभुजोपरि लम्बभूतेन धरातलेन सूची छिद्यते। तद्धरातलं चाधारवृत्तधरा-तलस्यासमानान्तरं भवेत्, तर्हि च्छिन्नप्रदेशस्य दीर्घवृत्तत्वम् [एलिप्स–ELLIPSE] भवति। यदि चैककर्णसमानान्तरेण धरातलेन सूचीक्षेत्रं छिद्यते, तर्हि छेदनप्रदेशस्य परवलयत्वम् [पैराबोला–PARABOLA] भवति। सूचीकर्णासमानान्तरधरातलेन सूच्या छेदने सूच्या उभयदिशि वर्धने छिन्नप्रदेशस्य अतिपरवलयत्वम् [हाईपरबोला–HIGHPARBOLA] रूपं भवति। इमानि [कानिसेक्शन–CONICXUN] क्षेत्राणि व्यपदिश्यन्ते।

तत्र च्छायाभ्रमणे चत्वार्यपि क्षेत्राणि उपयुज्यन्ते। वृत्तदीर्घवृत्तयोरुपयोगस्तु सिद्धान्त-ज्यौतिषे प्रायेण भवति। अत्र म० म० प० सुधाकरद्विवेदिना—"यो यस्मिन् खचरान् क्षेत्रे" इत्यादिश्लोकमुखेन वर्णितम्।

तत्र द्विवेदिमहोदयाः कथयन्ति यदीश्वरेण निर्मिते दीर्घवृत्त एव ग्रहाः परिभ्रमन्ति, किन्त्वस्माकमाचार्याः पुरातनयवनाचार्याश्च वृत्ते एव ग्रहाणां गतिमुररीकुर्वन्ति स्म। तेनापि ग्रहाणां गतिषु वैषम्यमकिञ्चित्करमेवोपलभ्यते स्म।

सूर्यकेन्द्रीयग्रहनिकाये केपलरेण दीर्घवृत्तेषु समानेन कालेन समानमेव क्षेत्रफलमाक्रामन् ग्रहो भ्रमतीति निर्धारितम्। तेन हि पुरातनैः समानकालेन समानकोणात्मिकां ग्रहगतिमुपेक्ष्यैव दीर्घवृत्तेषु समक्षेत्रफलाक्रमणनियम उदघोषि।

नियमोऽयं न्यूटनेन गतिविज्ञानेनोपपादितः। ततः प्रभृति दीर्घवृत्तेषु ग्रहाणां गतयो विज्ञानसम्मता समभूवन्।

दीर्घवृत्तस्य लक्षणानि सर्वप्रथमं परगानिवासि 'अपोलोनियस'महोदयेनाविष्कृतानि। अयं हि भौतिकविज्ञानोपज्ञातुः 'आर्कमिडीज'महोदयस्य [३८७-२९७] सहयोगी अभवत्, समकालिको वा।

दीर्घवृत्तं भारते कदा प्रभृति अध्ययनाध्यापनेषु लब्धप्रतिष्ठमभवदिति विमर्शनायां ब्रिटिश-राज्यसमकालमेवाधुनिकगणितप्रवेशो भारते समजनि।

सर्वप्रथमं भारतीयलेखकेषु डॉ० आशुतोषमुखोपाध्यायमहोदया आङ्ग्लभाषायां दीर्घवृत्त-लक्षणमलिखत्। तत्र बहूनां विषयाणां रेखागणितेन दीर्घवृत्तलक्षणान्तर्गता व्याख्या व्यधायि।

दीर्घवृत्तं ग्रहगणिते कियदुपयोगीति आधुनिकसिद्धान्तज्योतिषं पिपठिषूणां नातिरोहितम्। म० म० प० सुधाकरद्विवेदिमहोदयेनातीव सरलया सरण्या दीर्घवृत्तलक्षणानां परिचय उपास्थायि।

छात्राणां यावान् बोधोऽनेन ग्रन्थेन सुशको भवति, नापरैर्ग्रन्थैस्तादृशः सम्भवति; किन्तु दीर्घवृत्तलक्षणोपहिततत्त्वैर्ग्रहाणां मन्दफलसाधने यान्युपकरणान्यपेक्ष्यन्ते, तानि सर्वाणि माननीय-द्विवेदिमहोदयेन नोपस्थापितानि।

यथा रविकेन्द्रतो ग्रहाणां मन्दकर्णानयनस्य परमप्रयोजनीयता मन्दफलसाधने समुपतिष्ठते, तस्य साधनाभावः सुधाकरीयदीर्घवृत्तलक्षणे अध्येतॄणामसन्तोषावह एव ।

भास्कराचार्येण लीलावत्यामुड्डीनमानं साधितम्, तत्तु द्विवेदिमहोदयेन दीर्घवृत्तलक्षणान्तर्गतमेवोपपादि; किन्तु यस्मिन् दीर्घवृत्ते नाभिगतरेखाभ्यां परिधौ समकोणो नोत्पद्यते, तत्र साधनमिदमप्रयोज्यं भवति ।

प०बलदेवमिश्रेण सम्पादिते दीर्घवृत्तलक्षणे बहूनां डॉ० आशुतोषमुखोपाध्यायानां प्रश्नानां समावेशो विहितः, स तु छात्राणां बुद्धिवैशद्यार्थमुपयोगी ।

म० म० प० सुधाकरद्विवेदिमहोदयेन दीर्घवृत्तलक्षणसदृशशुष्कविषयस्य सरलया सुबोधया संस्कृतभाषया समुपस्थापनमतीव चामत्कारिकं विद्यते । छात्राणां विदुषां च सन्तोषार्थमिदानीं दुर्लभप्रायग्रन्थोऽयं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन लघुग्रन्थमालायोजनायां सर्वेषां गतपञ्चवर्षाद् अतृप्तानां ज्यौतिषपरीक्षासु प्रविष्टानां छात्राणामुपकारार्थं तथा लुप्तप्रायविद्यानां सञ्जीवनाय प्रकाश्यते ।

म० म० प० सुधाकरद्विवेदिनो दीर्घवृत्तविषयेऽथवा सर्वेषु नवीनगणितविषयेष्वाङ्गलभाषातो संस्कृते हिन्दीभाषायां पारिभाषिकशब्दावलीनां प्रथमनिर्मातारो विद्यन्ते । एलिप्स [ELLIPSE] इत्यस्य दीर्घवृत्तम् । पैराबोला [PARABOLA] इत्यस्य परवलयम्, हाईपरबोला [HIGHPERBOLA] इत्यस्यातिपरवलयम्, कोन [CONE] इत्यस्य शङ्कुः, डिफरेन्सियल करकुलस [DIFFRENTIAL CALCULUS] इत्यस्य चलनकलनम्, इन्टिग्रलकरकुलस [INTEGRAL CALCULUS] इत्यस्य चलराशिकलनम् इत्येवमादयः पारिभाषिकशब्दाः शोभन्ते ।

अद्याप्याधुनिकवैज्ञानिकविषयाणां हिन्दीभाषायामनुवादं कर्त्तुमनसां मनीषिणां प्रेरणास्रोतांसि विद्यन्ते । दीर्घवृत्तस्यानुवादस्तु द्विवेदिमहोदयैस्तथाकृतो यथा तदध्येतॄणां मनसि एतादृशी शङ्कापि नावकाशं लभेत, यदयं ग्रन्थ आङ्गलभाषातोऽनूदितो विद्यते ।

स्वनामधन्या महामहोपाध्यायपदभाजो द्विवेदिमहोदया वाराणसीपरिसरे खजुरीनामकं ग्रामं स्वजन्मनाऽलञ्चकार । स तदानीन्तनानां वाराणसेयानां चतुर्णां चतुराणां मध्ये गण्यते स्म । महाकविर्भारतेन्दुहरिश्चन्द्रः, राजा शिवप्रसादगुप्तसितारेहिन्दः, म० म० प० सुधाकरद्विवेदी इतीमे चत्वारः काशीनगरीचतुरा निगद्यन्ते स्म । चत्वारोऽपि स्वस्वविषयेऽद्वितीया एवासन् ।

महामहोपाध्यायद्विवेदिमहोदयेन तदानीन्तनज्यौतिषपाठ्यप्रणाली नवीनगणितमण्डिताऽकारि । इदानीमपि सैव परिपाटी प्रचलति ।

सन् १८४५ ईस्वीये वत्सरे जन्मवता द्विवेदमहोदयेन १९१० ईस्वीयवत्सरे श्रीविश्वनाथसायुज्यमवापि । स हि मैथिलपण्डितस्य शिष्यः । प्रथितयशसो श्रीबापूदेवशास्त्रिमहोदयस्यालोचकः काशिराजकीयसंस्कृतमहाविद्यालयस्य पुस्तकालयाध्यक्षपदमलङ्कृत्य ज्यौतिषप्रोफेसरपदमपि भूषयाञ्चकार । आशासे यद् विद्वांसः छात्राश्च परिश्रममिमं सफलयिष्यन्तीति ।

वाराणस्याम्
२०३७ वै० सं०
(१-१-१९८१ ख्रै०, गुरौ)

विदुषामाश्रवः
कृष्णचन्द्रद्विवेदी
उपाचार्यः—अध्यक्षश्च, ज्यौतिषविभागस्य

# विषयानुक्रमणिका

म० म० श्रीसुधाकरद्विवेदिप्रणीतम्
उपपत्तिसहितं

# दीर्घवृत्तलक्षणम्

❀ ❀ ❀

यो यस्मिन् खचरान् क्षेत्रे नियोज्यासृजदीश्वरः ।
ब्रह्माण्डं तं नमस्कृत्य तल्लक्षणगुणान् ब्रुवे ।। १ ।।

तत्र तावत् तत्क्षेत्रलक्षणं तत्संज्ञा च निरूप्यते

१. नियतस्थितचिह्नाद्या रेखा यत्परिधिं गता ।
नियतस्थितरेखायां यश्च लम्बो वृतिस्थितात् ॥
तद्बिन्दोस्तुल्यसम्बन्धस्त्वनयोर्यदि जायते ।
रूपाल्पो दीर्घवृत्तं तत्क्षेत्रं नव्यैरुदाहृतम् ॥
यथा




चित्रम् १

यदि नियतबिन्दुः (अ) स्यात् यस्मात्क्षेत्रवृतिगत (व) बिन्दुपर्यन्तं कृता अव रेखा तथा कग रेखायां (व) बिन्दोर्लम्बः = वल

एवं $\frac{\text{अव}}{\text{वल}} < १$, वा $\frac{\text{अन}}{\text{मन}} < १$,

अथच $\frac{\text{अव}}{\text{वल}} = \frac{\text{अन}}{\text{मन}}$ इत्यादि, तदेदं क्षेत्रं दीर्घवृत्तसंज्ञमिति ज्ञेयम् ।

नियतबिन्दुरेखयोर्मूलबिन्दोश्च संज्ञामाह

२. तत्क्षेत्रनाभिः कथिता नवीनैस्तत्क्षेत्रमध्यस्थित एव बिन्दुः ।
स निश्चितो या नियता च रेखा साऽक्षश्च तत्क्षेत्रगुणप्रसिद्ध्यै ॥

यथा




चित्रम् २

नाभिस्थानात्कृतो लम्बस्तदक्षोपरि यत्र सः ।
अक्षे निपतितो बिन्दुर्मूलसंज्ञस्स उच्यते ॥

अत्र "नि" नियतबिन्दुरस्य क्षेत्रस्य नाभिः कथ्यते, कग रेखा तु अक्षसंज्ञा तथा नि स्थानात्कृतस्य निअ लम्बस्य मूलं अ मूलबिन्दुश्चोच्यते नवीनैः ।

अथ क्षेत्रवृतिस्थबिन्दोर्भुजकोट्योः संस्थानम् ।

३. तदक्षलम्बयोर्लम्बौ कार्यौ क्षेत्रवृतिस्थितात् ।
कस्माच्चिदपि बिन्दोः स्तो भुजकोटी क्रमेण ते ॥




चित्रम् ३

यथा

व बिन्दोः कग क्षक्षस्योपरि यो वल लम्बः

तद्बिन्द्वोश्च निअ लम्बोपरि वम लम्बश्च यः

तौ व बिन्दोः क्रमेण भुजकोटी भवतः।

अथ भुजात्कोटयानयनम्

समानसम्बन्धद्योतकवर्णः = इ

अत्र भुजः = वल = मअ, तदा, निव = मअ·इ (द्र० प्रसू) अथ निअ तु सर्वदा स्थिर-संख्यास्ति तद्द्योतकः = प

∴ निम = मअ − अनि = भु − प

वम$^2$ = निव$^2$ − निम$^2$ = भु$^2$.इ$^2$ − (भु − प)$^2$

अतः सूत्रम्

४. समानसम्बन्धभुजाहतिस्तथा तन्मूलनाभ्यन्तरहीनितो यः।
भुजस्तयोर्वर्गवियोगमूलं स्यात्कोटिमानं किल दीर्घवृत्ते॥

अस्मिन् वम$^2$ = भु$^2$.इ$^2$ − (भु − प)$^2$ समीकरणे

यदि वम = ० तथा $\pm$ भु.इ = भु − प

$\therefore$ भु = $\frac{प}{१ + इ}$ वा, भु = $\frac{प}{१ - इ}$ अत्र भुजस्य मानद्वय

अतो लघुभुजः = अस, वृभु = असं अनयोरन्तरं ससं

अयमेव क्षेत्रस्य बृहद्व्यासः तत्स्वरूपं प्रकारान्तरेण

वृभु − लभु = $\frac{प}{१ - इ} - \frac{प}{१ + इ} = \frac{२ इ. प}{१ - इ^२}$ = वृव्या

अतः सूत्रावतारः

५. नाभिमूलान्तरं द्विघ्नं समनिष्पत्तिसंहतम् ।
रूपनिष्पत्तिकृत्योश्च विशेषेण हृत फलम् ॥
बृहद्व्यासाभिधो ज्ञेयो दीर्घवृत्ते विचक्षणैः ।
तस्मादन्यगुणानस्य प्रवदामि विलक्षणान् ॥

६. तल्लम्बक्षेत्रयोगे चेदक्षः कोटिर्मिति तदा ।
भुजाद्वचिम प्रकारेण लब्धवर्णस्फुटेन हि ॥




चित्रम् ४

यदि कग अक्षः कंसगं रेखा स्यात्तदा तु व बिन्दोः सम भुजः वम कोटिरस्ति । अथ तत्र भुजात्कोट्यानयनम् ।

$$अम = भु + सअ = भु + \frac{इ. प}{१ + इ}$$

$$\therefore\ निव = इ.\ भु + \frac{इ. प}{१ + इ},\ निम = भु - \frac{इ. प}{१ + इ}$$

$$वम^{२} = \left\{ इ.\ भु + \frac{इ. प}{१ + इ} \right\}^{२} - \left\{ भु - \frac{इ. प}{१ + इ} \right\}^{२}$$

$$= भु\ (इ + १) \left\{ इभु - भु + \frac{२ इ प}{१ + इ} \right\}\ वा,$$

$$भु \left\{ इ + १ \right\} \left\{ भु\ (इ - १) + \frac{२ इ. प\ (१ - इ)}{१ - इ^{२}} \right\}$$

अथ

$$\frac{२ इ प}{१ - इ^{२}} = वृव्या = २क\ तदा$$

$$वम^{२} = भु \left\{ इ + १ \right\} \left\{ भु\ (इ - १) + २क\ (१ - इ) \right\}$$

$$= भु \left\{ इ + १ \right\} \left\{ २क\ (१ - इ) - भु\ (१ - इ) \right\}$$

$$= भु \left\{ इ + १ \right\} \left\{ (१ - इ)\ (२क - भु) \right\}$$

$$= (१ - इ^{२})\ (२क.भु - भु^{२})$$

अतः

७. **बृहद्व्यासाद्भुजोनघ्नाद्रूपनिष्पत्तिवर्गयोः ।**
**अन्तरेण हतान्मूलं कोटिमानं प्रजायते ॥**

पूर्वसमीकरणे यदि भुजमानम् = $\frac{१}{२}$ वृव्या = क तदा $वम^{२} = (१ - इ^{२})\ क^{२}$,

$\therefore\ वम = क\sqrt{१ - इ^{२}},\ २\ वम = २\ क\sqrt{१ - इ^{२}}$ अत्र २ वम = लघुव्यासः

अतः सूत्रम्

८. **समानसम्बन्धशशाङ्कवर्गयोर्विश्लेषमूलं स्वबृहन्मितेन ।**
**व्यासेन निघ्नं भवतीह नूनं तदल्पविष्कम्भमितिः स्फुटैव ॥**

अथ

९. **लघुव्यासरेखैव चेद्दीर्घवृत्ते**
**भवेदक्षरेखा तदा दोःप्रमाणात् ।**
**यथा कोटिमानं तथा वच्मि विद्वन्**
**इदं चोपयुक्तं मदुक्तं विचिन्त्यम् ॥**

यथा यदि कग' रेखाऽक्षः स्यात् वल रेखा च भुजः स्यात् तदा $\text{वल}' = \text{पूर्वभुजः} = \text{वल} + \text{लल}' = \text{भु} + \frac{१}{२}\,\text{वृव्या} = \text{भु} + \text{क}$

ततः ( ७ सूत्रेण )

$$\text{वम}^2 = (१ - \text{इ}^2)(\text{भु} + \text{क})(\text{क} - \text{भु}) = (१ - \text{इ}^2)(\text{क}^2 - \text{भु}^2)$$

परन्तु ( ८ सूत्रेण )

$$\text{लव्या} = \text{वृव्या}\sqrt{१ - \text{इ}^2} \;\therefore\; \frac{\text{लव्या}}{\text{वृव्या}} = \sqrt{१ - \text{इ}^2}$$

$$\text{वा}, \frac{\text{लव्या}^2}{\text{वृव्या}^2} = १ - \text{इ}^2 \quad \text{अत्र}, \; \text{लव्या} = २\,\text{अ}$$

चित्रम् ५

तदा पूर्वसमीकरणरूपम्

$$\text{वम}^2 = (१ - \text{इ}^2)(\text{क}^2 - \text{भु}^2) = \frac{\text{लव्या}^2}{\text{वृव्या}}(\text{क}^2 - \text{भु}^2)$$

अतः

१०. बृहद्व्यासखण्डान्निजघ्नाद्विहीनात्
स्वदोर्वर्गमित्या पदेनाहतं तत् ।
लघुव्यासमाप्तं बृहद्व्यासमित्या
भवेत्कोटिमानं सदा दीर्घवृत्ते ॥

एतेनेदं चोपपन्नं भवति

११. बृहद्व्यासाद्धंजे वृत्ते भुजकोटिज्यका हि सा।
लघुव्यासे परिणता सैव कोटिमितिर्भवेत् ॥




चित्रम् ६

अत्र यदि क'ग' अक्षाद्वामपार्श्वे अर्थाद् भुजमितिर्ऋणं स्यात् तदा पूर्वयुक्त्यैवात्रापि ना'अ' = प

∴ द्वावेवाक्षौ नाभिभ्यां तुल्यान्तरितौ भवतः

तथा यदि लघुव्यासरेखायां न मूलबिन्दुर्यस्माद्भुजप्रवृत्तिस्तदा

भु + नअ = भु + नस + अस = भु + क + फ = वल अतः

इ. भु + इक + इफ = नाव एवं

अ'न − नम = नस' + अ'स' − भु = क + फ − भु = वल' अतः

इ. क + इफ − इ. भु = ना'व ∴ २ इक + २ इ. फ = नाव + ना'व अथ च

इ, क, फ; च एते स्थिराङ्का एव, अत्र $फ = \frac{प}{इ + १}$ ( द्र० (४) सू )

अतः

१२. नाभिगते ये रेखे परिधिस्थाद्बिन्दुतस्तयोर्योगः।
भवति सदा स्थिर एवमस्मिन्क्षेत्रे विचित्रं तत् ॥

अथ

( ६ क्षे ) फ $= \frac{\text{प}}{\text{इ} + 1}$ अतः फ. इत्यस्य स्थाने $\frac{\text{प}}{\text{इ}+1}$ अनेनोत्थापनेन

$२ \text{ इ क} + \frac{२.\text{ इ. प}}{\text{इ} + १} = \text{नाव} + \text{ना'व} =$

वा, $२ \text{ इ क} + \frac{२ \text{ इ प} ( १ - \text{इ} )}{१ - \text{इ}^2} = \text{नाव} + \text{ना'व} = २ \text{ इक} + \frac{२ \text{ इ प}}{१ - \text{इ}^2}$

$\frac{\text{इ} \times २ \text{ इ प}}{१ - \text{इ}^2}$ परन्तु $\frac{२ \text{ इ प}}{१ - \text{इ}^2} = \text{वृ०ग्रा} = २ \text{ क}$ [ द्र० ( ५ ) सू ]

$\therefore २ \text{ इक} + २ \text{ क} - २ \text{ इक} = २ \text{ क} = \text{नाव} + \text{ना'व}$

अतः

१३. [1]तद्दीर्घवृत्तस्य वृतिस्थबिन्दुतो
ये नाभिजाते फिल रेखिके स्तः ।
तयोर्बृहद्व्याससमा युतिर्भवेत्
सदा विदेदं विदितं मदुक्तम् ॥

यदि

( १० सू ) स्य समीकरणस्यास्य $\frac{२ \text{ अ}}{२ \text{ क}} \sqrt{\text{क}^2 - \text{भु}^2}$

इदं $\frac{२ \text{ अ}}{२ \text{ क}} \sqrt{( \text{क} + \text{भु} ) ( \text{क} - \text{भु} )}$ स्वरूपान्तरं स्यात्

तदा

$\text{क} + \text{भु} = \text{सम}, \text{ क} - \text{भु} = \text{मसं}$ [ द्र० (६) क्षे ]

अतः कोटिमानं

$\text{वम} = \frac{२ \text{ अ}}{२ \text{ क}} \sqrt{\text{सम} \times \text{मसं}}$ अनेन

कोटिज्ञानाय जातं प्रकारान्तरम्

---

१. सं । यद्वा पूर्वक्षेत्रावलोकनात्
$\text{नाव} = \text{इ}' \text{बल}, \text{ ना'व} = \text{इ}' \text{वल}'$
$\therefore \text{नाव} + \text{ना'व} = \text{इ}' \text{वल} + \text{इ}' \text{वल}' = \text{इ} \; ( '\text{वल} + \text{वल}' ) = \text{इ}' \text{ लल}' = \text{इ-अअ}'$
$= \text{सम}' = $ वृव्या इत्युपपन्नम् ।

१४. [1]ये च कोटेर्बृहद्व्यासखण्डे तयो-
र्घातमूलं लघुव्यासनिघ्नं भजेत् ।
तद्बृहद्व्यासमित्या समानं फलं
स्यात्पुरोक्तेन मानेन तेनामलम् ॥

अथ

$$(\text{८ सू})\ \text{लव्या} = \text{वृव्या}\sqrt{\text{१} - \text{इ}}$$

परन्तु

$$\text{वृव्या} = \frac{\text{२ इ·प}}{\text{१} - \text{इ}^{\text{२}}}\ [\ (\text{५})\ \text{सू}\ ]$$

$$\therefore\ \text{लव्या} = \frac{\text{२ इ प}\sqrt{\text{१} - \text{इ}^{\text{२}}}}{\text{१} - \text{इ}^{\text{२}}} = \frac{\text{२ इ·प}}{\sqrt{\text{१} - \text{इ}^{\text{२}}}}$$

अत:

१५. नाभिमूलान्तरं द्विघ्नं समनिष्पत्तिसंहतम् ।
रूपनिष्पत्तिकृत्योश्च विशेषपदसंहृतम् ॥
लघुव्यासो भवेदत्र दीर्घवृत्तेऽन्यरीतितः ।
छात्रैरेतच्च संचिन्त्यं सर्वं बुद्ध्या विशेषतः ॥

इदमुपपन्नं भवति

$$\text{वृव्या} = \frac{\text{२ इप}}{\text{१}-\text{इ}^{\text{२}}},\ \text{लव्या} = \frac{\text{२इप}}{\sqrt{\text{१}-\text{इ}^{\text{२}}}}\ \text{तथा}$$

---

१. सं । तृतीयक्षेत्रावलोकनादिदं स्फुटं यत्

$$\text{वम}^{\text{२}} = \text{निव}^{\text{२}} - \text{निम}^{\text{२}} = (\ \text{निव} + \text{निम}\ )\ (\ \text{निम} - \text{निम}\ )$$

$$\text{वा, वम}^{\text{२}} = (\ \text{इ-वल} + \text{निम}\ )\ (\ \text{इ-बल} - \text{निम}\ )$$

$$= (\ \text{इ-अम} + \text{निम}\ )\ (\ \text{इ-अम} - \text{निम}\ )$$

$$= \{\ \text{इ}\ (\ \text{अस} + \text{सम}\ ) + (\text{सम} - \text{सनि})\ \}\ \{\ \text{इ}\ (\text{अस}' - \text{स}'\text{म})\ (\ \text{स}'\text{नि}-\text{सं}'\text{म}\ )\ \}$$

$$= (\text{इ-अस} + \text{इ-सम} + \text{सम}-\text{इ}-\text{अस})\ (\text{इअस}'\text{-इ-सं}'\text{म-इ-सं}'\text{अ} + \text{सं}'\text{म})$$

$$= (\text{इ-सम} + \text{सम})\ (\text{सं}'\text{म-इ-सम})$$

$$= \text{सम}\ (\text{१} + \text{इ})\ (\text{१} - \text{इ})\ (\text{सं}'\text{म}) = (\text{१} - \text{इ}^{\text{२}})\ \text{सम सं}'\text{म}$$

$$\therefore \frac{\text{वम}^{\text{२}}}{\text{सम-स}'\text{म}} = \text{१} - \text{इ}^{\text{२}}$$ एवं यत्र कुत्रापि व विन्दुर्भवतु सर्वत्र इयमेव स्थितिः स्यात्

अथ यदि व विन्दुः लघुव्यासाग्रे भवेत्तदा

$$\text{वम}^{\text{२}} = \text{अ}^{\text{२}},\ \text{सम·सम}' = \text{क}^{\text{२}}$$

$$\therefore \frac{\text{अ}^{\text{२}}}{\text{क}^{\text{२}}} = \frac{\text{वम}^{\text{२}}}{\text{सम-सम}'} = \text{१} - \text{इ}^{\text{२}}\quad \therefore \text{वम} = \frac{\text{अ}\sqrt{\text{सम-सम}'}}{\text{क}} = \frac{\text{२अ}\sqrt{\text{सम·सम}'}}{\text{२क}}$$

इत्युपपन्नम् ।

$असः = \frac{प}{१+इ}$, $सनि = \frac{इप}{१+इ}$ { द्र० (३) क्षे }

यदि एषु समीकरणेषु इ = १ तदा

$वृत्या = \frac{२ प}{०} = \infty$ $लव्या = \frac{२ प}{०} = \infty$

$अस = \frac{प}{२}$, $सनि = \frac{प}{२}$ अतः

१६. **निष्पत्तिसंज्ञं यदि रूपतुल्यं**
**व्यासप्रमाणे नियते तदा न।**

अथ यदि इ = ० तदा

वृव्या = ०, लव्या = ०

अस = प, सनि = ०

अतः

१७. **यदा च शून्येन समं तदा तु**
**व्यासौ क्वचिच्छून्यमितौ विदोह्यौ ॥**

[ द्र० (६) क्षे ]

$अस = \frac{प}{१+इ}$, $नास = \frac{इप}{१+इ}$

वा, $अस = \frac{इ प (१ - इ)}{इ (१ + इ) (१ - इ)} = \frac{इ प (१ - इ)}{इ (१ - इ^२)}$

परन्तु

$\frac{इप}{१-इ^२} = \frac{१}{२}$ वृव्या = क $\therefore अस = \frac{क (१ - इ)}{इ}$

$\therefore$ नास = क (१ - इ), नान = इक = नंान अत्र न विन्दुः = दीर्घवृत्तस्य केन्द्रम्, अतः

१८. **बृहद्व्यासदलं निघ्नं समनिष्पत्तिसंज्ञया।**
**नाभिकेन्द्रान्तरं तत् स्याद्दीर्घवृत्ते विचक्षणाः ॥**

यदि ना'', न, स्थाने प्रगच्छेत् तदा

नंान = ० = नान, न स = क $\therefore$ $अ स = \frac{क}{इ}$

वा नस + असं = अन = प = $\frac{क (इ + १)}{इ}$

$वृव्या = \frac{२ इप}{१ - इ^२} = \frac{२ इप}{(१ - इ) (१ + इ)} = \frac{२क (इ + १)}{(१ - इ) (१ + इ)}$

$= \frac{(२ क)}{(१ - इ)} = २ क$ $\because$ इक = ० $\therefore$ इ = ०

अथ

$\text{लव्या} = \text{२क}\sqrt{\text{१} - \text{इ}^{\text{२}}}$ [ द० (८) सू]

$\text{इ} = \text{०}$ अतः $\text{लव्या} = \text{२ क}$

तेन

१९. स्वदीर्घवृत्ते यदि केन्द्रनाभ्यन्तरं भवेच्छून्यमितं तदा तत् ।
वृत्तं भवेत्तत्र बुधैर्विधेये व्यासप्रमाणे विदिते समाने ॥

इदं सिद्धयति

अत्र $\text{वम}^{\text{२}} = \frac{(\text{२ अ})^{\text{२}}}{(\text{२ क})^{\text{२}}} (\text{क}^{\text{२}} - \text{भु}^{\text{२}})$ [ (द्र० १०) सू ]

अतो बीजगणितेन $\text{वम} = \pm \frac{\text{२ अ}}{\text{२ क}} \sqrt{\text{क}^{\text{२}} - \text{भु}^{\text{२}}}$

यदि भुजमानमृणं स्यात् तदा भु = नमं = नम

एवं कोटिमानमप्यृणं तदा को = वंमं = वम

ततो रेखागणितेन

नव=नवं तथा ह्येते द्वे रेखे चैकैव सरलायां रेखायां भविष्यतः । एवमेवात्र क्षेत्रे यावत्यः पूर्णज्या न बिन्दुगतास्तास्सर्वा न बिन्दौ द्विभक्ता भविष्यन्ति तस्मान्न बिन्दावेव दीर्घवृत्तस्य केन्द्रत्वं युक्तम् ।




चित्रम् ७

अथ

नान = इ·क [द्र० (१८) सू०] अतः

नाका$^2$ = ना'का$^2$ = नान$^2$ + कान = इ$^2$·क$^2$ + कान$^2$

परन्तु कान$^2$ = क$^2$ (१ − इ$^2$)······(८) सूत्रेण

∴ नाका$^2$ = नां'का$^2$ = इ$^2$·क$^2$ + क$^2$ − इ$^2$·क$^2$ = क$^2$

ततः

नाका = नाका = क

एतेन

२०. लघुव्यासाग्रगे रेखे नाभिभ्यां भवतः समे ।
बृहद्व्यासार्धतुल्ये च वेदितव्यमिदं विदा ॥

इदं सिद्धयति इतः प्रभृतिः लघुव्यासरेखैवाक्षो ज्ञेयः

अथ

२१. दीर्घवृत्तबहिःस्थान्तःस्था वाऽभीष्टा च रेखिका ।
या तत्स्थाद्बिन्दुतः कस्माल्लम्बौ यौ व्यासयोरिह ॥
भवतो भुजकोटी तौ तस्य बिन्दोस्तथा ध्रुवे ।
रेखास्थितस्य दोर्मानात्कोटिमानमिह स्फुटम् ॥




चित्रम् ८

अत्र कोस्प < ल क व = म

तदा




चित्रम् ९

कल = $\frac{\text{वल म}}{\text{त्रिज्या}}$ (द्रष्टव्या ज्योत्पत्तिः)

अथैकबिन्दोर्भुजकोटिभ्यां परबिन्दोर्भुजज्ञाने तत्कोटिज्ञानायोपायः

मन = प्रभु, वम = प्रको

मंन = द्विभु, वंमं = द्विको

ततः

ममं = वल = मन − मंन = प्रभु − द्विभु

$\therefore$ वंल = $\frac{\text{कोस्प} < \text{लवंव (प्रभु द्विभु)}}{\text{त्रिज्या}}$

परन्तु < लवंव = < लंकवं

$\therefore$ वंल = $\frac{\text{म (प्रभु − द्विभु)}}{\text{त्रिज्या}}$, वंमं = प्रको + $\frac{\text{म (प्रभु − द्विभु)}}{\text{त्रिज्या}}$

एवं कोटिज्ञानं कार्यम् ।

अथ दीर्घवृत्तस्य परिधिस्थबिन्दुतः स्पर्शरेखाकरणं प्रदर्श्यते, कल्प्येते दीर्घवृत्तस्य नाभिप्रमाणे ना, ना॑ संज्ञे, तथा व बिन्दुर्यस्मात्स्पर्शरेखाकरणमभीष्टम् । ना॑व रेखा वर्द्धनेन यो




चित्रम् १०

बहिरुत्पन्नकोणस्तस्य वक रेखया समानं भागद्वयं कर्त्तव्यं तदा वक रेखा व बिन्दौ स्पर्शरेखा भविष्यति ना बिन्दोर्वकरेखोपरि नाल लम्बः कर्त्तव्यः नाल, ना॑व रेखयोर्योगबिन्दुः ग तदा ∠ नावल = ∠ गवल अतः नात्र = गव अपिच ना॑ग = नाव + ना॑व = वृव्या (द्र० १३ सू०)

अथ चेद् वक रेखाया दीर्घवृत्तस्य च च बिन्दावपि योगस्तदा, पूर्वयुक्त्या नाच ∠ चग अतः ना॑च + चग = वृव्या,

परन्तु ना॑च + चग > गना॑ वा > वृव्या, तस्मादिदं न सम्भवति, अतः कव रेखाया व बिन्दोरन्यत्र न कुत्रापि योगस्तदा स्पर्शरेखा, कव रेखा सिद्धा ।

अतः सूत्रम्

**२२. बिन्दौ नाभिगताभ्यां रेखाभ्यां यो बहिर्गतः कोणः ।**
**तस्य समद्विविभागं करोति या स्पर्शरेखा सा ॥**

यदि दीर्घवृत्तस्य बहिः कुत्रापि विन्दुः स्याद्यस्मात्स्पर्शरेखा करणीया, तदा कल्प्यते पूर्वयुक्त्या वल स्पर्शरेखा व बिन्दुगताऽस्ति, अत्रापि नाल लम्बः कार्यः तथा नाल = गल तदा (२२ सूत्रेण) ना॑ग = वृव्या, गव = नाव




चित्रम् ११

अतः

२३. निर्दिष्टबिन्दुकेन्द्राद्यद्वृत्तं स्यादेकनाभिगम् ।
यच्चान्यनाभिकेन्द्रात्स्याद्बृहद्व्यासत्रिजीवया ॥
तयोर्योगो भवेद्यत्र तस्माद्रेखाऽन्यनाभिगा ।
परिधौ यत्र संलग्ना तन्निर्दिष्टाख्यचिह्नयोः ॥
मध्ये रेखा भवेद्या सा स्पर्शरेखा भवेद् ध्रुवम् ।
निर्दिष्टबिन्दुतो दीर्घवृत्ते सुगमरीतितः ॥

अत्र वृत्तयोर्योगः स्थानद्वये भवति तेन कस्माच्चिदपि बिन्दुतो दीर्घवृत्ते स्पर्शरेखाद्वयं भवितुमर्हतीति सिद्धम् ।

यदि कव स्पर्शरेखोपरि नाभिभ्यां नाल, ना′ल′ लम्बौ कार्यौ ग′ल = ना′ल′, नाल = गल,

तदा ∠नागना′ = ∠म, तस्मात् ना′ग$^2$ − ना′ना$^2$ = ग′ग$^2$ − ग′ना$^2$

परन्तु ना′ग = २ना′ज (द्र० २०) तथा नाना′ = २ना′च,

∴ ४ना′ज$^2$ − ४ना′च$^2$ = ग′ग$^2$ − ग′ना$^2$, अथ ४ना′ज$^2$ − ४ना′च = ४चज$^2$

∴ ४चज$^2$ = ४($\frac{1}{2}$ लव्या)$^2$ = ग′ग$^2$ − ग′ना$^2$ =

(ग′ग + ग′ना′) (ग′ग − ग′ना) परन्तु




चित्रम् १२

गंग + गंना = गंल + गल + गंना = गंल + गंल = २नांलं

एवं गंग − गंना = २नाल, तेन ४ ($\frac{१}{२}$लव्या)$^{२}$ = ४नाल × नांलं

अतः ($\frac{१}{२}$ लव्या)$^{२}$ = नाल × नांलं

तस्मात् सूत्रम्

२४. नाभिभ्यां यौ स्पर्शरेखोपरि स्तो
लम्बौ घातो यस्तयोस्सर्वदैव ।
अल्पव्यासार्धस्य वर्गेण तुल्यो
विद्वान्बुध्वेत्यन्यसूत्रं विधेयम् ॥

यथा श्रीभास्कराचार्योक्तोदाहरणम्

वृक्षाद् हस्तशतोच्छ्रयाच्छतयुगे वापीं कपिः कोऽप्यगा-
दुत्तीर्याथ परो द्रुतं श्रुतिपथेनोड्डीय किञ्चिद् द्रुमात् ।
यातैवं समता तयोर्यदिगतावुड्डीनमानं कियद्
विद्वन् चेत्सुपरिश्रमोऽस्ति गणिते क्षिप्रं तदाचक्ष्व मे ॥

अत्र, अक = ताउ, कग = सअं, अघ = रड्डी

अथ, अघ + गघ = अक + गक

अतो यदि अ, ग कस्यापि दीर्घवृत्तस्य नाभिमाने भवेताम् तर्हि क, घ बिन्दू दीर्घवृत्तेऽवश्यमेवाभविष्यताम् ।

$$\text{तदा, अक} + \text{कग} = \text{ताउ} + \text{सअं} = \text{वृव्या}$$

$$\text{वा, ताउ} + \text{सअं} = \text{२ ग ट अतः}$$

$$\frac{\text{ताउ}^{2} + \text{सअं}^{2} + \text{२ ताउ सअं}}{\text{४}} = \text{गट}^{2}$$

$$\text{एवं, अक}^{2} + \text{कग}^{2} = \text{ताउ}^{2} + \text{सअं}^{2} = \text{अग}^{2}, \therefore \frac{\text{ताउ}^{2} + \text{सअं}^{2}}{\text{४}}$$

$= \text{गज}^{2}$, ततो $\text{जट}^{2} = \text{गट}^{2} - \text{गज}^{2}$

$$\text{वा जट}^{2} = \frac{\text{ताउ. सअं}}{\text{२}} = \left(\tfrac{1}{2}\ \text{लव्या}\right)^{2}$$

अथ, घक रेखा, च पर्यन्तं वर्द्धनीया, यथा, घच = घग एवं गच रेखाया ल चिह्ने समानं भागद्वयं कृत्वा तत्र ललं लम्बः कार्यः तदेयं रेखा स्पर्शरेखा भविष्यति घ चिह्ने, अस्या उपरि अ चिह्नाच्च अलं लम्बो विधेयः

चित्रम् १३

$$\text{तदा अलं} \times \text{गल} = \left(\tfrac{1}{2}\ \text{लव्या}\right)^{2} = \frac{\text{ताउ. सअं}}{\text{२}} \therefore \text{अलं} = \frac{\text{ताउ सअं}}{\text{२गल}}$$

अथ $\angle$ग घ ल = $\angle$च घ ल = $\angle$अ घ ल', अतः ग घ ल त्रिभुजं अ घ ल' त्रिभुजं च, एते द्वे सजातीये ।

३

तथा क ग च जात्यं ल घ च जात्यं च मिथः सजातीयम्,

तदा $\text{घ च} = \frac{\text{ल च} \times \text{ग च}}{\text{क च}}$, परन्तु ग च=२ ल च, तथा

$\text{क च} = \text{अ च} + \text{अ क} = \text{ताउ} + \text{सअं} + \text{ताउ} = \text{२ ताउ} + \text{सअं}$

$\therefore \; \text{घ च} = \frac{\text{ल च}^2 \times 2}{\text{२ ताउ} + \text{सअं}} = \text{ग घ}$, त्रैराशिकेन

$\text{अ घ} = \frac{\text{अ ल}' \times \text{ग घ}}{\text{ग व}} = \frac{\text{अ ल}' \times \text{ल च}^2 \times 2}{\text{ल च} \, (\text{२ ताउ} + \text{सअं})}$, परन्तु

$\text{अ ल}' = \frac{\text{ताउ} \times \text{सअं}}{\text{२ ल च}}$ अतः $\text{अ घ} = \frac{\text{ता} \times \text{सअं}'}{\text{२ ताउ} + \text{सअं}}$

एतेन

**द्विनिघ्नतालोच्छ्रितिसंयुतं यत् सरोऽन्तरं तेन विभाजितायाः ।**
**तालोच्छ्रितेस्तालसरोऽन्तरघ्न्या उड्डीनमानं खलु लभ्यते तत् ।**

इति श्रीभास्करोक्तमुपपन्नं भवति ।

कल्प्यते व, बिन्दुः वल स्पर्शरेखा ना, ना नाभिसंज्ञे, के, दीर्घवृत्तस्य केन्द्रम्, तदा पूर्वयुक्त्या नाल = गल, नाग=वृव्या, तथा केना = केना अतो रेखागणितेन केल = $\frac{1}{2}$ वृव्या

तथा नाव रेखा केल रेखायास्समानान्तरा भविष्यति

चित्रम् १४

अनेन

२५. नाभिभ्यां यौ स्पर्शरेखोपरि स्तो लम्बौ कार्ये दीर्घवृत्तस्य केन्द्रम् ।
तन्मूलाभ्यां रेखिके ते च तुल्येऽनल्पव्यासार्धेन तुल्ये भवेताम् ॥

इत्युपपन्नं भवति ।

अत्र केग = $\frac{1}{2}$ लव्या, वर = व बिन्दोः कोटिः,

केर=केन्द्राद् भूजमानम्, यर=अक्षमानम्




चित्रम् १५

तदा $\frac{\text{नाग}}{\text{इ}} = \text{केअ} = \frac{\text{बृव्या}}{\text{२इ}}$

एवं $\frac{\text{नाव}}{\text{इ}} = \text{अर} \quad \therefore \quad \frac{\text{नाव} - \text{नाग}}{\text{इ}} = \text{अर} - \text{केअ} = \text{केर}$

अथ नावल त्रिभुजं नांवलं त्रिभुजस्य सजातीयम्,

अतः $\frac{\text{नांव}}{\text{नाव}} = \frac{\text{नांलं}}{\text{नाल}}, \quad \frac{\text{नांव} + \text{नाव}}{\text{नाव}} = \frac{\text{नांलं} + \text{नाल}}{\text{नाल}} = \frac{\text{बृव्या}}{\text{नाव}}$

वा $\frac{\frac{\text{नांलं}}{2} + \frac{\text{नाल}}{2}}{\text{नाल}} = \frac{\frac{1}{2}\text{बृव्या}}{\text{नाव}}$, परन्तु नाल, नांलं योगार्धंतुल्यम्, के बिन्दोः वल स्पर्श-रेखोपरि यो लम्बस्तस्य मानम्,

अर्थात् केगं मानम्, अथ नाटल त्रिभुजं तु टकेगं त्रिभुजस्य सजातीयम्, तेन (नाके + केट) $\frac{\text{केगं}}{\text{नाल}}$ = केट

परन्तु $\dfrac{\text{केगं}}{\text{नाल}} = \dfrac{\frac{१}{२}\text{बृव्या}}{\text{नाव}}$ $\therefore$ $(\text{नाके} + \text{केट})\ \dfrac{\frac{१}{२}\text{बृव्या}}{\text{नाव}} = \text{केट}$

वा नाके $\frac{१}{२}$ बृव्या + $\frac{१}{२}$ बृव्या, केट=नाव, केट

$\therefore \text{केट} = \dfrac{\text{नाके}\ \frac{१}{२}\ \text{बृव्या}}{\text{नाव} - \frac{१}{२}\ \text{बृव्या}}$, अत्र नाके=$\frac{१}{२}$ बृव्या $\times$ इ

$$\therefore \quad \text{केट} = \dfrac{(\frac{१}{२}\ \text{बृव्या})^{२}\ \text{इ}}{\text{नाव} - \frac{१}{२}\ \text{बृव्या}} = \dfrac{(\frac{१}{२}\text{बृव्या})^{२}}{\dfrac{\text{नाव} - \frac{१}{२}\text{बृव्या}}{\text{इ}}}$$

परन्तु $\dfrac{\text{नाव} - \frac{१}{२}\ \text{बृव्या}}{\text{इ}} = \text{केर} = \text{भुज}$

$\therefore \quad \text{केट} = \dfrac{(\frac{१}{२}\ \text{बृव्या})^{२}}{\text{केर}}$ $\quad \therefore$ केर $\times$ केट=$(\frac{१}{२}\text{बृव्या})^{२}$

एतेन

२६. बृहद्व्यासस्पर्शरेखायोगात् केन्द्रावधिर्भवेत् ।
या रेखा दोस्तया निघ्नं फलं स्यात् सर्वदा स्थिरम् ॥
बृहद्विष्कम्भखण्डस्य वर्गेण सततं समम् ।
दीर्घवृत्ते बुधैश्चिन्त्यं मदुक्तं सर्वदा भृशम् ॥

अत्र केय = व बिन्दोः कोटिः, रट = केट − केर = $\dfrac{(\frac{१}{२}\text{बृव्या})^{२} - \text{केर}^{२}}{\text{केर}}$




चित्रम् १६

परन्तु $\left(\frac{1}{2}\text{ वृव्या}\right)^2 - \text{केर}^2 = \dfrac{\frac{1}{4}\text{ वृव्या}^2 - \text{केय}^2}{\frac{1}{4}\text{ लव्या}^2}$,

अतः $\text{केड} = \dfrac{\text{केट} \times \text{रव}}{\text{रट}} = \dfrac{\text{केट} \times \text{केय}}{\text{रट}}$

वा, $\text{केड} = \dfrac{\left(\frac{1}{2}\text{वृव्या}\right)^2}{\text{केर}} \times \text{केय} = \text{केर} \times \left(\frac{1}{2}\text{लव्या}\right)^2 \div \left(\frac{1}{2}\text{वृव्या}\right)^2 \times \text{केय}^2$ वा,

$\text{केड} = \dfrac{\left(\frac{1}{2}\text{लव्या}\right)^2}{\text{कय}}$        $\therefore \text{केड} \times \text{केय} = \left(\frac{1}{2}\text{लव्या}\right)$

एतेन—

**२७. लघुव्यासस्पर्शरेखायोगात् केन्द्रावधिर्भवेत् ।**
**या रेखा कोटिगुणिता वर्गोऽल्पव्यासखण्डजः ॥**

इत्युपपद्यते ।

**२८. यस्मिन् बिन्दौ स्पर्शरेखास्ति तस्माल्लम्बो यः स्यात् स्पर्शरेखोपरिष्ठः ।**
**लग्नो यत्र व्यासयोस्तत्प्रमाणे विज्ञातव्ये वक्ष्यमाणप्रकारात् ॥**

कल्प्यते व बिन्दोः वट रेखोपरि गंव लम्बः,

यस्य बृहल्लघुव्यासाभ्यां क्रमेण ग, गं बिन्दौ सम्पातः, तदा गवट त्रिभुजं जात्यं स्यात्,

अतो रेखागणितस्य षष्ठाध्यायेन,




चित्रम् १७

$$\text{गर} = \frac{\text{वर}^2}{\text{रट}}, \text{ परन्तु } \text{वर}^2 = \frac{\frac{1}{4}\text{लव्या}^2 \left(\frac{1}{4}\text{वृव्या}^2 - \text{केर}^2\right)}{\frac{1}{4}\text{वृव्या}^2},$$

$$\text{रट} = \frac{\frac{1}{4}\text{वृव्या}^2 - \text{केर}^2}{\text{केर}} \text{ अतः}$$

$$\text{गर} = \frac{\text{केर} \times \text{लव्या}^2}{\text{वृव्या}^2}, \text{ केर } (१ - \text{इ}^2) \text{ यतः } \frac{\text{लव्या}^2}{\text{वृव्या}^2} = १ - \text{इ}^2$$

$$\text{ततः केग} = \text{केर} - \text{गर} = \text{इ}^2\text{–केर}$$

$$\text{एवं केगं} = \frac{\text{वर} \times \text{केग}}{\text{गर}} = \frac{\text{वर} \times \text{केर-इ}^2}{(१ - \text{इ}^2)\text{ केर}} = \frac{\text{वर} \times \text{इ}^2}{१ - \text{इ}^2}$$

अतः—

२९. निष्पत्तिवर्गेण हता स्वदोर्मितिः कोटिश्च भक्ता क्रमशः पृथिव्या ।
निष्पत्तिवर्गोनभुवेह लब्धी बृहल्लघुव्यासजयोगमाने ॥

(२८ सूत्रे, $\text{वग}^2 = \text{गर}^2 + \text{वर}^2$,

$$\text{परन्तु गर} = \text{केर } (१ - \text{इ}^2), \ \text{वर}^2 = \frac{\text{लव्या}^2}{\text{वृव्या}^2}\left(\tfrac{1}{4}\text{वृव्या}^2 - \text{भु}^2\right)$$

$$= (१ - \text{इ}^2)\left(\tfrac{1}{4}\text{वृव्या}^2 - \text{केर}^2\right)$$

$$\therefore \text{वग}^2 = (१ - \text{इ}^2)\left(\tfrac{1}{4}\text{वृव्या}^2 - \text{केर}^2 + \text{केर}^2 - \text{इ}^2.\text{केर}^2\right)$$

$$= (१ - \text{इ}^2)\left(\tfrac{1}{4}\text{वृव्या}^2 - \text{इ}^2.\text{केर}^2\right)$$

$$= (१ - \text{इ}^2)\left(\tfrac{1}{2}\text{वृव्या} + \text{इ.केर}\right)\left(\tfrac{1}{2}\text{वृव्या} - \text{इ.केर}\right)$$

$$\text{अथ च, } \left(\tfrac{1}{2}\text{वृव्या} + \text{इ.केर}\right) = \text{नाव}$$

$$\left(\tfrac{1}{2}\text{वृव्या} - \text{इ.केर}\right) = \text{नांव}$$

$$\therefore \text{वग}^2 = (१ - \text{इ}^2)\text{ नाव-नांव}$$

अनेन—

३०. नाभिभ्यां ये रेखिके बिन्दुयाते तद्घातोऽल्पव्यासवर्गघ्न आप्तः ।
कृत्याऽनल्पव्याससंज्ञस्य वर्गः स्यात् तद्बिन्द्वोर्योगबिन्द्वन्तरस्य ॥

अस्योपपत्तिर्भवति । एवमेव—

$$\frac{\text{केग}}{\text{गर}} = \frac{\text{गगं}}{\text{वग}} \therefore \frac{\text{केग} + \text{गर}}{\text{गर}} = \frac{\text{गगं} + \text{वग}}{\text{वग}} = \frac{\text{केर}}{\text{गर}} = \frac{\text{वगं}}{\text{वग}}$$

$$\therefore \text{वगं} = \frac{\text{केर.वग}}{\text{गर}} = \frac{\text{वग}}{१ - \text{इ}^2}, \ \therefore \text{वगं}^2 = \frac{\text{वग}^2}{(१ - \text{इ})^2} = \frac{\text{नाव नांव}}{१ - \text{इ}^2}$$

अनेनेदं सिध्यति—

३१. नाभिभ्यां बिन्दुगतयो रेखयोर्यो वधो भवेत् ।
निष्पत्तिवर्गहीनेन्दुभक्तोऽभीष्टा कृतिर्भवेत् ॥




चित्रम् १८

कल्प्येते वव′ रेखाया व′ बिन्दोर्भुजकोटिमाने क्रमेण भु = केर, को = व′र, तथा व बिन्दोः भु′ = केर′, को′ = वर′

व′ल रेखा केट रेखायास्समानान्तरा कार्या, तदा < वव′ल = < वटर′ = अ,

∴ वल ज्याअ. ववं, ततः वरं = को × ज्याअ. ववं।

एवं वंल = कोज्याअ·वव, ततः केरं = भु − कोज्याअ. वव (अत्र त्रिज्या रूपमिता ग्राह्या),

परन्तु वरं = $\frac{\text{लव्या}}{\text{बृव्या}}\sqrt{\frac{1}{4}\text{बृव्या}^2 - \text{केरं}^2}$ यतोऽयं बिन्दुर्दीर्घवृत्तपरिधिगतः,

अतः को + ज्याअ·र = $\frac{\text{लव्या}}{\text{बृव्या}}\sqrt{\frac{1}{4}\text{बृव्या}^2 - (\text{भु} - \text{कोज्याअ र})}$ (अत्र, वंव = र)

पक्षयोर्वर्गेण

को$^2$ + २ को × ज्याअ. र + ज्या$^2$अ र$^2$ =

$\frac{1}{4}$लव्या$^2$ − $\frac{\text{लव्या}^2}{\text{बृव्या}^2}$. भु$^2$ − $\frac{\text{लव्या}^2}{\text{बृव्या}^2}$ × कोज्या$^2$अ. र$^2$

+ $\frac{\text{लव्या}^2}{\text{बृव्या}^2}$ × २ भु. कोज्याअ· र, पक्षान्तरेण

$$\text{र}^{2}\,(\text{ज्याअ}^{2} + \text{कोज्या}^{2}\text{अ} - \text{इ}^{2}.\ \text{कोज्या}^{2}\text{अ}) +$$

$$\text{२र}\,(\text{को} \times \text{ज्याअ} - \text{भु. कोज्याअ} + \text{इ}^{2}.\ \text{भु. कोज्याअ}) =$$

$$\tfrac{१}{४}\text{लव्या}^{2} - \frac{\text{लव्या}^{2}}{\text{बृव्या}^{2}}.\ \text{भु}^{2} - \text{को}^{2}$$

अनेन वर्गसमीकरणेन र मानं सुबोधम्, यदि वग रेखा दीर्घवृत्तस्य पूर्णज्या स्यात्। तथाऽस्यास्समद्विभागः त बिन्दौ भवेत्, त बिन्दोर्भुजकोटिमाने च भु को स्याताम्, तदा पूर्वोक्तवर्गसमीकरणेन र मानं भविष्यति व्यक्तम्, परन्तु यद् र मानं द्विविधं भवति तदत्र दिग्वैपरीत्येन समानमेव[1]।

अथ च र मानं दिग्वैपरीत्येन तदैव समानं स्यात्, यदा पूर्वोक्तसमीकरणे र, अस्य गुणकः शून्येन समः स्यात्,

अतः को × ज्याअ − भु. कोज्याअ + इ². भु.कोज्याअ = ० पक्षान्तरानयनेन

$$\text{को} \times \text{ज्याअ} = \text{कोज्याअ} \times \text{भु}.\ (१ - \text{इ}^{2}).\ \therefore \text{को} = \frac{\text{कोज्याअ} \times \text{भु}}{\text{ज्याअ}}(१ - \text{इ}^{2})$$

$$= \text{कोस्पअ} \times \text{भु}\ (१ - \text{इ}^{2})\ \text{एवमेव}$$

यदि वग पूर्णज्यायास्समानान्तरा अन्या पूर्णज्या स्यात्, तदा पूर्वयुक्त्या अस्याः कोटिः = कोस्पअ × द्विभु (१ − इ²) अतः

$$\frac{\text{प्रको}}{\text{द्विको}} = \frac{\text{प्रभु}}{\text{द्विभु}}$$ एवं यदि ततोऽपरापि स्यात्

तदा $$\frac{\text{प्रको}}{\text{अको}} = \frac{\text{प्रभु}}{\text{अभु}}$$

[2]अनेनेदं सिध्यति यत् सर्वासां समानान्तरपूर्णज्यानां समानद्विभागकारिणी रेखा केन्द्रगतैव भवति,

---

१. सं०। अत्र र = वत वा गत यतः त वग रेखायाः मध्यबिन्दुस्तेन वत = गत अतो मानद्वयं समानम्। परञ्च वत धनमानं गत दिग्वैपरीत्याद् ऋणम्।

र इत्यस्य गुणको यदा शून्येन समस्तदा तत्खण्डमेव शून्यसमम्, अतः प्रथमपक्षे र² स्वगुणकेन गुणित एवावशिष्टः, अतस्तेन गुणकेन पक्षौ विभज्य यदि मूलं नीयते, तदा केवलमवशिष्टस्य र वर्गस्य मूलम् ± र, अतस्तदा र इत्यस्य द्विविधं समानं मानम्, एकं धनात्मकमन्यच्च ऋणात्मकम्, अत एव मध्यमखण्डगुणकः शून्यसम एव स्वीकृतो भवति।

२. वग पूर्णज्यायाः मध्यबिन्दुमिष्टबिन्दुं कल्पयित्वा भुजकोटी साधिते पुनस्तत्समानान्तरपूर्णज्यायाः मध्यबिन्दुमिष्टबिन्दुं कल्पयित्वा भुजकोटी साधिते, तदा तयोर्भुजयोः सम्बन्धस्तदीयकोटयोः सम्बन्धेन तुल्यः संवृत्तः, परञ्चैतादृशस्य तुल्यसम्बन्धस्य तदैव निर्वाहो यदा केन्द्रात् प्रथमभुजाग्रगा रेखा अन्यभुजाग्रगा भवेत्, तेन केन्द्रतः प्रथमपूर्णज्यार्धबिन्दुगता रेखा एव अन्यपूर्णज्यार्धबिन्दुगता सिद्धा। अतः समानान्तरपूर्णज्यानामर्धकारिणी एका केन्द्रगतैव रेखा सिद्धेत्युपपन्नं सर्वम्।

अस्मात् प्रकारात् पूर्णज्यार्धबिन्दोर्मुजात् तत्कोटिज्ञानाय सूत्रम्—

३२. पूर्णज्यकाबृहद्व्यासयोगकोणोद्भवा ध्रुवा ।
कोटिस्पर्शाभिधा रेखा कोटिज्ञानाय वा इह ॥
निष्पत्तिवर्गोनशशाङ्कदोर्हति-ध्रुवेण निघ्नी किल कोटिमानम् ।
पूर्णज्यकाया दलबिन्दुजातं स्याद् दीर्घवृत्तस्य भुजप्रमाणात् ॥

पूर्वयुक्त्या

$तर = ध्रु \times भु\ (१ - इ^{२})$

$\therefore \dfrac{तर}{भु} = ध्रु\ (१ - इ^{२})$

वा, $स्प > तकेर = ध्रु\ (१ - इ^{२})$ ततः $\dfrac{स्व < तकेर}{कोस्प > वटर} = १ - इ^{२}$

अथ गगं पूर्णज्या केत रेखायास्समानान्तरा कार्या,

तदा $तंरं = कोस्प < गटंके \times केरं\ (१ - इ^{२})$ अतः




चित्रम् १९

$\dfrac{तंरं}{केरं} = कोस्प < तकेर\ (१ - इ^{२})$ यतः $< गटंके = < तकेर$

$\therefore स्प < तंकेरं = कोस्प < तकेर\ (१ - इ^{२})$

वा, $\dfrac{१}{कोस्प < तकेर} = \dfrac{१ - इ^{२}}{स्प < तकेर}$ परन्तु,

४

$\frac{१}{\text{कोस्प}\angle\text{तकेर}} = \text{स्प}\angle\text{तकेर}, \quad \frac{१}{\text{स्प}\angle\text{तकेर}}\text{कोस्प}\angle\text{तकेर}',$

अतः

$\text{स्प}\angle\text{तकेर} = \text{कोस्प}\angle\text{तं'केर'}\ (१ - \text{इ}^२)$

परन्तु पूर्वं $\text{स्प}\angle\text{तकेर} = \text{कोस्प}\angle\text{वटर}\ (१ - \text{इ}^२)$ इति सिद्धम् ।




चित्रम् २०

अस्मात्

$\text{कोस्प}\angle\text{तं'केर'}\ (१ - \text{इ}^२) = \text{कोस्प}\angle\text{वटर}\ (१ - \text{इ}^२)$

$\therefore \text{कोस्प}\angle\text{तं'केर'} = \text{कोस्प}\angle\text{वटर}$

$\therefore \angle\text{तं'केर'} = \text{वटर}$

अनेन,

वव' पूर्णज्या केत' रेखायास्समानान्तराऽस्तीति सिध्यति, वा द'द' पूर्णज्या, वव' पूर्णज्या समान्तरा तथा गग' पूर्णज्या समान्तरा दद पूर्णज्याऽस्तीत्यपि सिद्धिमेति ।

एते केन्द्रगते दद, द'द' पूर्णज्ये मिथस्समानान्तरपूर्णज्यार्धकारिण्यो ( संबद्धपूर्णज्ये ) इति नव्या व्यवहरन्ति ।

कल्प्येते दद, द'द', संबद्धपूर्णज्ये तथा दर = र, केर = य, द'र' = र', केर' = य'

तदा पूर्वयुक्त्या

$\frac{\text{दर}}{\text{केर}\ (१ - \text{इ}^२)} = \text{कोस्प}\angle\text{वटर} = \text{कोस्प}\angle\text{द'केर'}$

$$\therefore \frac{\text{र}}{\text{य}(१-\text{इ}^{२})} = \text{को}\angle\text{द}'\text{के}\text{र}' = \frac{\text{के}\text{र}'}{\text{द}\text{र}} = \frac{\text{य}'}{\text{र}'}$$

तेन, $\frac{\text{र}}{\text{य}(१-\text{इ}^{२})} = \frac{\text{य}'}{\text{र}'}$ वा, $\frac{\text{य}(१-\text{इ}^{२})}{\text{र}} = \frac{\text{र}'}{\text{य}'}$ ततः,

$\text{र}' = \frac{\text{य}'.\,\text{य}(१-\text{इ}^{२})}{\text{र}}$ परन्तु द' बिन्दुर्दीर्घवृत्तपरिधिगतः,

अतः

$$\text{र}'^{२} = \frac{\text{लव्या}^{२}}{\text{वृव्या}^{२}}\left(\frac{१}{४}\text{वृव्या}^{२} - \text{य}'^{२}\right) = (१-\text{इ}^{२})\left(\frac{१}{४}\text{वृव्या}^{२} - \text{य}'^{२}\right)$$

$$\therefore \text{य}'^{२}.\,\text{य}^{२}(१-\text{इ}^{२}) = \text{र}^{२}(१-\text{इ}^{२})\left(\frac{१}{४}\text{वृव्या}^{२} - \text{य}'^{२}\right)$$

वा, $\text{य}'^{२}\,\text{य}^{२} - \text{इ}^{२}\,\text{य}'^{२}.\,\text{य}^{२} = \frac{१}{४}\text{र}^{२}.\,\text{वृव्या}^{२} - \text{र}^{२}.\,\text{य}'^{२}$

पक्षान्तरानयनेन, $\text{य}'^{२}(\text{य}^{२} + \text{र}^{२} - \text{इ}^{२}.\,\text{य}^{२}) = \frac{१}{४}\text{र}^{२}.\,\text{वृव्या}^{२}$

$\therefore \text{य}'^{२} = \frac{\frac{१}{४}\text{र}^{२}.\,\text{वृव्या}^{२}}{\text{य}^{२} + \text{र}^{२} - \text{इ}^{२}.\,\text{य}^{२}}$ परन्तु $\text{र}^{२} = \frac{\text{लव्या}^{२}}{\text{वृव्या}^{२}}\left(\frac{१}{४}\text{वृव्या}^{२} - \text{य}^{२}\right)$

वा, $\text{र}^{२} = \frac{१}{४}\text{लव्या}^{२} - \text{य}^{२}(१-\text{इ}^{२}) = \frac{१}{४}\text{लव्या}^{२} - \text{य}^{२} + \text{इ}^{२}.\,\text{य}^{२}$

$\therefore \text{य}^{२} + \text{र}^{२} - \text{इ}^{२}.\,\text{य}^{२} = \frac{१}{४}\text{लव्या}^{२}$ ततः

$\text{य}'^{२} = \frac{\text{र}^{२}.\,\text{वृव्या}^{२}}{\text{लव्या}^{२}} \therefore \text{य}' = \pm\frac{\text{र}.\,\text{वृव्या}}{\text{लव्या}}$ उत्थापनेन

$$\text{र}' = \frac{\text{य}.\,\text{वृव्या}(१-\text{इ}^{२})}{\text{लव्या}} = \frac{\text{य}.\,\text{वृव्या}\sqrt{१-\text{इ}^{२}}\times\sqrt{१-\text{इ}^{२}}}{\text{लव्या}\times\text{वृव्या}}\times\text{वृव्या}$$

$$\text{र}' = \frac{\text{य}.\,\text{लव्या}}{\text{वृव्या}}$$

अस्मात् सूत्रावतारः—

**३३. एकस्या यौ कोटिबाहू हृतौ तावल्पानल्पव्याससमित्या क्रमेण ।**
**व्यासाभ्यां चाऽनल्पसंज्ञाऽल्पकाभ्यां गुण्यौ ते स्तो बाहुकोटी परस्याः ॥**

पूर्वयुक्त्या, $\text{र}\text{ट}' = \frac{\text{वृव्या}^{२}.\,\text{के}\text{य}^{२}}{\text{लव्या}^{२}\,\text{के}\text{र}}$ ( द्र. २७ सू. )

तदा, $\text{कोस्प}\angle\text{द}\text{ट}'\text{र} = \frac{\text{वृव्या}^{२}\,\text{के}\text{य}^{२}}{\text{लव्या}^{२}\,\text{के}\text{र}}\,\text{के}\text{र} = \frac{\text{लव्या}^{२}.\,\text{के}\text{र}.\,\text{कोस्प}\angle\text{ट}'}{\text{वृव्या}^{२}}$

वा, $\text{के}\text{य} = (१-\text{इ}^{२}).\,\text{के}\text{र}.\,\text{कोस्प}\angle\text{ट}'$

परन्तु पूर्वसूत्रयुक्त्या

$\text{के}\text{य} = (१-\text{इ}^{२})\,\text{के}\text{र}.\,\text{कोस्प}\angle\text{ट}$

$\therefore (१-\text{इ}^{२})\,\text{के}\text{र}.\,\text{कोस्प}\angle\text{ट} = (१-\text{इ}^{२})\,\text{के}\text{र}.\,\text{कोस्प}\angle\text{ट}'$

ततः $\text{कोस्प}\angle\text{ट} = \text{कोस्प}\angle\text{ट}' \quad \therefore \angle\text{ट} = \angle\text{ट}'$

एतेन—

**३४. मिथःसक्तपूर्णज्यकाऽग्राच्च रेखा समानान्तरा याऽन्यपूर्णज्यकायाः ।**
**भवेत् स्पर्शरेखा सदा दीर्घवृत्ते बुधैर्दीर्घवृत्तप्रवीणैर्विचिन्त्या ॥**

इत्युपपद्यते ।

( द्र० ३३ सू० ) ।

$$\text{केदं}^2 + \text{केद}^2 = \text{केर}^2 + \text{दंर}^2 + \text{केर}^2 + \text{दर}^2$$

$$= \frac{\text{र}^2 . \text{वृव्या}^2}{\text{लव्या}^2} + \frac{\text{य}^2 \text{ लव्या}^2}{\text{वृव्या}^2} + \text{य}^2 + \text{र}^2$$

$$= \frac{\text{र}^2 \ (\text{वृव्या}^2 + \text{लव्या}^2)}{\text{लव्या}^2} + \frac{\text{य}^2 \ (\text{वृव्या}^2 + \text{लव्या}^2)}{\text{वृव्या}^2}$$

$$= (\text{वृव्या}^2 + \text{लव्या}^2) \left\{ \frac{\text{र}^2}{\text{लव्या}^2} + \frac{\text{य}^2}{\text{वृव्या}^2} \right\}$$

$$= (\text{वृव्या}^2 + \text{लव्या}^2) \left\{ \frac{\text{र}^2 . \text{वृव्या}^2}{\text{लव्या}^2 . \text{वृव्या}^2} + \frac{\text{य}^2}{\text{वृव्या}} \right\}$$

$$= (\text{वृव्या}^2 + \text{लव्या}) \left\{ \frac{\frac{1}{4} \text{वृव्या}^2 - \text{य}^2}{\text{वृव्या}^2} + \frac{\text{य}^2}{\text{वृव्या}^2} \right\}$$

$$= (\text{वृव्या}^2 + \text{लव्या}^2) \times \frac{1}{4}$$

अतः

३५. विष्कम्भमानोद्भववर्गयोगो यस्तत्समं स्यात् सततं स्थिरञ्च ।
तत्पूर्णमौर्व्योः कृतियोगमानमन्यो विशेषस्तत एव चिन्त्यः ।।

इति भवति ।

कल्प्येते द द, दं दं संबद्धपूर्णज्ये तदा पूर्वलिखितयुक्त्या




चित्रम् २१

दं दं पूर्णज्या समानान्तरा क ग रेखा, अ घ रेखा चास्ति, एवं द द समानान्तरा, क अ, ग घ चास्ति, अतः

अकगघ समानान्तरं चतुर्भुजं भवति,

तथा, केदं = केदं = कद = गद

अतः कदकेदं चतुर्भुजं. अकगघ चतुर्भुजस्य चतुर्थांशसमं, तदा पूर्वयुक्त्या

$$\text{केदं}^{2} = \tfrac{१}{४}\text{वृव्या}^{2} + \tfrac{१}{४}\text{लव्या}^{2} - \text{य}^{2} - \text{र}^{१}$$

$$= \tfrac{१}{४}\text{वृव्या}^{2} + \tfrac{१}{४}\text{लव्या}^{2} - \text{य}^{2} - \frac{\tfrac{१}{४}\text{लव्या}^{2}}{\tfrac{१}{४}\text{लव्या}^{2}}\left(\tfrac{१}{४}\text{वृव्या}^{2} - \text{य}\right)$$

$$= \tfrac{१}{४}\text{वृव्या}^{2} + \tfrac{१}{४}\text{लव्या}^{2} - \text{य}^{2} - \tfrac{१}{४}\text{लव्या}^{2} + \frac{\tfrac{१}{४}\text{लव्या}^{2}}{\tfrac{१}{४}\text{वृव्या}}\text{य}^{2}$$

$$= \tfrac{१}{४}\text{वृव्या}^{2} - \text{य}^{2} + \text{य}^{2} - \text{इ}^{2}.\text{य}^{2} = \tfrac{१}{४}\text{वृव्या}^{2} - \text{इ}^{2}\text{य}^{2}$$

$$= \left(\tfrac{१}{२}\text{वृव्या} - \text{इ}.\text{य}\right)\left(\tfrac{१}{२}\text{वृव्या} + \text{इ}.\text{य}\right) = \text{नाद} \times \text{नंाद}$$

अनेन

३६. पूर्णज्याग्राग्राभियाते च रेखे ये तद्घातान्मूलमान भवेत् तत्।
अन्यस्या वै पूर्णमौर्व्या दलस्य मानं ज्ञेयं धीमता तद्विदैव॥

इत्युपपन्नं भवति।

अतः

$$\text{केदं}\sqrt{\text{नाद} \times \text{नंाद}}$$

नंा बिन्दोः कग रेखोपरि यो लम्बः = ल

तथा ना बिन्दोः कग रेखोपरि यो लम्बः = लं

एवं के बिन्दोः कग रेखोपरि यो लम्बः = ल'',

$$\text{तदा}\quad \text{लं} = \frac{\text{ल} \times \text{नाद}}{\text{नंाद}} \qquad \therefore \text{ल}'' = \frac{\text{ल}\,(\text{नंाद} + \text{नाद})}{२\ \text{नंाद}}$$

$$\text{वा,}\ \text{ल}'' = \frac{\text{ल} \times \text{वृव्या}}{२\ \text{नंाद}}$$

$$\text{परन्तु}\quad \frac{\tfrac{१}{४}\text{लव्या}^{2}}{\text{ल}} = \text{लं} \quad \therefore \frac{\tfrac{१}{४}\text{लव्या}^{2}}{\text{ल}} = \frac{\text{ल} \times \text{नाद}}{\text{ना'द}}$$

$$\text{वा,}\quad \tfrac{१}{४}\text{लव्या}^{2} = \text{ल}^{2}\frac{\text{नाद}}{\text{नंाद}} \quad \therefore \text{ल} = \tfrac{१}{२}\text{लव्या}\sqrt{\frac{\text{नंाद}}{\text{नाद}}}$$

अत उत्थापनेन

$$ल'' = \frac{२ लव्या \times वृव्या \sqrt{ना'द}}{२ ना'द \sqrt{नाद}} = \frac{लव्या \times वृव्या}{४\sqrt{ना'द}\sqrt{नाद}}$$

$$= \frac{लव्या . वृव्या}{४\sqrt{ना'द . नाद}}$$

ततः कदकेदं चतुर्भुजफलम् $=$ केदं $\times$ ल''

$$= \sqrt{नाद \times ना'द} \times \frac{लव्या \times वृव्या}{४\sqrt{ना'द \times नाद}} = \frac{लव्या \times वृव्या}{४}$$

एतेन—

**३७. मिथः सक्तपूर्णज्यकाप्रान्त्ययाता भवेयुर्हि या स्पर्शरेखाश्च ताभिः।**
**चतुःकोणसंज्ञं फलं तत्स्थिरं स्यात् सदा व्यासघातेन तुल्यं च विद्वन् ॥**

इत्युपपन्नम् ।

केग $=$ इ'. केर (द्र० २८ सूत्रं) अथ गव रेखायां कुत्रचिद् बिन्दुः वं कार्यस्तस्माद् बृहद्-व्यासोपरि लम्बो विधेयः, तन्मूलबिन्दुस्तु ल, कल्प्य।, तदा

$वंल = \frac{वर \times गल}{गर}$, अत्र वर $=$ रं, केर $=$ यं, गर $=$ यं $-$ इ$^{२}$ यं

वंल $=$ र, केल $=$ य, तदा

$$र = \frac{रं (य - इ' . यं)}{यं - इ^{२} यं}$$

अथ दीर्घवृत्ते तत्परिधावन्यो बिन्दुः कार्यः, यस्मात् स्पर्शरेखा कार्या, तथा तत्स्पर्श-रेखोपरि तस्माद् बिन्दोर्लम्बः कार्यः, तदा यदि तल्लम्बे कस्मादपि बिन्दोर्भुजकोटी यं', रं' कल्प्ये, तर्हि पूर्वयुक्त्या

$$रं' = \frac{रं'' (य'' - इ^{२} . यं'')}{यं''' - इ^{२} . यं''}$$ एवं भविष्यति ।

अत्र यं'' $=$ नवीनबिन्दुभुजः,

रं'' $=$ नवीनबिन्दुकोटिः ।

अथैतयोर्लम्बयोर्योगबिन्दोर्भुजकोटी समाने भवतः, अतस्तदा

$$\frac{रं'' (य - इ^{२} . यं'')}{यं''' - इ^{२} . यं'''} = \frac{रं (य - इ^{२} . यं)}{यं' - इ^{२} . यं'}$$

छेदगमेन, $र''' . य . य' - इ^{2} . र''' य''' . य' - इ^{2} . र''' . य . य' +$
$इ^{4} . र''' . य''' . य' = र' य . य''' - इ^{2} . र' . य' . य''' - इ^{2} . र' . य . य'''$
$+ इ^{4} . र' . य' . य'''$ ततो य मानम्

$$य = \frac{र''' इ^{2} . य' (य' - इ^{2} . य') - र' . इ^{2} . य' (य''' - इ^{2} , य''')}{र''' ( य' - इ^{2} . य ) - र' ( य''' - इ^{2} . य''')}$$

परन्तु, $र''' = \frac{अ}{क} \sqrt{क^{2} - य'''^{2}}$, $र' = \frac{अ}{क} \sqrt{क^{2} - य'^{2}}$ अत्र

$\frac{1}{2}$ लव्या = अ, $\frac{1}{2}$ वृव्या = क

तदा

$$य = \frac{इ^{2} . य''' \sqrt{क^{2} - य^{2}} (य' - इ^{2} . य') - इ^{2} . य' \sqrt{क^{2} - य^{2}} य''' इ^{2} य'''}{\sqrt{क^{2} - य'''^{2}} (य' - इ^{2} . य) \sqrt{क^{2} - य^{2}} (य''' - इ^{2} . य''' य' - इ^{2} . य'''}$$

कल्प्यते $य' + च = य'''$ तदा

$\sqrt{क^{2} - य'''^{2}} = \sqrt{क^{2} - य'^{2} - 2य'च - च^{2}}$, $\sqrt{क^{2} - य'^{2}} = मू$

$\therefore \sqrt{क^{2} - य'^{2} - 2 य' च - च^{2}} = मू - \frac{य' च}{मू}$,

अन्यानि पदानि च वर्गगुणकानि त्यक्तानि ।

ततो य मानम्

$$य = \frac{इ^{2} . य''' . य मू - इ^{4} य''' . य . मू - \frac{य' च}{मू} (इ^{2} य''' . य' - इ^{4} . य''' . य'}{मू . य' - इ^{2} . य' मू - \frac{य' च}{मू} (य' - इ^{2} य') - मू य' - मू च + मू इ^{2} . य + मू इ^{2} च}$$

$$+ \frac{- इ^{2} . य''' . य . मू + इ^{4} य''' मू}{मू इ च - मू च - \frac{य' च (य' - इ^{2} . य)}{मू}}$$

$$= \frac{- \frac{य' च}{मू} (इ^{2} य''' . य' - इ^{4} य''' य')}{मू . इ^{2} च \; मू च - \frac{य' च}{मू} (य' - इ^{2} . य)} = \frac{- य' (इ^{2} . य''' य' - इ^{4} य''' य')}{मू^{2} . इ^{2} - मू^{2} - य^{2} (1 - इ^{2})}$$

अत्र च मानं यदि विन्दुरूपं स्यात्, तदाऽत्यन्तासन्नयोर्लम्बयोर्योगबिन्दोर्भुजमानम् =

$$\frac{- य' (इ^{2} . य'^{2} - इ^{4} . य'^{2})}{- मू^{2} (1 - इ^{2}) - य'^{2} (1 - इ^{2})} = \frac{- य'^{2} . इ^{2} (1 - इ^{2})}{(1 - इ^{2}) ( - मू^{2} - य^{2})} = \frac{य'^{2} . इ^{2}}{क^{2}}$$

एतेन—

अत्यासन्नस्थबिन्दुभ्यां दीर्घवृत्तवृतौ बुधाः ।
यौ लम्बौ स्पर्शरेखायां तयोर्योगस्य यद् भवेत् ॥
बिन्दोर्दोःस्पर्शरेखायां स्थिताभ्यां तन्मितिर्भवेत् ।
बृहद्व्यासार्धवर्गाप्तबिन्दुदोर्घनसंहतः ॥
समनिष्पत्तिवर्गोऽथ भुजमानाद् भविष्यति ।
कोटिमानं प्रकारेण सुलभेन सदेह वै ॥

इति सिध्यति ।

अथ कल्प्यतेऽत्यासन्नयोर्लम्बयोर्योगबिन्दुः = यो, तद्भुजः = केल, तत्कोटिः = योल




चित्रम् २२

तदा लर = योर' = केर + केल

$\therefore$ योर' = केर − $\dfrac{\text{केर}^{2} - \text{इ}^{2}}{\text{क}^{2}}$ = $\dfrac{\text{केर}}{\text{क}^{2}}$ क$^{2}$ − इ$^{2}$.केर)

पूर्वयुक्त्या, गर = केर (१ − इ$^{2}$)

वग = $\sqrt{१-\text{इ}^{2}}\sqrt{(\text{क}^{2}\ \text{इ}^{2}.\text{केर}^{2})}$ (द्र० ३० सूत्रम्)

ततः $\text{योव} = \dfrac{\text{वग} \times \text{योर}'}{\text{गर}}$

$$= \frac{\sqrt{१ - \text{इ}^२}\ \sqrt{\text{क}^२ - \text{इ}^२ \text{केर}^२} \times \frac{\text{केर}}{\text{क}^२} (\text{क}^२ - \text{इ}^२ . \text{केर}^२)}{(१ - \text{इ}^२) \cdot \text{केर}}$$

वा, $\text{योव} = \dfrac{(\text{क}^२ - \text{इ}^२ \text{केर}^२)^{\frac{१}{२}} \times (\text{क}^२ - \text{इ}^२ . \text{केर}^२)}{\text{क}^२ \sqrt{१ - \text{इ}^२}}$

$$= \frac{(\text{क}^२ - \text{इ}^२ . \text{केर}^२)^{\frac{३}{२}}}{\text{अ} + \text{क}}$$

अत्रापि $\text{अ} = \frac{१}{२}$ लव्या, $\text{क} = \frac{१}{२}$ वृव्या

अथ, $\text{क}^२ - \text{इ}^२ + \text{केर}^२ = (\text{क} + \text{इ}. \text{केर})(\text{क} - \text{इ}.\text{केर}) = \text{नाव} \times \text{नांव}$

$\therefore\ \text{योव} = \dfrac{(\text{नाव} \times \text{नांव})^२}{\text{अ}.\text{क}}$

यो केन्द्राद्योव व्यासार्धेन यद्वृत्तं स्यात्तद्दीर्घवृत्तस्य वृतिस्थाऽत्यन्तासन्नबिन्दुद्वयोपरि गतं भविष्यति, अतः वट रेखा अत्यासन्नबिन्द्वोरुपरि गतेन दीर्घवृत्तस्य चापेन सह यं कोणं विरचयति तमेव कोणं तत्परिधिश्चापेन सह निर्माति । अयं परिधिः 'वक्रक्षेत्रसजातीयपरिधिः' इति नाम्ना व्यवह्रियते, तथास्य व्यासः सजातीयव्यास इति नाम्ना ।

सजातीयव्यासज्ञानाय सूत्रम्

**३९. निष्पत्तिदीर्घातजवर्गहीनात् पदं महद्व्यासदलस्य वर्गात् ।**
**यत्तद्घनो व्यासवधाब्धिभागभक्तस्सजातीयवृतेस्त्रिभज्या ॥**

अथ दीर्घवृत्तस्य फलादिज्ञानाय तत्फलादीनां तत्कालगत्यानयनम्—

कल्प्यते अकग वक्रक्षेत्रं यस्य अग = भु, क ग = को सर्वदा भुजसंस्कारादेव कोटिः ।

कल्प्यते गगं तुल्या भुजवृद्धिः, तदा कोटिमानम् = कगं, अतः कगगंकं आयतक्षेत्र-फलम् = गगं × केगं, यदि गगं मानमत्यल्पं भवेत् तदाऽऽयतफलतुल्यमेव अकग, अकंगं क्षेत्रयोः फलान्तरं स्यात् । अतः गगं × कंगं इदमेव भुजस्य गग' वृद्धौ फलान्तरम् । ततोऽनुपातः गग' वृद्धौ चेदिदं फलान्तरम्, तदा रूपवृद्धौ किमिति लब्धं केगं तुल्यं फलान्तरं भुजस्य

रूपवृद्धौ समानवेगेन । अथ यथा यथा गग′ मानमल्पं स्यात्, तथा तथा वास्तवक्षेत्रयोः- फलान्तरं स्यात्, परन्तु गग अस्य परमह्रासे कग = कग′ इदं भुजस्य गतिगुणितंभुजस्य तद्गतौ फलगतिः स्यादेकरूपेण ।




चित्रम् २३

अतः सूत्रम्

४०. वक्रक्षेत्रस्य कोटिघ्नी भुजतात्कालिकीगतिः ।
तात्कालिकीगतिस्सा स्याद् वक्रक्षेत्रफलस्य वै ॥

अथ गग′ = कच = भुजगतिः,

कंच = कोटिगतिः,

ककं = कर्णगतिः,

अतः ककं = $\sqrt{\text{गगं}^2 + \text{कच}^2}$

अनुपातेन भुजस्य रूपगतौ ककं मानं साध्यम् ।




चित्रम् २४

अतः सूत्रम्

४१. भुजकोटिजतत्कालगतिवर्गयुतेः पदम् ।
कर्णजा सा गतिः स्याद् वै वक्रक्षेत्रेषु सर्वदा ॥




चित्रम् २५

यदि अकग क्षेत्रम्, अग रेखोपरि भ्राम्यते, तदैकं घनक्षेत्रं स्यात्, यस्य मुखम् अ बिन्दौ, तस्याऽऽधारस्तु कग व्यासार्धजन्यः परिधिः ।

एवं वर्धितक्षेत्रस्याधारपरिधिः कंगं व्यासार्धजन्यः परिधिः ।

तदा यदि गगं मानमल्पतरं स्यात्,

तदा कककंकं घनफलं वा अकक, अकंकं घनफलयोरन्तरम् $= \text{प} \times \text{कक}^{२} \times \text{गगं} = \dfrac{\text{प. कग}^{२}\text{. गग}'}{४}$

अनुपातेन भुजस्य रूपगतौ

घनफलान्तरम् $= \text{प} \times \text{कग}^{\cdot}$, अत्र प = ३.१४१५९....

पुनरनुपातेन भुजस्याभीष्टगतौ घनफलगतिः साध्या ।

अतः सूत्रम्

४२. **द्विघ्नकोटिमिते व्यासे वृत्तक्षेत्रफलं हृतम् ।**
**भुजगत्या घनक्षेत्रफलजा सा गतिर्भवेत् ॥**

एवं तत् क्षेत्रभ्रमणेन तत्क्षेत्रवर्धितक्षेत्रयोः पृष्ठफलान्तरं तु द्विगुणितकोटिजन्यपरिधि-कर्णगतिघाततुल्यम् ।

अतः सूत्रम्

४३. **द्विघ्नकोटिमिते व्यासे परिधिर्गुणितस्तया ।**
**कर्णगत्या भवेत् सा च गतिः पृष्ठफलोद्भवा ॥**

दीर्घवृत्तक्षेत्रे तु कोटिः $= \dfrac{\text{अ}}{\text{क}} \sqrt{\text{क}^{२} - {}^{२}\text{भु}}$

कोटिः = र, भु = य, अ = $\frac{१}{२}$ लव्या, क = $\frac{१}{२}$ बृव्या

$$\therefore \text{र} = \frac{\text{अ}}{\text{क}} \sqrt{\text{क}^{२} - \text{भु}^{२}} = \text{फलगतिः}$$

$$\text{र}^{२} = \frac{\text{अ}^{२}}{\text{क}^{२}} (\text{क}^{२} - \text{भु}^{२}) \text{ अनयोर्गती}$$

$$२ \text{ तार.र} = - २ \text{ ताभु. भु} \times \frac{\text{अ}^{२}}{\text{क}^{२}}$$

$$\text{तार} = - \frac{\text{ताभु भु} \times \text{अ}^{२}}{\text{र} \times \text{क}^{२}}$$

$$\text{तार}^{२} = \frac{\text{ताभु}^{२}\text{. भु}^{२} \times \text{अ}^{४}}{\text{र}^{२}\text{. क}^{४}}$$

$$\text{तार}^2 + \text{ताभु}^2 = \text{ताभु}^2 \left\{ \frac{\text{र}^2.\,\text{क}^4 + \text{भु}^2.\,\text{अ}^4}{\text{र}^2.\,\text{क}^4} \right\}$$

वा

$$\text{तार}^2 + \text{ताभु}^2 = \frac{[\,\text{अ}^2.\text{क}^2\,(\,\text{क}^2 - \text{य}^2) + \text{य}^2.\text{अ}^4\,]\,\text{ताय}^2}{\text{अ}^2\,\text{क}^2\,(\,\text{क}^2 - \text{य}^2)}$$

$$= \frac{\text{ताय}^2 \left\{ (\text{क}^2 - \text{य}^2 + \text{य}^2.\frac{\text{अ}^2}{\text{क}^2} \right\}}{\text{क}^2 - \text{य}^2} = \frac{\text{ताय}^2(\,\text{क}^2 - \text{य}^2 + \text{य}^2 - \text{इ}^2.\text{य}^2}{\text{क}^2 - \text{य}^2}$$

$$= \frac{\text{ताय}^2\,(\,\text{क}^2 - \text{इ}^2.\,\text{य}^2)}{\text{क}^2 - \text{य}^2}$$

अत:

$$\text{दीर्घवृत्तस्य कर्णगतिः} = \frac{\text{ताय}\sqrt{\text{क}^2 - \text{इ}^2\,\text{य}^2}}{\sqrt{\text{क}^2 - \text{य}^2}}$$

$$\text{र}^2 = \frac{\text{अ}^2}{\text{क}^2}\,(\text{क}^2 - \text{य}^2), \quad \text{प} = 3.14159.$$

$$\text{ताय} \times \text{प} \times \text{र}^2 = \frac{\text{प}.\text{अ}^2}{\text{क}^2} \times \text{ताय}\,(\text{क}^2 - \text{य}^2) = \text{घनफलगतिः}$$

$$\text{र} = \frac{\text{अ}}{\text{क}}\sqrt{\text{क}^2 - \text{य}^2}, \quad \text{कर्णगतिः} = \frac{\text{ताय}\sqrt{\text{क}^2 - \text{इ}^2\,\text{य}^2}}{\sqrt{\text{क}^2 - \text{य}^2}}$$

$$\therefore\ 2\ \text{प}.\ \text{र} \times \text{कग} = \frac{2\,\text{अप}}{\text{क}} \times \text{ताय}\sqrt{\text{क}^2 - \text{इ}^2.\text{य}^2}$$

अतो यदि

येषां चलराशीनां पूर्वलिखितास्तत्कालगतयस्सन्ति तेषां मानानि व्यक्तानि स्युः, तदा तानि मानानि दीर्घवृत्तस्य फलादीनां मानानि भविष्यन्ति। तेषां मानं कथं व्यक्तं भवेदित्येतदर्थं चलराशीनां तत्कालगत्यानयनाय गतेश्च चलराशिज्ञानाय कतिपयसिद्धान्तान् वर्णयामि।

तत्र सर्वदा चलराशीनां मानानि य, र, ल, व इत्यादि वर्णकैर्गणकैर्ज्ञेयानि।

कल्प्यते य चलराशिः, यस्य संस्कारद्वयस्य तत्कालगतिरभीष्टा

र = फ (य) × फि (य) अत्र फ, फि यस्य संस्कारः

यस्य च मितवृद्धौ र स्वरूपम् = र'

र' = फ (य + च) × फि (य + च) फलयोरन्तरम्

र' − र = फ (य + च) × फि (य + च) − फ (य) × फि (य)

= फ (य + च) × फि (य + च) − फि (य) × फ (य + च)

+ फि (य) + फ (य + च) − फ (य) फि (य)

= [ फ (य + च) ] [ फि (य + च) − फि (य) ]

+ फि (य) [ फ (य + च) − फ (य) ]

अथेदमन्तरं च भक्तं यस्य रूपगतो र गतिः = { फ ( य + च ) }

$$\left\{ \frac{\text{फि (य + च) − फि (य)}}{\text{च}} \right\} + \text{फि (य)} \left\{ \frac{\text{फ (य + च) − फ (य)}}{\text{च}} \right\}$$

अत्र च मानं यदि शून्यमितं भवेत् तदा रस्य तात्कालिको गतिर्भविष्यति, परन्तु तदा

$$\frac{\text{फि (य + च) − फि (य)}}{\text{च}} = \text{ताग}^{1}\ \text{फि (य)},\quad \frac{\text{फ (य + च − फ (य)}}{\text{च}} = \text{ताग फ (य)}$$

अतः

तागर = फ (य) ताग फि (य) + फि (य) ताग फ (य)

ततः सूत्रम्

४४. **मिथश्चलाख्यराशिघ्ने चलराश्योर्गती भवेत् ।**
**चलराशिहतेर्विद्वन् तत्कालजगतिः स्फुटा ॥**

अत्र यदि फ = फि, तदा

ताग फ (य)$^{२}$ = २ फ (य) ताग फ (य), कल्प्यते पुनः फ$^{२}$ = फि

तदा, ताग फ (य)$^{३}$ = ३ फ (य)$^{२}$ × ताग फ (य) ।

एवं यदि फ$^{३}$ = फि, तदा

ताग फ (य)$^{४}$ = ४ फ (य)$^{३}$ × ताग फ (य)

अतः सूत्रम्

४५. **चलराशिगतिर्घातसंख्यया गुणिता हता ।**
**राशिजव्येकघातेन राशिघात[2]गतिर्भवेत् ॥**

---

१. सं० चलनकलने सर्वत्र ताग इत्यस्य स्थाने ता मात्रमेव ग्रन्थकर्त्रा लिखितम् ।

२. सं० । घातशब्देनात्र घाताङ्को वर्गघनादिको ज्ञातव्यः ।

यदि र = फ (य) $\pm$ स्थिरसंख्या, तदा

र' = फ (य + च) $\pm$ स्थिरसंख्या, अतोऽनयोरन्तरम् = फ (य + च) − फ (य) इदं च

भक्तं जाता र गतिः $= \dfrac{\text{फ (य + च)} - \text{फ (य)}}{\text{च}}$, अतः स्थिरसंख्या युतोनितस्यापि चलराशेस्सैव तात्कालिकी गतिर्भवति।

एवं स्थिरसंख्यागुणितभक्तस्यापि सैव गतिर्भवति स्थिरसंख्यागुणितभक्ता सती।

एवं यदि र = ज्याय तदा

र' = ज्या (य + च) अनयोरन्तरम्

$$\text{र}' - \text{र} = \text{ज्या (य + च)} - \text{ज्याय} = \frac{2\ \text{कोज्या}\left(\frac{\text{य + च}}{2}\right).\ \text{ज्या}\ \frac{1}{2}\text{च}}{\text{त्रि}}$$

च भक्तं जाता र गतिः =

$$\frac{2\ \text{कोज्या}\left(\frac{\text{य + च}}{2}\right).\ \text{ज्या}\ \frac{\text{च}}{2}}{\text{त्रि} \times \text{च}} = \frac{\text{कोज्या}\left(\frac{\text{य + च}}{2}\right)\ \frac{\text{ज्या}\frac{1}{2}\text{च}}{\frac{1}{2}\text{च}}}{\text{त्रि}}$$

चस्य परमह्रासे $\dfrac{\text{ज्या}\ \frac{1}{2}\text{च}}{\frac{1}{2}\ \text{च}} = 1$ अतः

तागर $= \dfrac{\text{कोज्याय}}{\text{त्रि}}$ य चापस्य रूपगतौ।

अभीष्टगतौ तु तागर $= \dfrac{\text{कोज्याय. ताय}}{\text{त्रि}}$

विलोमात्

$$\text{ताय} = \frac{\text{तागर. त्रि}}{\text{कोज्याय}} = \frac{\text{तागर. त्रि}}{\sqrt{\text{त्रि}^2 - \text{र}^2}}$$

अतः

४६. चलचापगतिश्चापकोटिज्यागुणिता भवेत्।
त्रिजीवया फलं तत् स्याज्जीवातात्कालिकी गतिः॥
जीवागतिस्त्रिभज्याघ्नी कोटिज्याविहृता भवेत्।
चलचापगतिः पूर्वप्रकारस्य विलोमतः॥

अथ पूर्वरीत्या

$$\text{ताय} = \frac{\text{तागर. त्रि}}{\sqrt{\text{त्रि}^2 - \text{र}^2}} \therefore \text{ज्याय} = \text{र, ततः य} = \text{ज्या}^{-1}\text{र}$$

परन्तु पूर्वयुक्त्या स्थिरसंख्यायुतोनितस्यापि चलराशेस्सैव गतिः, अतः

ताग (य $\pm$ स्थि) = ताय $\therefore$ ज्या (य $\pm$ स्थि) = र, ततः य $\pm$ स्थि = ज्या$^{-1}$र[1] पक्षान्तरानयनेन य = ज्या$^{-1}$र $\pm$ स्थि,

$$\text{अतः} \int \frac{\text{तागर. त्रि}}{\sqrt{\text{त्रि}^2 - \text{र}^2}} = \text{ज्या}^{-1}\text{र} \pm \text{स्थि}$$

$\int$ अयं लुप्ताकारस्तस्य चलराशेर्द्योतको ज्ञेयो यस्य तात्कालिकी गतिः

$\frac{\text{तागर, त्रि}}{\sqrt{\text{त्रि}_2 - \text{र}^2}}$ इयं संख्या भवेत् । $\int$ इदं गतिमूलस्य[1] चिह्नम् ।

अत्र त्रि = स्थिरसंख्या, अतो यदि

**४७. स्थिरसंख्यया गुणितायाश्चलराशिगतेश्चलराशिवर्गोनतत्स्थिरवर्गपदं हरो भवेत्, तदा तत्स्थिरसंख्यातुल्यव्यासार्धे तच्चलराशितुल्यजीवाया यच्चापमानं तत् कयाचित् स्थिरसंख्यया युतं तच्चलराशिमानं स्याद्, यस्य तात्कालिकी गतिः सैव भवेत् ।**

अत्र सर्वत्र चापपदेन चापात्मकं मानं ज्ञेयम्, नह्यंशात्मकम् ।

एवं पूर्वयुक्त्या

$$\text{ताग (य}^{\text{न}}) = \text{न. य}^{\text{न}-1} \times \text{ताय} = \text{ताग} \quad (\text{य}^{\text{न}} + \text{स्थि}) \text{ ।}$$

अतः

$$\int \text{न. य}^{\text{न}-1} \times \text{ताय} = \text{य}^{\text{न}}, \text{वा} = \text{य}^{\text{न}} + \text{स्थि ।}$$

अत्र न स्थिरसंख्याऽस्ति ततो जातोऽन्यः सिद्धान्तः

---

१. सं० । यं चलराशिं मूलं मत्वा तात्कालिकी गतिः साधिता तस्यैव चलमूलराशेरिति ।

४८. यदि कस्यचिच्चलराशेर्गतिगुणितश्चलराशिघातस्सैकघातसंख्यागुणितश्चान्यचलराशेर्गतिः स्यात्, तदा पूर्वचलराशिसैकघातः कयाचित् स्थिरसंख्यया युतोनोऽन्यचलराशिमानं स्यात् ।

ताग [ स्थि × फ (य) ] = स्थि × ताग फ (य)

अतः

$$\int \text{स्थि} \times \text{ताग फ (य)} = \text{स्थि} \int \text{ताग फ (य)} = \text{स्थि} \times \text{फ (य)}$$

एतेनेदं जातम्

४९. यदि स्थिरराशिगुणितचलराशिगतिरन्यचलराशिगतिः स्यात्, तदा पूर्वचलराशिः स्थिरसंख्यया गुणितोऽन्यचलराशिर्भवति ।

$$\frac{\text{स्थि}}{\text{य}^{\text{न}}} = \text{स्थि} \times \text{य}^{-\text{न}}$$ (बीजगणितरीत्या) तदा

$$\text{ताग} \left\{ \frac{\text{स्थि}}{\text{य}^{\text{न}}} \right\} = \text{ताग} (\text{स्थि} \times \text{य}^{-\text{न}}) = -\text{न.स्थि.ताय.य}^{-\text{न}-१}$$

$$\text{वा, ताग} \left\{ \frac{\text{स्थि}}{\text{य}^{\text{न}}} \right\} = \frac{-\text{न.स्थि. ताय}}{\text{य}^{\text{न}+१}} = \text{ताग} \left\{ \frac{\text{स्थि}}{\text{य}^{\text{न}}} \pm \text{अन्यस्थि} \right\}$$

$$\therefore \int \frac{-\text{न.स्थि ताय}}{\text{य}^{\text{न}+१}} = \frac{\text{स्थि}}{\text{य}^{\text{न}}} \pm \text{अन्यस्थि},$$

अतः

५०. यदि कस्यापि गतिगुणितस्थिरसंख्या चलराशिघातहृता एकोनघाततुल्येन ऋणरूपेण गुणिताऽन्यचलराशिगतिः स्यात्, तदा सा स्थिरसंख्या पूर्वचलराशिव्येकघातहृताऽन्यस्थिरसंख्यायुतोना सत्यन्यचलराशिमानं भवति ।

(४८) प्रकारे यदि

$$\int \text{न.य}^{\text{न}-१} \times \text{ताय}$$ अस्य स्थाने

$$\int \text{स्थि.य}^{\text{न}-१} \times \text{ताय},$$ एवं भवेत् तदाऽस्य स्वरूपम्

६

$$\int \frac{\text{स्थि}\times \text{न}.\text{य}^{\text{न}-१}}{\text{न}}\,\text{ताय} = \frac{\text{स्थि}}{\text{न}}\int \text{न}.\text{य}^{\text{न}-१}.\text{ताय} = \frac{\text{स्थि}}{\text{न}}\text{य}^{\text{न}} + \text{अ}$$

एवं भविष्यति, अर्थात्

५१. **चलराशिसैकघातगुणिता स्थिरसंख्या सैकघातसंख्यया भक्ताऽन्यचलराशिमानं स्यादन्यस्थिरसंख्यया युक्ता सती।**

वा न − १ = म तदा

$$\frac{\text{स्थि}}{\text{म}+१}\int(\text{म}+१).\text{य}^{\text{म}}\text{ताय} = \frac{\text{स्थि}}{\text{म}+१}\times\text{य}^{\text{म}+१} + \text{अस्थि}$$

परन्तु यदि म = − १ तदा

$$\int\frac{\text{स्थि}.\ \text{ताय}}{\text{य}} = \frac{\text{स्थि}}{०} + \text{अस्थि}$$

, अतस्तदाऽनेन सिद्धान्तेन न चलराशिसिद्धिः, अतस्तत्सिद्धयर्थं तावत् कस्य चलराशेः $\frac{\text{स्थि}.\ \text{ताय}}{\text{य}}$ इयं तात्कालिकी गतिर्भविष्यतीत्यस्य विचारः

$$\text{अ}_१ + \text{क}.\ \text{य} + \text{ख}.\text{य}^२ + \text{ग}.\text{य}^३ + \text{घ}.\text{य}^४ + \cdots\cdots = ०$$

अत्र यदि य स्थाने कस्या अपि संख्याया उत्थापने कृते सर्वदा शून्येन समा श्रेढी भवेत्, तदा $\text{अ}_१ = ०$

क = ०, ख = ० इत्याद्येवं भवेत्।

यतः यदि य = ० तदा $\text{अ}_१ = ०$

$$\therefore \text{क}\ \text{य} + \text{ख}.\text{य}^२ + \text{ग}.\text{य}^३ + \text{घ}.\text{य}^४ + \cdots\cdots = ०$$

पक्षयोर्यविभक्तेन

$$\text{क} + \text{ख}.\text{य} + \text{ग}.\text{य}^२ + \text{घ}.\text{य}^३ + \cdots\cdots = ०$$

पुनः य = ० तदा, क = ०

एवमग्रेऽपि बुद्धया विधेयम्।

$$\text{अ} + \text{क}.\text{य} + \text{ख}.\text{य}^२ + \text{ग}.\text{य}^३ + \cdots\cdots \text{अ}_१ + \text{क}_१\text{य} + \text{ख}_१\text{य}^२ + \text{ग}_१\text{य}^३\cdots\cdots$$

अत्र य स्थाने कस्या अपि संख्याया उत्थापने कृते

यदि पक्षौ समौ स्यातास्, तदा $\text{अ} = \text{अ}_१$

$\text{क} = \text{क}_१$, $\text{ख} = \text{ख}_१$, $\text{ग} = \text{ग}_१$ इत्यादि भविष्यति।

यतः पक्षान्तरेण

$$\text{अ} - \text{अ}_१ + \text{य}(\text{क} - \text{क}_१) + \text{य}^२(\text{ख} - \text{ख}_१) + \cdots\cdots + ०$$

ततः पूर्वयुक्त्या

$अ - अ_१ = ० \therefore अ = अ_१,\ क - क_१ = ० \therefore क = क_१$ इत्यादि

यदि

$र = अ^{य}$ तदा रस्य, अ, आधारे य, इति लघुरिक्थम्,

अर्थात्

$ल_{अ}{}^{र} = य$ एवं लिख्यते

$र = अ^{य} = [\,१ + (अ - १)\,]^{य},$

परन्तु द्वियुक्पदसिद्धान्तेन

$$[\,१ + (अ - १)\,]^{य} = १ + य\,(अ - १) + \frac{य\,(य - १)\,(अ - १)^{२}}{२}$$

$$+ \frac{य\,(य - १)\,(य - २)\,(अ - १)^{३}}{१.\,२.\,३} + \ldots\ldots\ldots$$

वा,[1] $[\,१ + (अ - १)\,]^{य} = १ + क.\,य + क_१\,य^{२} + क_२\,य^{३} + \ldots\ldots\ldots$

अत्र $क = (अ - १) - \frac{१}{२}(अ - १)^{२} + \frac{१}{३}(अ - १)^{३} - \frac{१}{४}(-१)^{४} + \ldots$

---

१. सं०। $\left\{ १ + (अ - १) \right\}^{य} = १ + य\,(अ - १) + \frac{य\,(य - १)}{२}(अ - १)^{२}$

$$+ \frac{य\,(य - १)\,(य - २)}{२\cdot३}(अ - १)^{३} + \ldots = १ + य\,(अ - १) + \frac{य\,(य^{२} - य)\,(अ - १)^{२}}{२}$$

$$+ \frac{(य^{३} - ३य^{२} + २य)\,(अ - १)^{३}}{२\cdot३} + \ldots = १ + य\,(अ - १) + \frac{य^{२}\,(अ - १)^{२}}{२}$$

$$- \frac{य\,(अ - १)^{२}}{२} + \frac{य^{३}\,(अ - १)^{३}}{२\cdot३} - \frac{३य^{२}(अ - १)^{३}}{२\,३} + \frac{२\,य\,(अ - १)^{३}}{२\cdot३} + \ldots\ldots$$

$$= १ + य\left\{ (अ - १) - \frac{(अ - १)^{२}}{२} + \frac{(अ - १)^{३}}{३} \right\}$$

$+ य^{२}\left\{ \frac{(अ - १)^{२}}{२} - \frac{(अ - १)^{३}}{२} \right\} + \ldots$ अतोऽत्र यदि य गुणकः $= (अ - १)$

$- \frac{(अ - १)^{२}}{२} + \frac{(अ - १)^{३}}{३} + \ldots\ldots = क$ तथा $य^{२}$ गुणकः $= \frac{(अ - १)^{२}}{२}$

$- \frac{(अ - १)^{३}}{२} + \ldots\ldots = क_१$ एवं $य^{३}$ गुणकः $= क_२$ इत्यादि, तदा

$$अ^{य} = १ + क.य + क_१य^{२} + क_२.य^{३} + \ldots\ldots$$

एवं यवर्गगुणक: = $क_१$, यघनगुणक: = $क_२$ इत्यादि,

अतः

$$अ^{य} = १ + क.य + क_१.य^२ + क_२.य^३ + \ldots\ldots$$

एवं, $$अ^{य+च} = १ + क(य+च) + क_१(य+च)^२ + क_२(य+च)^३ + \ldots$$
$$= १ + कय + २क_१.यच + ३क_२.य.च^२ + \ldots\ldots$$
$$= १ + य(क + २क_१.च + ३क_२.च^२ + \ldots\ldots) + \ldots\ldots$$

परन्तु

$$अ^{य+च} = अ^{य} \times अ^{च} = अ^{च}(१ + क.य + क_१.य^२ + क_२.य + ^३ + \ldots)$$

अत:

$$अ^{च}(१ + क.य + क_१.य^२ + क_२.य^३ + \ldots\ldots)$$
$$= १ + य(क + २क_१.च + ३क_२च^२ + \ldots\ldots) + \ldots\ldots$$

ततः पूर्वयुक्त्या

$$अ^{च} \times क = क + २क_१.च + ३क_२.च^२ + \ldots\ldots$$

परन्तु $$अ^{च} = १ + क.च + क_१.च^२ + क_२.च^३ + \ldots\ldots$$

अत:

$$क + क^२.च + क\text{-}क_१.च^२ + क\text{-}क_२.च^३ + \ldots\ldots$$
$$= क + २क_१.च + ३क_२.च^३ + \ldots\ldots$$

अतः

$$क_१ = \frac{क^२}{२},\ क_२ = \frac{क.क_१}{३} = \frac{क^३}{२\cdot३}\ \text{इत्यादि}$$

ततो जातं प्रथमसमीकरणस्य रूपम्

$$अ^{य} = १ + क.य + \frac{क^२.य^२}{२} + \frac{क^३.य^३}{२\cdot३} + \frac{क^४.य^४}{२.३.४.} + \ldots\ldots$$

कल्प्यते $य = \frac{१}{क}$ तदा

$$अ^{क^{-१}} = १ + १ + \frac{१}{२} + \frac{१}{१.२} + \frac{१}{२.३.४} + \ldots\ldots$$

अथ च $अ^{क^{१}} = इ$ तदा

$$इ = १ + १ + \frac{१}{२} + \frac{१}{२.३} = \frac{१}{२.३.४.} + \frac{१}{२.३.४.५} + ....$$

$अ^{क^{१}} = इ \therefore अ = इ^{क}$ अतः

$ल_{इ}$ अ = क, अर्थात् इ आधारे अस्य लघुरिक्थम् = क

$$(अ - १) - \frac{१}{२} (अ - १)^{२} + \frac{१}{२} (अ - १)^{३} - .......$$

यदि अ = र + १

तदा $ल_{इ} (१ + र) = र - \frac{र^{२}}{२} + \frac{र^{३}}{३} - \frac{र^{४}}{४} + .......$ वा,

$$ल_{इ} (१ + र) = र - \frac{र^{२}}{२} + \frac{र^{३}}{३} - \frac{र^{४}}{४} + ......$$

यदि र = − र तदा

$$ल_{इ} (१ - र) = - र - \frac{र^{२}}{२} - \frac{र^{३}}{३} - \frac{र^{४}}{४} - ......$$

पक्षयोरन्तरेण

$$ल_{इ} (१ + र) - ल_{इ} (१ - र) = २ (र + \frac{र^{३}}{३} + \frac{र^{५}}{५} + \frac{र^{७}}{७} + .......)$$

परन्तु यदि $ल_{इ} (१ + र) = त$, $ल_{इ} (१ - र) = द$

तदा $१ + र = इ^{त}$, $१ - र = इ^{द}$, $\frac{१ + र}{१ - र} = \frac{इ^{त}}{इ^{द}} = इ^{त-द}$

अतः $ल_{इ} (१ + र) \; ल_{इ} (१ - र) = ल_{इ} \frac{१ + र}{१ - र}$

तेन

$$ल_{इ} \frac{१ + र}{१ - र} = २ (र + \frac{र^{३}}{३} + \frac{र^{५}}{५} + \frac{र^{७}}{७} + ......)$$

अथ यदि $\frac{म - न}{म + न} = र$, तदा $१ + र = \frac{२ म}{म + न}$

$$१ - र = \frac{२ न}{म + न} \therefore \frac{१ + र}{१ - र} = \frac{म}{न}$$

